श्रीगणेशाय नमः ॥

# सिद्धान्तदर्पणः ॥

अनुग्रहाय भक्तानामिन्द्रियागोचरोऽपि सन् ।
अवताराननेकान्यो धृत्वा पाति निजाञ्जनान् ॥१॥
तस्मै प्रणम्य कृष्णाय सच्चिदानन्दरूपिणे ।
ज्ञानधर्मप्रदीपाय लोकानां शर्मदा[illegible]ने ॥
श्रीप्रियादाससूक्तिभ्यो वेदाद् भा[illegible]
सूक्तिपुष्पाणि संगृह्य तीर्थराजनि[illegible]
चतुर्वेदिमा[illegible]यव्रजनाथेन शर्मणा [illegible]
सिद्धान्तदर्पणः नाम क्रियते ग्रन्थ उत्तमः ॥ ४ ॥
राधाकृष्णकृपावेशाल्लब्धबोधेन शान्तिदः ।
ज्ञानमोक्षार्थिजीवानामीप्सितार्थप्रदायकः ॥ ५ ॥
[illegible]नां विष्णुभक्तानां श्री[illegible]सालो[illegible]लासु
[illegible]र्दयकरो भूया[illegible]मोऽय [illegible]भाविनः ।

बालानां सुखबोधाय ग्रन्थेऽस्मिन् सरलाः कृताः ॥
प्रयोगाः क्लिष्टशब्दानां शं नृणामिच्छता मया ॥७॥

इह खलु धर्मार्थकाममोक्षेषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमः पुरुषार्थः। तस्य निखिलदुःखनिवृत्युपरतनिरतिशयानन्दरूपात्मकतया नित्यत्वेनाऽनावृत्तिरूपत्वात् । न स पुनरावर्त्तते, तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।

यद् गत्वा न निवर्तन्ते तद्धाम परमं ममेति

श्रुतिस्मृतीतिहासपुराणयुक्त्यनुभवादिसिद्धस्य च मोक्षस्य तादृशरूपत्वं न निरासार्हम् । इतरेषां त्रयाणां तु तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते इति श्रुतेरापेक्षिकपुरुषार्थत्वमेव प्रतिपाद्यते । तेषामापेक्षिकत्वमपेक्ष्यैव। परीक्ष्यलोकान्कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेनेति (१) । श्रुतिर्निर्वेदं प्रदर्शयति । येनाहं नामृतास्यां

---

(१) कर्मचितान् सर्वान्लोकान् क्षयिष्णुत्वेनानित्यत्वेन निश्चित्य नास्त्यकृतः अकृतः पदार्थः कोऽपि न अस्ति । कुतः। यतः कर्मकृतः अतः अनित्यः । अकृतो मोक्षः कृतेन कर्मणा नास्तीत्यर्थः । तेन कृतेन किं सुखम्मे ? न किमपि । कर्म[illegible]भ्यो निर्वेदं वैराग्यं [illegible]पन्नवान् ॥

किमहं तेन कुर्यामिति। स्वयं ज्योतिरानन्दात्मकत्वलक्षणस्य च मोक्षस्य नित्यत्वश्रुत्या मुमुक्षा लभ्यते। तत्र च साधनाकाङ्क्षायां विधिवदधीतसाङ्गस्वाध्यायं शमादिषट्कसम्पन्नमधिकारिणम् प्रति प्रवर्त्तते तथा च श्रद्धाविवेकादिविशेषणविशिष्टोऽधिकारीति ज्ञातुं सुशकम्। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः।

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शन हेतव

इत्यादि विचारविधयो विशिष्टाधिकारिणमपेक्षमाणा अपि न सर्वजनसौलभ्यसंपादका इति सर्वजनसुगमोपयोगिसाधनान्वेषणे मन्दाधिकारिणमपि मुमुक्षा कक्षीकरोत्येव। इच्छाया अनियन्त्र्यत्वात्।

सर्वजनसुगममुपयोगि साधनं च महर्षिभिः प्रणीतं स्मृतीतिहासपुराणादि; इत्यतस्तद्वाक्यविचार एव सर्वसाधारणो मुमुक्षुभिः शरणीकरणीय इत्यायाति॥

ननु तमेतं वेदानुवचनेन ब्राह्मणाविविदि-

षन्ति; श्रोतव्यः श्रुतिवाक्येभ्यः इत्यादि श्रुतिस्मृत्यादिभ्यो वेदवचसामेव मुमुक्षूणां श्रवणमननाद्युपयोगितया श्रवणाधिकारस्य च विधिवदधीतसाङ्गस्वाध्यायपुरुषविषयतया स्मृतीतिहासपुराणादीनां कथं शरणीकरणमितिचेन्न। तादृशाधिकारस्य वैदिक (वेदाधिकारि) मात्रपरत्वात्। अनयथा।

पुराणन्यायमीमांसा धर्मशास्त्राङ्ग(१) मिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशेति(२)।

मीमांसते च यो वेदान् षड्भिरङ्गैः सविस्तरैः।
इतिहासपुराणानि स भवेद्वेदपारग (३)

इत्यादि स्मृतिवचनान्यवैदिकमुमुक्षुमप्यनुपेक्षमाणानि उपमृद्येरन्।

किञ्च–वेदाधिकारिभिरपि विधिवदध्ययनस्य सम्प्रति दुष्करत्वान्न वेदवाक्यविचार एव विशेषाग्रहः। वेदशब्दा हि दुष्पारादुरधिगमार्थाश्च

---

(१) शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति वेदाङ्गानि षट् ॥

(२) याज्ञवल्क्यस्मृतिः।

(३) व्यासस्मृतिः।

परोक्षवादो वेदोऽयं बालानामनुशासनम् ।
कर्म्ममोक्षाय कर्म्माणि विधत्ते ह्यगदं यथेति

वचने वेदस्य परोक्षवादोक्तेः । इत्थं स्वतो वेदानां दुरवगाहत्वेनागाधबोधत्वे स्थित एव निम्बरूढकटुतुम्बीन्यायेन वेदार्थनिर्णायकाना-मन्योन्यमतविरोधे पुनः का प्रत्याशा वेदार्थ-निर्णयस्य । तथा च भगवद्वाक्यम् ।

मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ।
श्रेयो वदन्त्यनेकार्थं यथाकर्म्म यथारुचीति ॥

अनायासेन वेदार्थनिर्णयदौर्लभ्यमेव हृदि कृ-त्वा भगवान् श्रीकृष्णः स्वमेव वेदार्थाभिप्रायज्ञं श्रीमद्भागवते श्रीमुखेन व्याजहार-

किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ।
इत्यस्य हृदयं लोके नान्यो मद्वेदकश्चनेति (५) ।

वेदार्थाभिप्रायश्च तत्रैव तेनकण्ठरवेणव्यक्त-मुद्घोषितः । यथा-

मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम् ।

---

(५) किं विधत्ते कर्म्मकाण्डेषु यज्ञादिभिः । किमाचष्टे-उपासनाकाण्डेषु सूर्यादिदेवताकमन्त्रैः । किं विकल्पयेत्-निषेधार्हं कृत्वा विकल्पयेदिति ।

एतावान् सर्ववेदार्थः सर्वमास्थाय मां भिदा ।
मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदतीति ।

एतच्च स्फुटीकरिष्यत उपरिष्टात् । एवं च स्मृतीतिहासपुराणादीनान्त्वतथात्वात् (सुगमार्थत्वात् मन्दाधिकारिभिरपि तदध्ययनस्य सुकरत्वात्) सौकर्य्येण वेदार्थनिर्णायकतया त एव विचारे शरणीकरणीया इति स्थितम् । तत्र तत्रचान्यत्रापि प्रयुक्तो यो वेदशब्दः परोक्षार्थाभिधायी तदर्थो यदि न आत्मविदितः सोऽपि विद्यास्थानसाहाय्येन उद्घाटनीय एवेति स्थितिः ।

अथ स्मृतीतिहासपुराणादिषु च मध्ये सुभाषितत्वात्पुराणानामेवोपादेयतमत्वमविसंवादम्प्रतिपन्नम्प्रतिभाति सर्वत्र । अनायासेन निःसंशयप्रमोत्पादकत्वात् । तेषाम्मध्ये च सर्वप्रमाणानां चक्रवर्त्तिभूतं श्रीमद्भागवतमेवोद्भावितं भगवता वेदव्यासेनेत्यग्रेतनग्रन्थे स्फुटं व्यक्तीभविष्यति ।

अत्र चास्मिन्प्रघट्टके (पूर्वोत्तरसम्बन्धानुसन्धायि सन्दर्भे)—मुख्याधिकारिणामेव मुख्ये प्रवृत्तेर्वक्तव्यतया सर्वानुजिघृक्षापरिकल्पितेतिहास-

पुराणादिवचसां सर्ववर्णाश्रमाधिकारिसौलभ्येन तान्येव सर्वैरुपादेयानि । साङ्गवेदस्य विधिवदध्ययनस्य हि दुष्करत्वात् । विशिष्टाधिकारिणां तु वेदादिषु सर्वत्राधिकारो मन्दाधिकारिणाञ्चेतिहासपुराणादिष्वेवेति व्यवस्थादरणीयेति-अभ्युपगम्य वादोऽयम्, यदितिहासपुराणादीनि न वेदपदभाञ्जीति । वस्तुतस्तुवेदशब्द इतिहासं पुराणं च स्वार्थेऽभिधेयत्वेन समुपादत्ते यतोऽत इतिहासपुराणानामभेदो वेदेनेति। तथा हि अङ्गादिभिः सममेषामपौरुषेयत्वेनाभेदो माध्यन्दिनशाखाश्रुताविव श्राव्यते;-यथा एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदो ह्यथर्वाङ्गिरस इतिहासपुराणमित्युपक्रम्य अस्यैवैतानि सर्वाणि निःश्वसितानि, इति । तथा च, वृहदारण्यकोपनिषदि वेद-एवोपसंहारे इतिहासपुराणानामपि वेदवदीश्वरनिःश्वसितत्वाविशेषोक्तेःस्फुटमुपलभ्यमानत्वात्तेषामपि वेदपदवाच्यत्वमुपपन्नमेव। अन्यथा इतिहासपुराणानां वेदाविशेषत्वास्वीकारे इतिहासपुराणाभ्यां वेदं समुपवृंहयेदिति-महाभारतवचनं कथं संगच्छेत नह्यवेदेन वेदस्य

समुपबृंहणं संभवति । नह्यपरिपूर्णसुवर्णवलयस्य त्रपुभिः काचादिभिः परिपूरणं युज्यते इति

ब्रह्मणो मुखनिर्गमनसामान्येनापि इतिहास पुराणानां वेदत्वाविशेषः सुश्लिष्यते । तथा हि स्कान्दे प्रभासखण्डे ।

पुरा तपश्चचारोग्रममराणां पितामहः ।
आविर्भूतास्ततो वेदाः सषडङ्गपदक्रमाः ॥
ततः पुराणमखिलं सर्वशास्त्रमयं ध्रुवम् ।
नित्यशब्दमयं पुण्यं शतकोटि प्रविस्तरम् (६)
निर्गतं ब्रह्मणो वक्त्रात्तस्य भेदं निबोधत ॥

ब्राह्मं पुराणं प्रथममित्यादि । अत्रसर्वशास्त्रमयं ध्रुवं नित्यशब्दमयमित्यादि विशेषणैरपौरुषेयत्वं च तेषां सुतरां फलत्येव । श्रीमद्भागवते तु प्रतिपदोक्तमेव तेषां वेदत्वम् । यथा तृतीयस्कन्धे ऋग्यजुः सामाथर्वाख्यान् पूर्वादिभिर्मुखैरित्यादिप्रकरणे–

इतिहासपुराणानि पञ्चमं वेदमीश्वरः ।
सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शन इति ॥

अन्यत्र चापिसाक्षादेवपुराणेतिहासान्तं वेदशब्दः प्रयुक्तो भविष्यपुराणादौ । यथा–

(६) अत्र च शतकोटि संख्या ब्रह्मलोके प्रसिद्धेति ज्ञेयम् ।

कृत्स्नं च पञ्चमं वेदं यन्महाभारतं स्मृतमिति ।

पुराणं पञ्चमोवेद इति ।

इतिहासः पुराणं च पञ्चमो वेद उच्यत इति ।

वेदानध्यापयामास महाभारतपञ्चमानिति च ।

सामवेदे कौथुमीयशाखायां छान्दोग्योपनिषदि च यथा--ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदं ह्याथर्वणं चतुर्थम्, इतिहासंपुराणं पञ्चमं वेदानां वेदमिति, तदेवमितिहास पुराणानां वेदत्वं सिद्धम् ।

अथ वेदत्वाविशेषादवैदिकानधिकार इति दोष उपन्यस्येत, तथा सति सूतादीनामनधिकार आपत्तेरिति च चोद्येत; तत्रोच्यते–

द्वैपायनेन यद्‌बुद्धं ब्रह्माद्यैस्तन्नबुद्ध्यते ।
सर्वबुद्धं स वै वेद तद् बुद्धन्नान्यगोचरः ।

स्कान्दे–नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम्
किञ्चित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥
गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरः सराः ।
शरण्यं शरणं जग्मुर्नारायण मनामयम् ॥
तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ।

अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् वेदानुज्जहार स्वयम्" ॥

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
इति भारतमाख्यानं कृपया मुनिना कृत-

मित्यादि वचनबलादवैदिकाधिकारोऽपि निषादस्थपतिन्यायेन प्रसिद्ध्यति । किं हि वचनेन न क्रियते, न हि वचनस्यातिभार इति न्यायात् । मुनिनाकृतमित्याद्युक्त्याऽपौरुषेयत्वानुपपत्तिस्तु शाखाप्रणयनन्यायेन वेद इवात्रापि समाधीयते ।

ऋग्वेदोऽथ यजुर्वेदः सामवेदोह्यथर्वणः ।
अधीतास्तेन येनोक्तं हरिरित्यक्षरद्वयम्-

इत्यादिषु विष्णुधर्मादि वचनेषु ऋग्वेदादीनाम्, इतिहासपुराणानाञ्चोपलक्षणत्वेन विवक्षितत्वान्न भगवन्नाम्न इतिहासपुराणानां च माहात्म्यस्य न्यूनतापत्तिरिति दिग्दर्शनम् ।

शब्दतः सामान्येऽप्यर्थतस्तु इतिहास पुराणानामाधिक्यं गीयते वेदेभ्यः । तथा हि नारदीय उक्तम्-

वेदार्थादधिकम्मन्ये पुराणार्थं वरानने ।
वेदाः प्रतिष्ठिता देवि पुराणे नात्र संशय इति ।

स्कान्दे प्रभासखण्डे च ।

वेदवन्निश्चलं मन्ये पुराणार्थं द्विजोत्तमाः ।
वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः ।
बिभेत्यल्पश्रुताद्वेदो मामयं चालयिष्यति ।
इतिहासपुराणैस्तु निश्चलोऽयं कृतःपुरा ।
यन्न दृष्टं हि वेदेषु तद्दृष्टं स्मृतिषु द्विजाः ।
उभयो र्यन्न दृष्टं तत् पुराणैः परिगीयते ।
यो वेदचतुरो वेदान् साङ्गोपनिषदो द्विजाः ।
पुराणं नैव जानाति न च सस्याद्विचक्षण इति

अपरञ्च—वेदविप्लवे दोषस्मरणमिव पुराण विप्लवेऽपि दोषः स्मर्यते ।

पुराणमन्यथा कृत्वा तिर्यग्योनिमवाप्नुयात् ।
सुदान्तोऽपि सुशान्तोऽपि नगतिं प्राप्नुयात्क्वचि-

दिति नारदीये । इत्थञ्चैताभिरुपपत्तिभिरितिहासपुराणानां प्रामाण्यं सुस्थितं यस्मात्तस्मादितिहासपुराणादिविचार एव चारुः श्रेयसे शरणीकरणीय इति सुष्ठुतरां सिद्धम् प्रेक्षावताम् ।

अथ सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ॥
पञ्चाङ्गं तु पुराणं स्या दाख्यानमितरत् स्मृतमिति

लक्षणानां पुराणानाम् प्रवृत्तिनिमित्तत्वेन प्रामाण्ये स्थितेऽपि तेषामपि तत्तत्पुराणसंख्याया वेदशाखानामिव दुर्निरूप्यत्वात्सामग्र्यरूपेण सम्प्रत्यप्रचरद्रूपत्वान्नानादैवतप्रतिपादनप्रायत्वाच्चार्वाचीनैः क्षुद्रबुद्धिभिर्दुरधिगमतदर्थत्वमिति तदवस्थ एव तत्संशय इति चेन्न। पुराणानां सात्त्विकादि विभागस्य तेषु स्वयमुक्तत्वात्सत्त्वादिपुरुषप्रकृतिभेदेनाधिकारभेदाद्धेतु तारतम्यमनुसृत्य तत्त्वज्ञानादि फलतारतम्यस्यह्यवर्जनीयत्वात्तत्वज्ञानाय सात्त्विकानामेव तेषां सात्त्विकैरुपादेयत्वस्य श्रेयस्त्वेनाभ्यर्हितत्वात्।

भक्त्या भागवतं शास्त्रं न व्युत्पत्त्या न टीकया।
गृहिण्या गृहकार्याणि न पुंश्चल्या न वेश्यया-

इत्युक्तेर्भगवत्कृपया श्रीमद्भागवतार्थस्य सुज्ञेयत्वाच्च (७) संशयनिरासः सुशकः ॥

तथा च मत्स्यपुराणम्।

---

(७) गौरीतन्त्रे च-षट्शास्त्रवेत्ता निगमप्रवीणस्तथागमव्याकरणादिनिष्ठः। विना हरेर्भागवतप्रसादं जानातिको भागवतान्तरार्थमिति ॥

सात्त्विकेषु पुराणेषु माहात्म्यमधिकं हरेः ।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ।
तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च ।
संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते (८)

इति पुरुषाणां पृथक् पृथग् रुचिभेदेन च यथा यथमधिकाराद् राजसतामसपुराणानां यथेष्टं फलोपधानान् न नितान्तफल्गुतेति । इत्थं च,

सत्त्वात्संजायते ज्ञानं सत्त्वं यद्ब्रह्मदर्शनमिति

न्यायात्, सात्विकमेव पुराणादिक मनन्यसाध्यनिःश्रेयसपदार्थसाधनज्ञानाय प्रबलमित्यवधारिते, निधार्यते—यत्सात्विकानामपि पुराणानां मध्ये प्रमाणचक्रवर्तिभूतं श्रीमद्भागवतमेवेति ॥ तद्धि खलु, सर्वपुराणजातमाविर्भाव्य ब्रह्मसूत्रं च प्रणीयाप्यपरितुष्टेन तत्रभवता वेदव्यासेन भगवता निजसूत्राणामकृत्रिमभाष्यभूतं समाधिलब्धमुद्भावितम् । यस्यामेव सर्वशास्त्रार्थसमन्वयः सर्वसम्मतस्तां गायत्रीमधिकृत्य तस्य प्रवृत्तत्वाच्चेति ।

---

(८) संकीर्णेषु व्यतिकरेण सत्त्वरजस्तमोमिश्रेषु । सरस्वत्या नानावाण्यात्मकतदुपलक्षिताया नाना देवताया इत्यर्थः ।

सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः ।
तद्वृत्तान्तोद्भवं लोके तच्च भागवतं स्मृत मिति

स्कान्दे तु यत्सारस्वतकल्पमधिकृत्येत्युक्तन्तच्च गायत्र्या भगवत्प्रतिपादकवाग्विशेषरूपसरस्वतीत्वादुपयुक्तमेव । तस्य स्वरूपमुक्तं मात्स्ये-

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमिष्यते इति ॥

अत्र गायत्रीशब्देन लक्षणया तत्सूचकतदव्यभिचारि धीमहीति पदसंवलितस्तदर्थ एवेष्टो विभाव्यते । सर्वेषामपि मन्त्राणामादिरूपायास्तस्याः साक्षाल् लेखनानर्हत्वात् । तस्य तदर्थता च, जन्माद्यस्य यतः, तेनेब्रह्महृदेति पदै रविप्रतिपन्नमेव ज्ञायते इति ॥ अग्निपुराणे च-

ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धवर्णितः ।
हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथेति ॥

अजातपक्षा इवेत्यादिपद्यै शुद्धप्रेमोद्गारमयत्वेनैव श्रीमद्वृत्रवधोऽसौ विलक्षणत्वाच्छ्रीमद्भागवतलक्षणेषु पुराणान्तरे गण्यते-

वृत्रासुरवधोपेतं तद्भागवतमिष्यत इति ।

हयग्रीवशब्देन चात्राश्वशिरादधीचिरेवाभिप्रेत इति प्रतीयते। तेनैव हि प्रवर्त्तिता नारायणवर्माख्या ब्रह्मविद्या । श्रीमद्भागवते प्रथमस्कन्धे सूतश्चाह–

इदं भागवतं नाम पुराणं ब्रह्मसंमितम् (९) ।
उत्तमश्लोकचरितं चकार भगवानृषिः ।
सर्ववेदेतिहासानां सारं सारं समुद्धृतम् ॥
निःश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महदिति(१०)

---

(९) ब्रह्मसंमितं श्रीकृष्णतुल्यमित्यर्थः । तदुक्तं श्री मद्भागवतमहात्म्ये–

स्वकीयं यद्भवेत्तेजस्तद्धै भागवतेऽदधात ।
तिरोधाय प्रविष्टोऽयं श्रीमद्भागवतार्णवम् ।
तेनेयं वाङ्मयी मूर्त्तिः प्रत्यक्षा वर्तते हरेः ।
सेवनाच्छ्रवणात्पाठाद्दर्शनात्पापनाशिनीति ॥

पुनश्चतत्रैव (श्रीमद्भागवते)–

कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह ।
कलौ नष्टदृशामेष पुराणार्कोऽधुनोदित इति ॥

(१०) धन्यं सर्वोतमं श्रेयस्साधनम् । पुनः स्वस्त्ययनं निःश्रेयस्थानम् मोक्षस्वरूपमित्यर्थः । ज्ञानधर्मयशःश्रीवैराग्यैश्वर्यैः सह गते कलौ नष्टदृशां नष्टमार्गामार्गज्ञानानां सम्बन्धी एष पुराणस्वरूपः सूर्यस्तै स्तैर्ज्ञानादिभिः सहाधुनोदितः । यथा येन स्वरूपेण सूर्योऽस्तं गच्छति स पुनस्तेनैव रूपेणोदेति । अतः

अनुबन्ध चतुष्टयं चास्योक्तं गौरीतन्त्रे श्रीमद्भागवतमाहात्म्ये—
प्रयोजनं हरेर्भक्तिरन्यः स्यादानुषङ्गिकः ।
आश्रयाश्रयिसंबन्धः श्रद्धावन्तोऽधिकारिणइति

---

श्रीकृष्णस्यार्कत्वात् । कृष्णद्युमणिनिम्लोचे इति वचनात् । तस्माद्यथा श्रीकृष्णश्रवणपूजनभजनध्यानात्कृष्णैकरसिकत्वं भवति तथा भागवतस्य श्रवणभजनपूजनपठनात्कृष्णैकरसिकत्त्वमित्यर्थः

स्कान्दे—शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसंग्रहैः ।
न यस्य तिष्ठते गेहे शास्त्रं भागवतं कलौ ॥
कथं स वैष्णवो ज्ञेयः शास्त्रं भागवतं कलौ ।
गृहे न तिष्ठते यस्य स विप्रश्चाधमाधमः ।
यत्र यत्र भवेद्विप्र शास्त्रं भागवतं कलौ ।
तत्र तत्र हरिर्याति त्रिदशैः सह नारद ॥
यः पठेत्प्रयतो नित्यं श्लोकं भागवतम्मुने ।
अष्टादशपुराणानां फलमाप्नोति मानव इति ।

मोक्षधर्मेषु च ।

दृष्टं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आमथ्यमतिमन्थेन ज्ञानोदधिमनुत्तमम् ।
नवनीतं यथा दध्नो मलयाच्चन्दनं यथा ।
आरण्यकं च वेदेभ्य ओषधीभ्योऽमृतं यथा ।
समुद्धृतमिदं ब्रह्मन्कथामृतमिदं तथा ।
तपोनिधे त्वयोक्तं हि नारायणकथाश्रयमिति ।

पाद्मे—रात्रौ तु जागरः कार्यः श्रोतव्या वैष्णवी कथा ।
गीता नाम सहस्रं च पुराणं शुकभाषितम् ॥

अम्बरीषशुकप्रोक्तं नित्यं भागवतं शृणु ।
पठस्व स्वमुखेनाऽपि यदीच्छसि भवक्षयमिति ।

स्कान्दे—श्रीमद्भागवतं भक्त्या यः पठेद्धरिसन्निधौ ।
जागरे तत्पदं याति कुलवृन्दसमन्वित इति ।

श्रीमद्भागवतमाहात्म्ये—

सत्यलोके तुलां बद्ध्वाऽतोलयत् साधनान्यजः ।
लघून्यन्यानि जातानि गौरवेण इदं महत् ॥
तावत् संसारचक्रे ऽस्मिन् भ्रमते ऽज्ञानतः पुमान् ।
यावत् कर्णगता नास्ति शुकशास्त्रकथा क्षणम् ।
अश्वमेधसहस्राणि वाजपेयशतानि च ।
शुकशास्त्रकथायाश्च कलां नार्हन्ति षोड़शीम् ।
यस्तु भागवतं शास्त्रं वाचयेदर्थतो ऽनिशम् ।
जन्मकोटिकृतं पापं नश्यते नात्र संशय इति ॥

अन्यत्र च—दुर्लभैव कथा लोके श्रीमद्भागवतोद्भवा ।
कोटिजन्मसमुत्थेन पुण्येनैव तु लभ्यते ॥

धर्मार्थिनां धर्मदात्री मुक्तीच्छूनां च मुक्तिदम् ।
भक्तीच्छूनां परं भक्तिदातृ भागवतं प्रिये ।
किं तस्य शक्रसम्पत्त्या पारमेष्ठ्येन वाथ किम् ।
सत्सम्पत्त्या ब्रह्मलक्ष्म्या यो भागवतनिर्वृतः ।
धनपुत्रांस्तथा दारान् वाहनादिपशून् गृहान् ।
असापत्न्यं च राज्यं च दद्याद्भागवती कथा ।
दुःखदारिद्र्य दौर्भाग्य पापप्रक्षालनाय च ।
कामक्रोधजयार्थं हि कलौ धर्मोऽयमीरितः ॥
कलौ युगे विशेषेण पुराणश्रवणादृतः ।

नास्ति धर्मः परः पुंसां नास्ति मुक्तिपथः परः ॥
पुराणश्रवणाद्विष्णो र्नास्ति संकीर्त्तनात्परम् ।
कलौ हीनायुषो मर्त्त्या दुर्बलाः श्रमपीड़िताः ।
दुर्मेधसो दुःखभाजो धर्माचारविवर्जिताः ।
इति सञ्चिन्त्य कृपया भगवान् वादरायणः ।
हिताय तेषां विदधे पुराणाख्यं सुधारसम् ॥
श्रीमद् भागवतस्यापि पुराणस्यैकमक्षरम् ।
यः पठेत् परया भक्त्या गोप्रदानफलं लभेत् ।
वन्दे भागवतं शास्त्रं वेदसूत्रार्थ मुत्तमम् ।
सेवितं मुनिभिर्यद्वै विमुखैरसुरैर्विनेति ।

श्रीमद्भागवते—धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किंवा परैरीश्वरः ।
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ।
निगमकल्पतरो र्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहोरसिका भुवि भावुका इति
सर्ववेदान्तसारं हि श्रीभागवतमिष्यते ।
तद्रसामृततृप्तस्य नान्यत्र स्याद् रतिः क्वचित् ॥
श्रीमद्भागवतं पुराणममलं यद् वैष्णवानां प्रियम् ।
यस्मिन् पारमहंस्यमेव ममलं ज्ञानं परं गीयते ।
यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतम्
शृण्वन्विप्रपठन् विचारणपरो भक्त्या विमुच्येन् नरः ॥
निम्नगानां यथागङ्गा देवानामच्युतो यथा ।
वैष्णवानां यथा शम्भुः पुराणानामिदं तथेति च ॥

पुराणानाम्मध्ये राज्ञ इव राजमान्यत्वादेव श्रीमद्भागवतस्य दानप्रस्तावे मात्स्ये आसने सिंहसमन्वयउक्तः । तथाहि

लिखित्वा तच्च योदद्याद्धेमसिंहसमन्वितम् ।
प्रौष्ठपद्यां पौर्णमास्यां स याति परमां गतिमिति ।

हेमसिंहो हेमसिंहासनमित्यर्थः । सिंहाकारं स्वर्णमण्यादि घटितं राजोपवेशनयोग्य मासनं सिंहासनम् । एतैर्माहात्म्यकथनेन श्रीमद्भागवतस्यैवाभ्यासावश्यकत्वं सर्वशास्त्रेषु श्रैष्ठ्यं च प्रतिपादयद्भिर्वचनपुञ्जैश्च तस्य श्रीमद्भागवतस्य चतुर्वर्गसाधकत्वं प्रदर्श्यते यतोऽतस्तत्कामैर्विशेषतस्तु परमार्थविविदिषुभिः श्रीमद्भागवतमेव विचारणीयमिति स्थापितम् । पुराणज्ञगुरुप्रशंसावादैश्च श्रीमद्भागवतस्योत्कर्षः श्रीमद्भागवतमाहात्म्ये सूच्यते । यथा—

बालो युवाथवृद्धो वा दरिद्रो दुर्बलोऽपि वा ।
पुराणज्ञः सदा वन्द्यः पूज्यश्च सुकृतार्थिभिः ।
नीचबुद्धिं न कुर्वीत पुराणज्ञे कदाचन ।
यस्य वक्त्राम्बुजाद्वाणी कामधेनुः शरीरिणाम् ।
गुरवः सन्ति लोकेऽस्मिञ्जन्मतो गुणतश्चये ।
तेषामपि च सर्वेषां पुराणज्ञः परो गुरुः ।
भवकोटिसहस्रेषु भूत्वा भूत्वावसीदताम् ।
ददात्यपुनरावृत्तिं कोऽन्यस्तस्मात्परो गुरुरिति ।
एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वा ह्यनृणी भवेत् ।
एकाक्षरप्रदातारं यो गुरुं नाभिमन्यते ।
शुनां योनिशतं गत्वा चाण्डालेष्वपि जायते—इत्यत्रिः ।

गुरुलक्षणं तु—प्राकृतैः संस्कृतैश्चैव गद्यपद्याक्षरैस्तथा ।
देशभाषादिभिश्चैव बोधयेत्सगुरुः स्मृत इति ॥

शिवधर्मे पाठान्तरम्—

संस्कृतैः प्राकृतैर्वाक्यै र्यः शिष्यमनुरूपतः ।
देशभाषाद्युपायैश्च बोधयेत् सगुरुः स्मृत इति ॥

भगवन्मतिरनपेक्षः सुहृदो दीनजनेष्वनुकम्पः । बहुधा बोधन चतुरो वक्तासंमानितो मुनिभिरिति च । विद्यादानं चाध्यापनेन, व्याख्यया, विलिख्यार्पणेन च सम्भवतीत्यतो धीमद्भिर्निबन्धः क्रियत इति स्मृतितत्त्वोक्तेः ॥ श्रीमद्भागवते टीकाकारा निबन्धकृतश्च संप्रदायिनां गुरवो भवन्ति । तत्र श्रीहनुमद्भाष्य, वासनाभाष्य, सम्बन्धोक्ति, विद्वत्कामधेनु, तत्त्वदीपिका, भावार्थदीपिका, परमहंसप्रिया, शुकहृदयादिकानां कर्तारष्टीकाकाराः । मुक्ताफल, हरिलीलामृत, भक्तिरत्नावल्यादीनां रचयितारो निबन्धकाराश्च । तथा च विशिष्टशिष्टपरिग्रहादपि श्रीमद्भावतस्य प्रामाण्यमुपोद्बलितम् । वस्तुतस्तु जगतिद्वौदातारौ संवृत्तौ । भगीरथः परीक्षितश्च । यथा भण्यते

ते द्वे दाने प्रयच्छेत गङ्गाभागवताह्वयोः ।
पवित्रीकरणार्थाय वंशयोः सूर्य सोमयोरिति ।

सूर्यसोमाभ्यामपि तथा तद्वंशयोः पवित्रता न जाता, यथा गङ्गाश्रीमद्भागवताभ्यामिति भावः ।

इत्थं श्रीमद्भागवतस्य प्रामाण्ये विनिर्णीते तत्कथाकथनश्रवणविधानं संक्षेपेणनिर्दिश्यते—

प्रियाऽमित्रप्रभूणां यदुपदेशः सताम्भवेत् ।
काव्येतिहासवेदानां तथा भागवतस्य हीति ।

मुक्ता फले च—वेदाः पुराणं काव्यं च प्रभुर्मित्रं प्रियेव च ।

बोधयन्तीति हि प्राहु स्त्रिवृद् भागवतं स्मृतमिति

अत्र लोके त्रिविधा जनाः । सरला वक्राः स्तब्धाश्च क्रमशो मिष्टा म्लकटुवाक्याहाः । तत्र न कस्यापि त्युक्तुं योग्यमिदं श्रीमद्भागवतम् । तत्र मिष्टवाक्यं यथा—

न तथा मे प्रियतम आत्मयोनि र्न शङ्करः ।
न च संकर्षणो न श्री र्नैवात्मा च यथा भवानिति ।

निरपेक्षं मुनिं शान्तमित्यादि च । अम्लवाक्यं यथा—

मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।
याहि सर्वात्मभावेन यथा स्या ह्यकुतो भयः ॥

सर्वत्यागेन स्वीयममतां प्रदर्श्य उपदेशो मित्रोपदेशः । कटुवाक्यं तु—

यद्यधर्मरतः सङ्गादसाधु रजितेन्द्रियः ।
कामात्मा कृपणो लुब्धः स्त्रैणो भूतविहिंसकः ।
पशूनविधिनालभ्य प्रेतभूतगणान् यजन् ।
नरकानऽवशो जन्तु र्गत्वा यात्युल्वणं तम इति ।

भयं प्रदर्श्योपदेशो राजोपदेशः ।

काव्येतिहासवेदानामत्रैव चरितार्थतेति ।

हंसभृङ्गवृषभोष्ट्रादि दृष्टान्तभेदान्नानाविधाः श्रोतारः । क्षीरनीरभेदवत्कथितवृत्तनिर्णायको हंसः । पुष्पेभ्यो मधुवत् कथितवृत्तात् सारवाही भृङ्गः । गुड़खलयोर्भोजने सामान्यास्वादवत् कथितवृत्तशान्ताशान्तरसास्वादे समो वृषभः । सकण्टकबब्बूलादि भोजनेऽधिकस्वादवत्कथितवृत्तकामिनी कथादौ रसिक उष्ट्रः ।

वक्तृलक्षणं तु—

वक्तुरेव हि तज्जाड्यं श्रोता यत्र न बुध्यते ।
पुलकाश्रुविहीनत्वं तन्मान्द्यं वक्तु रेव हि ।
बोधयेदर्थतो वक्ता युक्त्या सत्यार्थमुद्रया ।
समाहितमतिः शिष्यः शास्त्रसम्पन्नसद्गुरोः ।
पुराणज्ञः शुचिर्दान्तः शान्तो विजितमत्सरः ।
व्यासासनं समारूढो यदा पौराणिको द्विजः ।
आसमाप्तेः प्रसङ्गस्य नमः कुर्यान्न कस्यचित् ।
उपक्रमोपसंहारे हरिकीर्त्तनमाचरेत् ।
कथानन्तरमेवस्यान्न यावत्पुस्ति बन्धनम् ॥
न तावत्सरसः शुभ्रु समुत्तिष्ठेत् कदाचन ।
पुराणे पठ्यमाने ये निर्गच्छन्ति नराधमाः ।
कुम्भीपाकेषु पच्यन्ते यावदिन्द्राश्चतुर्दश ॥
देवस्थाने हि नित्यं वै वैष्णवं पुस्तकं नृप ।
तस्मिन् प्रपूजिते विप्र पूजितः कमलापतिः ।
असंपूज्य हरेर्ज्ञानं येऽधीयते लिखन्ति च ।
अव्यापृताः प्रयच्छन्ति शृण्वन्ति धारयन्ति च ।
विक्रीणन्ति च लोभेन कुज्ञाननिलयेन च ।
असंस्कृतप्रदेशेषु यथेष्टं स्थापयन्ति च ।
हरेर्ज्ञानं यतः क्षेमं प्रत्यज्ञाच्च प्रकाशते ।
अधीयते ऽसमर्थाश्च यः प्रसादं करोति च ।
अन्यायतः प्रयच्छन्ति शृण्वन्त्युच्चारयन्ति च ।
अशुचिश्चा शुचिस्थाने यः प्रवक्ति शृणोति च ।
इति सर्वं समासेन ज्ञाननिन्दा समं स्मृतम् ।
शास्त्रमत्र समाख्यातं यद्भक्तिप्रतिपादकम् ।
वैष्णवानि तु शास्त्राणि ये शृण्वन्ति पठन्ति च ।

धन्यास्ते मानवा लोके तेषां कृष्णः प्रसीदति ।
वैष्णवानि तु शास्त्राणि ये जपन्ति गृहे नराः ।
सर्वपापविनिर्मुक्ता भवन्ति सुरवन्दिताः ।
तिष्ठते वैष्णवं शास्त्रं लिखितं यस्य मन्दिरे ।
तत्र नारायणो देवः स्वयं वसति नारद ॥

नोशङ्कनीयं हि पुराणवाक्यं दिव्यप्रभावात्सततं मुनीनाम् ।

पठ्यमानं पुराणं वै यो निन्दति विमूढधीः ।
भङ्गं कुर्यादुपायेन त्यागं कुर्यादऽभक्तितः ।
अश्रद्धया च शृणुयात्तस्य पापं वदाम्यहम् ॥
कुम्भीपाके वसेत्तावद् यावदिन्द्राश्चतुर्दश ।
ये धूर्त्ता ये च दुर्वृत्ता ये चान्ये विजिगीषवः ।
तेषां कुटिलवृत्तीनामग्रे नैव वदेत कथाम् ।
न दुर्जनसमाकीर्णे न शूद्रश्वपचावृते ।
देशे न द्यूतसदने वदेत् पुण्य कथां सुधीः ॥
विशेषतः कर्मजड़ा विप्रा मीमांसकाः प्रिये ।
श्रीमद्भागवतास्वादरहिताः सहिता नरैः ।
तेषा मग्रे न वक्तव्यं गोपनीयं च शाश्वतम् ॥
न वक्तव्यं न वक्तव्यं न वक्तव्यं बहिर्मुखे ।
अन्तर्मुखे तु वक्तव्यं यत्नतः प्राणवल्लभे ।
श्रोतव्यं रसिकादेव वक्तव्यं रसिकाग्रतः ।
स्ववासनानुसारेण विविधं हि यतो मनः ।
सुग्रामे सुजनाकीर्णे सुक्षेत्रे देव मन्दिरे ।
पुण्ये नदनदी तीरे वदेत् पुण्यकथां सुधीः ।
श्रद्धाभक्तिसमायुक्ता नान्यकार्येषु लालसा ।

वाग्यताः शुचयोऽव्यग्राः श्रोतारः पुण्यभागिनः ।
श्रीभागवतगोष्ठ्यां यः प्रभुत्वं गर्वमेव वा ।
कलिं गिरिसुते कुर्यात् कोऽन्यः पापतरस्ततः !
पुराणं ये त्वसंपूज्य ताम्बूलाद्यैरुपायनैः ।
शृण्वन्ति च कथां भक्त्या दरिद्राः स्यु र्न संशयः ॥
अपूज्य पाठकर्त्तारं श्लोकमेकं शृणोति यः ।
नासौ पुण्यमवाप्नोति शास्त्रचौरः स्मृतो हि सः ॥
अवज्ञया न श्रोतव्यं शास्त्रमेतद्विचक्षणैः ।
निन्दन्ति ये पुराणज्ञान् कथां वा पापहारिणीम् ।
ते वै जन्मशतं मर्त्याः शुनकाः सम्भवन्ति च ।
कथायां वर्त्तमानायां ये वदन्ति नराधमाः ।
ते गर्दभाः प्रजायन्ते कृकलासास्ततः परम् ॥
यस्तु श्रुत्वा भागवतं वक्तृकूणनमाचरेत् ।
हेय बुद्ध्या तस्य शुद्धि र्नास्ति नास्ति धरात्मजे ।
कदाचिदपि ये पुण्यां न शृण्वन्ति कथान्नराः ।
ते भुक्त्वा नरकान् घोरान् भवन्ति वनशूकराः ॥
मुहूर्त्तं वापि शृणुयात्कथां पुण्यां दिने दिने ।
यदि प्रतिदिनं श्रोतुमशक्तः स्यात्तु मानवः ।
पुण्यमासेऽथवापुण्यतिथौ स शृणुयादपि ।
तेन पुण्यप्रभावेण पापान्मुक्तो भवेन्नरः ।
ये कथा मनुमोदन्ते कीर्त्यमानां नरोत्तमाः ।
अशृण्वन्तोऽपि ते यान्ति शाश्वतम् परमम्पदम् ।
यत् फलं सर्वयज्ञेषु सर्वदानेषु यत् फलम् ।
सकृत् पुराणश्रवणात्तत्फलं विन्दते नरः ।

कथायां कीर्त्यमानायां विघ्नं कुर्वन्ति ये शठाः ।
कोट्यब्दान् नरकान् भुक्त्वा भवन्ति ग्रामशूकराः ।
अभक्ता ये कथां पुण्यां शृण्वन्ति मनुजाधमाः ।
तेषां पुण्यफलं नास्ति दुःखं स्याज्जन्मजन्मनि ।
ये श्रावयन्ति मनुजान् पुण्यां पौराणिकीं कथाम् ।
कल्पकोटिशतं साग्रं तिष्ठन्ति ब्रह्मणः पदे ।
पुराणज्ञस्य यच्छन्ति ये सूत्रवसनं नवम् ।
भोगिनो ज्ञानसंपन्नास्ते भवन्ति भवे भवे ।
आसनार्थं प्रयच्छन्ति पुराणज्ञस्य ये नराः ।
कम्बलाजिनवासांसि मञ्चम् फलकमेव च ।
स्वर्गलोकं समासाद्य भुक्त्वा भोगान् यथेप्सितान् ।
ते स्थित्वा ब्रह्मलोकेषु पदं यान्ति निरामयम् ।
वाचके परितुष्टे तु तुष्टाः स्युः सर्वदेवताः ।
अतः संतोषयेच्छक्त्या भक्तिश्रद्धान्वितः पुमान् ॥
तस्य पुण्यफलं पूर्णं भवत्येव न संशयः ।
हिरण्यतिलवस्त्राद्यै र्धेनुभूमिप्रदानतः ।
संतोषयेद्वाचकं तु तस्मिंस्तुष्टे फलं लभेत ॥
देवताश्च प्रसीदेयु रर्चिते वाचके गुरौ ।
न यज्ञैस्तुष्टिं सायान्ति देवाः प्रेक्षणकैरपि ।
बलिभिः पुष्पपूजाभि र्यथा पुस्तकवाचनैः ।
पुराणवाचकं विप्रं पूजयेद्भक्तिभावतः ।
गोभूहिरण्यवस्त्रैश्च गन्धपुष्पादिभिर्मुने ।
वित्तशाठ्यन्नकुर्वीत दानादीनां फलं यतः ।
पुराणं वाचयेद्विप्रं सर्वकामार्थ सिद्धये ।

सुवर्णं रजतं वस्त्रं पुष्पं माल्यं च चन्दनम् ॥
यो दद्यात्पुस्तकं भक्त्या स गच्छेद् धरिमन्दिरम् ।
कुर्वन्ति विधिनानेन संपूर्णं पुस्तकं च ये ।
तेषां नामानि लिखति चित्रगुप्तोऽर्चितो द्विज ।
ये महापातकैर्युक्ता उपपातकिनश्च ये ।
पुराणश्रवणादेव ते यान्ति परमम्पदम् ।
कथायां कथ्यमानायां विवादं ये प्रकुर्वते ।
तेषां द्रष्टा स्वयं विष्णुर्यावदाभूतसंप्लवम् ॥
हसते कीर्त्यमानं यश्चरितं ज्ञानदुर्बलः ।
न तस्य नरकान्मुक्तिः कल्पान्तेऽपि भविष्यति ।
कथायां कीर्त्यमानायां ये गच्छन्त्यन्यतोनराः ।
भोगान्तरे प्रणश्यन्ति तेषां दाराश्च संपदः ।
सोष्णीषमस्तका ये च कथां शृण्वन्ति पावनीम् ॥
ते बलाकाः प्रजायन्ते पापिनो मनुजाधमाः ।
ताम्बूलं भक्षयन्तो ये कथां शृण्वन्ति पावनीम् ।
स्वविष्ठां खादयन्त्येतान्नरके यमकिङ्कराः ।
ये च तुङ्गासनारूढाः कथां शृण्वन्ति दाम्भिकाः ।
अक्षयान्नरकान् भुक्त्वा ते भवन्त्येव वायसाः ।
ये च वीरासनारूढा ये च मञ्चकसंस्थिताः ।
शृण्वन्ति सत्कथां ते वै भवन्त्यर्जुनपादपाः ।
असंप्रणम्य शृण्वन्तो विषवृक्षा भवन्ति वै ।
तथा शयानाः शृण्वन्तो भवन्त्यजगरा नराः ।
ये शृण्वन्ति कथां वक्तुः समानासनमाश्रिताः ।
गुरुतल्पसमं पापं प्राप्य यान्त्यधमां गतिम् ।

साधुसङ्गाद्भवेद्विप्र शास्त्राणां श्रवणं प्रभोः ।
हरिभक्तिर्भवेत् तस्मात्ततो ज्ञानं ततोगतिः ।
न रोचते कथा भूमौ पापिष्ठाय जनाय वै ।
वैष्णवः स तु विज्ञेयः पापिष्ठप्रवरो द्विज ।
श्रीकृष्णस्य कथां श्रुत्वा नन्दी भवति वैष्णवः ।
असत्यां तां च यो ब्रूयाज्ज्ञेयः स पापिनां गुरुः ।
यस्मिन्यस्मिन्स्थले विप्र कथा कृष्णस्य वर्त्तते ।
तस्मात्तस्माज्जगन्नाथो याति त्यक्त्वा न कुत्रचित् ।
कृष्णस्य यः कथारम्भे कुर्याद्विघ्नन्नराधमः ।
नरकान्निष्कृति र्नास्ति मन्वन्तरशतावधि ।
ये पुराणकथां श्रुत्वा निन्दन्त्युपहसन्ति वै ।
तेषां करस्थानरका बहुक्लेशकराः सदा ।
जन्मान्तरकृतं पापं तच्छ्रवणादेव नश्यति ।
श्रीकृष्णचरितं यो वै श्रोतुमीहां करोत्यपि ।
भक्त्या यो वै नरः कुर्याच्छ्रीकृष्णचरितं तथा ।
न जाने श्रवणे तस्य का मति र्वै भविष्यति ।
श्रीकृष्णचरितं विप्र तिष्ठेद्वै पुस्तकं गृहे ।
तस्य गृहसमीपं हि नायान्ति यमकिङ्कराः ।
श्रीपदं विष्णु चरितं सर्वोपद्रवनाशनम् ॥
सर्वपापक्षयकरं दुष्टग्रहनिवारणम् ।
विष्णु सान्निध्यदं चैव चतुर्वर्गफलप्रदम् ।
यः शृणोति नरो भक्त्या चान्तेयातिहरेर्गृहम् ॥
यत्स्नात्वा पुष्करेतीर्थे प्रयागे सिन्धु सङ्गमे ।
तत्फलं द्विगुणं तस्य श्रद्धया वै शृणोति यः ।

तत्रैव गङ्गा यमुना च वेणी गोदावरी सिन्धु सरस्वती च ।
सर्वाणि तीर्थानि वसन्ति तत्र यत्राच्युतोदारकथाप्रसङ्गः ।

ये पठन्ति पुराणानि शृण्वन्ति च समाहिताः ।
प्रत्यक्षरं लभन्त्येते कपिलादानजं फलम् ।
अपुत्रो लभते पुत्रं धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्यां मोक्षार्थी मोक्षमाप्नुयात् ।
ये शृण्वन्ति पुराणानि कोटिजन्मार्जितं खलु ।
पापजालं तु ते हित्वा गच्छन्ति हरिमन्दिरम् ।
सर्वाश्रमाभिगमनं सर्वं तीर्थावगाहनम् ।
न तथा फलदं चापि नारायणकथा यथा ।
यैर्न श्रुता रामकथा न परोपकृतिः कृता ।
तेषां सर्वाणि दुःखानि भवन्ति नरकान्तरे ।
वन्दे भागवतं शास्त्रं सत्सेव्यं खलनिन्दितमिति ।
सत्कथा वाचकं नित्यं सत्कथा श्रवणेरतम् ।
सत्कथा प्रीतमनसं नाहं त्यक्ष्यामि तन्नरमिति च ।

खलनिन्दितमिति श्रीमद्भागवतनिन्दायाः खलानामसाधारणलक्षणनिर्देशेन ये श्रीमद्भागवतं निन्दन्ति ते खला इति निर्गलितम् । अहो सम्प्रति एको महाननर्थः खलैः क्रियते, यत्पुराणानान्तिरस्कृतिः । सा च कलिप्रभावात्सत्येऽसत्यबुद्धेरसत्येसत्यबुद्धेश्च । भ्रमादित्यर्थः । पुराणश्रवणेन यदा साधारण धर्माधर्मज्ञानं भवति पुराणैर्वेदार्थ एव च उपबृंहितः वर्णाश्रमधर्मज्ञानं च पुराणेभ्य एव विशेषेण जायते, स्वर्गनरकव्यवस्था च पुराणैर्बोध्यते ॥ किं बहुना, संसारे यस्य यस्य यद्यत् कर्त्तव्यमकर्त्तव्यं वास्ति तत्सर्वं पुराणैरेवज्ञायते तदाकेनामविप्रतिपद्येतारितकः पुराणानामप्रामाण्य इति ॥

पूर्वकाले एवन्नासीत् । ब्राह्मणक्षत्रियादयः सर्वे पुराणानि पूजयन्तो धर्माधर्मज्ञानात्तदनुसृत्यानुतिष्ठन्त ऐहिकं सुखं साधु-भुञ्जाना नाकादिसुखमपि अनुभवेयुरेव । तेषां पुत्रादयोऽपि महाजनो येन गतः स पन्था इति वचनानुसारेण श्रद्धापुरस्कारेण तानेवानुगता धर्मशीला अव्यभिचारिणो भक्ष्याभक्ष्यविवेकिनो भक्ष्याण्येव भक्षयन्तः सुखिनोऽतिष्ठन् ।

यस्माद् भुक्तिमुक्तिजनकं पुराणपरिज्ञानमेवेति सार्वदिशं तस्मादाप्तवाक्योपदेशैः पुराणानि श्रवणीयान्येवेति साधु । तदुक्तम् ।

श्रुत्वा धर्मं विजानाति श्रुत्वा त्यजति दुर्मतिम् ।
श्रुत्वा कीर्तिमवाप्नोति श्रुत्वा मोक्षं च विन्दतीति ।

स एव च पूज्यो गुरु र्यो भक्त्युपदेशेन शिष्यादिकं संसारान्मोचयितुं यतते न तु पुराणनिन्दकः खलगण इति ।

वाराहपुराणे भगवच्छास्त्रानादरादयः पातका बहव उक्ताः । यथा ध्वान्तागारे हरेः स्पर्शः । राजान्नभक्षणम् । विधिं विना हर्युपसर्पणं । वाद्यं विना तद् द्वारोद् घाटनम् । कुक्कुरदृष्टभक्ष्यसंग्रहः । अर्चने मौनभङ्गः । पूजाकालेविडुत्सर्गाय सर्पणम् । गन्धमाल्यादिकं दत्वा धूपनम् । अनर्हपुष्पेणपूजनम् ।

अकृत्वा दन्तकाष्ठं च कृत्वा निधुवनं तथा ।
स्पृष्ट्वा रजस्वलां दीपं तथा मृतक मेव च ।
रक्तं नीलमधौतं च पारक्यं मलिनम्पटम् ।
परिधाय मृतं स्पृष्ट्वा विमुच्यापानमारुतम् ।
क्रोधं कृत्वा स्मशानं च गत्वा भुक्त्वाप्यजीर्णयुक् ।
भक्त्वा कुसुम्भं पिण्याकं तैलाभ्यङ्गं विधाय च ।

इह सम्बन्धितत्त्वं ब्रह्मानन्दादपि प्रकृष्टो-रुचिरलीलाविशिष्टः श्रीमानजित एव । तथा प्रयोजनाख्यः पुरुषार्थश्च तादृशतदासक्तिजनकं तत्प्रेमसुखमेव, ततोऽभिधेयमपि तादृशतत्प्रेमभ-जनकं तल्लीलाश्रवणादिलक्षणं तद्भजनमेव ।

अथ प्रमेय (शास्त्रतात्पर्यविषय) निर्णयः ।

अथास्य शास्त्रस्यानुबन्धचतुष्टयजिज्ञासायामु-च्यते । मुमुक्षवोऽस्य शास्त्रस्याधिकारिणः शा-स्त्रलक्षणन्तु—

---

हरेः स्पर्शो हरेः कर्म करणं पातकावहम् ।

भगवच्छास्त्रानादरः । तदग्रतस्ताम्बूलचर्वणम् । एरण्डपत्रस्थ-पुष्पैरर्चनम् । आसुरकाले पूजा, पीठे भूमौचोपविश्यपूजनम् । स्नापनकाले वामहस्तेन तत् स्पर्शः । पर्युषितैर्याचितैर्वा पु-ष्पैरर्चनम् । पूजायां ष्ठीवनम् । पूजायां स्वगर्वप्रतिपादनम् । तिर्यक् पुण्ड्रधृतिः अप्रक्षालितपादत्वेन मन्दिरप्रवेशः । अवै-ष्णवपक्वनिवेदनम् । अवैष्णवदृष्टौ पूजनम् । विघ्नेशमपूज-यित्वा पूजनम् । नखाम्भसा स्नपनम् । घर्माम्बुलिप्तत्वेऽपि पूजनम् । निर्माल्यलङ्घनमिति ।

वेदं गृहीत्वा यः कश्चिच्छास्त्रं चैवाव मन्यते ।
स सद्यः पशुतां याति संभवानेकविंशतिम् ।

इत्यत्रिश्च । परशास्त्रानादरश्च न कर्त्तव्यः किन्तु यदस्मच्छा-स्त्राविरुद्धं परशास्त्रदृष्टन्तदपीच्छातः कर्त्तव्य मिति ।

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेनवा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते-

इत्युक्तम् । श्रीकृष्णः परमात्मा परब्रह्म शास्त्रस्य विषयः । वाच्यवाचकभावादिर्यथायथं संबन्धः । कृष्णानुरागः प्रयोजनन्तदेव हि परमोऽपवर्ग इति । यथोक्तम्-

वैराग्यनिलयै र्लोके सदासङ्गै र्मुमुक्षुभिः ।
कर्त्तव्या ब्रह्मजिज्ञासा तस्मिन् रागायचाच्युत

इति (११) ॥

---

(११) वैराग्यं चतुर्विधम् । यतमानव्यतिरेकैकेन्द्रियत्व वशीकाराख्यभेदात् । तत्रवशीकारपर्यन्तवैराग्यनिलयैर्वैराग्याश्रयैर्मुमुक्षुभिर्ब्रह्मजिज्ञासा कर्तव्या । कथंभूतै र्लोके सदाऽसङ्गै र्नान्यविषयासक्तै स्तेषा न्तत्राधिकाराभावात् । तत्रवेदाविरोधिविषयसुखेच्छूनान्नरदेववनिताविहारप्रियाणां पूर्वमीमांसाश्रवणेन तदुक्तवर्त्मन्यधिकारोऽस्ति । यतस्तेषां ब्रह्मजिज्ञासायां ब्रह्मवादखण्डनेनाधिकपापप्रवृत्तिः स्यात् । तत्र पापभयाभावात् । श्रुतिविरोधिनां स्त्रीमद्यादिप्रियाणान्नरकगामिनां शिवोक्तेषु मोहजाल जनकेषु तन्त्रागमेषु तदुक्तवाममार्गाचरणेषु चाधिकारात् वेदान्ते तु शुद्धसात्त्विकानां मोक्षाधिकारिणां मुमुक्षूणामधिकारोऽस्ति । कस्मैप्रयोजनाय ब्रह्मजिज्ञासा कर्त्तव्या ? तस्मिन् ब्रह्मणि अच्युते रागायानुरागायेत्यर्थः ॥

अथातो ब्रह्मजिज्ञासेति वेदान्तसूत्रं च ।(१२)

(१२) अथ साधनचतुष्टयसम्पदनन्तरम् । अतः साधनचतुष्टयसम्पत्तेरेव हेतोर्ब्रह्मजिज्ञासा कर्त्तव्या मुमुक्षुभिः । तत्र साधनचतुष्टयं किन्नाम ? नित्याऽनित्यवस्तु विवेकः। इहामुत्रार्थ फलभोगविरागः। शमादिषट्कसंपत्तिः मुमुक्षुत्वं चेति । इह स्रक्चन्दनवनितादिषु अमुत्र स्वर्गभोगेषु चेच्छाराहित्यमेवेहामुत्रार्थफलभोगविरागः । स च यतमानव्यतिरेकैकेन्द्रियवशीकाराख्यभेदाच्चतुर्विधः । तेषां पृथक् लक्षणानि यथा महता प्रयासेनापि चित्तदोषानवश्यं निराकरिष्यामीत्यध्यवसायात्मकं प्रथमं यतमानसंज्ञम् । ततो निरन्तरमुपायानुष्ठाने क्रियमाणे एतावन्तो दोषा इदानीं क्षीणा एतावन्तोऽवशिष्यन्त इति चिकित्सकवत्प्रतिक्षणमध्यवसायात्मकं द्वितीयं व्यतिरेकसंज्ञम् । एवं प्रतिक्षणं विषयेष्वप्रवृत्तिरन्तर्वासनायां सत्यां तृतीयमेकेन्द्रियसंज्ञम् । एवमभ्यासादैहिकामुष्मिकफलभोगपरित्यागात्मकं वशीकाराख्यम् । तद्वशीकाराख्यवैराग्ययुक्तस्य ब्रह्मजिज्ञासायामधिकारः । नान्येषां विषयासक्तानां वादविवादप्रियाणाञ्चेति । वशीकाराख्यवैराग्यं यावन्न प्राप्नुयात्तावन्नित्यनैमित्तिकादीनि कर्माणि यथाशक्ति यथाविधि च कुर्वीतेति ।

शमो दम उपरतिस्तितिक्षा श्रद्धा समाधानमिति शमादिषट्कसम्पत्तिः। शमो नाम अन्तरिन्द्रियनिग्रहः । उपरतिर्नाम शीतोष्णादिसुखदुःखादि सहिष्णुत्वम्। समाधानन्नाम चित्तैकाग्र्यम् । श्रद्धानामगुरुवेदान्तवाक्येषु विश्वासः । मुमुक्षुत्वन्नाम स्वयं मोक्षमाप्नुयामिति इच्छाभावः । एतत्साधनचतुष्टयसम्पन्नस्तत्त्वविवेकस्याधिकारीति ।

ब्रह्मणो लक्षणमुक्तं वेदान्तसूत्रे । यथा ।
जन्माद्यस्य यत इति (१३) ।

श्रुतावपि—यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति, तद् ब्रह्म विजिज्ञासस्वेति (१४) ।

ननु एतद् ब्रह्मलक्षणं हिरण्यगर्भादिषु श्रुतिषु

---

(१३) अस्य प्रत्यक्षाद्युपस्थापितस्य विश्वस्य जन्मस्थितिभङ्गा यतो भवन्ति तद् ब्रह्म जगत्कारणं विदुर्वेदान्तिन इत्यर्थः ॥

(१४) यतो ब्रह्मणः परमात्मनः परमेश्वरादिमानि भूतानि जायन्ते; अनेन निमित्तकारणत्वमुक्तम् । यत यस्मिन् प्रयन्ति अपि गच्छन्ति । अभिसंविशन्ति तादात्म्यमेव प्रतिपद्यन्ते । तद् ब्रह्म विशेषेण ज्ञातु मिच्छेत्यनेन तदुपादानकारणत्वमुक्तम् येन हेतुना जातानि भूतानि जीवन्ति प्राणान् धारयन्ति । अतस्तच्छक्तिपरिणामो विश्वम् । न तु विवर्त्तः । तत्सृष्ट्वा तदनुप्राविशदिति श्रुत्या तज्जड़विग्रहत्वेन प्रपञ्चस्य प्रतिपादितत्वात् । तात्त्विकोऽन्यथाभावः परिणामः । यथा सुवर्णस्याङ्गुलीयकम् । अतात्त्विकोऽन्यथा भावो विवर्त्तः । यथाशुक्तिरज्ज्वादिषु रजतोरागादि । आकाशादीनां भिन्नभिन्नत्व (विभाग)प्रतीतेरपि न स्वरूपपरिणामः अपि तु तच्छक्ति परिणामएव ते आकाशादयः । रूपान्तरापत्तिर्हि परिणामः । यथोर्णनाभिः सृजत इत्यादिश्रुति प्रदर्शितदृष्टान्तेषु च शक्तिपरिणाम एव दार्ष्टान्तत्वेनाभिप्रेतः प्रतीयते, न तु विवर्त्त इति ।

अतिव्याप्तम्। कथम्। हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीदिति (१५)।

इन्द्रो यातोऽवसितस्य राजेति, (१६),।

अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वतीति (१७), सूर्यआत्मा जगतस्तस्थुषश्चेति, सोमो ऽस्माकं ब्राह्मणानां राजेति; मनोब्रह्मोपासीतेति। सर्वाणीमानि भूतान्याकाशादेव समुत्पद्यन्त इत्यादि श्रुतिभ्यः। तेषु कतमद् ब्रह्म विजिज्ञासनीयमित्याशङ्कायामुच्यते--अतिब्याप्तब्रह्मलक्षणानामप्यजादीनां मध्ये यदखण्डितानन्दरसं ब्रह्म तद्विजिज्ञासनीयमिति। सच्चिदानन्दं हि ब्रह्म। ब्रह्मादयस्तु शतानन्दादय एव। तस्य ब्रह्मणो ज्ञातुमिच्छा (लक्षणया ज्ञानेच्छापूर्वको विचारः) कर्त्तव्य आचार्य समीपे। ब्रह्मचोक्तं श्रीमद्भागवते-

---

(१५) हिरण्यगर्भश्चतुराननोऽग्रे सृष्ट्यादौ समवर्त्तत प्रजायत। जातः सन् भूतस्यैकः पति रासीदिति॥

(१६) इन्द्रो यातश्चरस्य अवसितस्याचरस्य च राजेति॥

(१७) दिवो द्युलोकस्य मूर्द्धा ककुदां दिशांपतिः अयमग्निः पृथिव्या लक्षणया पृथिवीस्थानां कर्मिणामपां कर्मणां रेतांसि फलानि जिन्वति उद्रिक्तभावं नयति उपभोगसमर्थानि करोतीति यावदिति॥

वदन्ति तत्तत्त्व विदस्तत्त्वं यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यत इति।

सत्त्वाद्ब्रह्मेति उपनिषद्भिः। चित्त्वात्परमात्मेति हैरण्यगर्भैः। आनन्दत्वाद्भगवानिति सात्त्वतैः शब्द्यते कथ्यत इत्यर्थः। स च भगवान् श्रीकृष्ण एवोपवर्णितो मुनिना श्रीशुकदेवेन मुहुः। यथा सप्तमे-गूढं परब्रह्म मनुष्यलिङ्गमिति। दशमे ब्रह्मादय शिष्यत इति। नवमे-

यत्रावतीर्णो भगवान् परमात्मा नराकृतिरिति।

यथोक्तं तत्रैव च-

एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्

श्रुतिश्चात्र भवति ऋक् परिशिष्टे ब्रह्मभागे परमरहस्यवर्णने-श्रीकृष्णो हि परो देवः षडैश्वर्यपरिपूर्णो भगवान् गोपीगोपसेव्यो वृन्दाराधितो वृन्दावनाधिनाथः। स एक एवेश्वरस्तस्य ह वै द्वितीया तनु र्नारायणोऽखिलब्रह्माण्डाधिपतिरेक इति (१८)। अन्या च श्रुतिर्यथा-यो-

---

(१८) श्रीकृष्णस्य परमसगुणस्य निर्गुणस्य च सच्चिदानन्दविग्रहस्य सर्वान्तर्यामिणो नित्यकिशोरस्यापरिच्छिन्नस्य श्रीराधिका वल्लभस्य द्वितीयविग्रहः स्वाभिन्नः सर्वशक्तियुक्तोऽनेकब्रह्माण्डाधिपतिः श्रीनारायण इत्यतः श्रीकृष्ण एव सेव्य इति।

ऽसौ सर्वेषु वेदेषु तिष्ठति, योऽसौ सर्वैर्वेदैर्गीयते योऽसौ श्रीकृष्णः पूर्वतोऽनुवर्त्तते नित्यो नित्यानां चेतनश्चेतनानामित्यादिः । अन्येषां ब्रह्मत्वप्रतिषेधश्च स्पष्टं श्रूयते । यथा ब्रह्म वा इदमग्र आसीत् न ब्रह्मा न च शङ्कर इति । नारायण एवाग्र आसीत् न ब्रह्मा नेशान इत्यादि श्रुतिषु ॥

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥

इति श्रुत्या च परब्रह्मत्वप्रतिपादनात् । (१९) । नामान्तरैरप्येकएव ज्ञानाख्यः(चिद्घनः) श्रीकृष्णो ज्ञातव्यो नान्यः तदेतदाह श्रीमद्भागवतम्-

---

(१९) ननु सत्यं ज्ञानमनन्तं ब्रह्मेति, ब्रह्म वा इदमग्र आसीदिति, आत्मा वा इदमग्र आसीदित्यादि वेदवेदान्तादिषु त्वानन्दं ब्रह्म जगत्कारणमुक्तं न तु श्रीकृष्ण इति चेत्तत्राह-कृषिरिति । गोपालतापनीय इयं श्रुतिः । भूवाचकः सत्तावाचकः । भूसत्तायामिति धातुपाठात् । णश्च निर्वृतिवाचकआनन्दवाचकः । तयोरैक्यं सत्तानन्दयोरैक्यं सदानन्दत्वं वैयाकरणव्यवहृतवदाद्यन्ताभ्यां सदानन्दाभ्यां चिद्ग्रहणात् सच्चिदानन्दः श्रीकृष्ण इत्यभिधीयते । उक्तं च हरिलीलामृते-

नमः कृष्णाय नित्यैकसच्चिदानन्दरूपिणे ।
जगत्सर्गविसर्गादिसाक्षिणेऽचिन्त्यशक्तये इति ।

यथेन्द्रियैः पृथग् द्वारै रर्थो बहुगुणाश्रयः।
एको नानेयते तद्वद्भगवाञ्छास्त्रवर्त्मभिरिति२०

पुनश्च तत्रैवोक्तं यथा-

सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः।
तस्यापि भगवान् कृष्णः किमतद्वस्तुरूप्यताम्।

इति (२१)॥ उक्तं च-

एनमेव वदन्त्यग्निं मरुतो ऽन्ये प्रजापतिम्।
इन्द्रमेके ऽपरे प्राणमपरे ब्रह्म शाश्वतमिति॥

जगज्जन्मादिकारणत्वं स्वस्य स्वयमेव श्रीमुखेनोक्तं गीतायाम्-

---

(२०) एकमप्यास्वादि फलं पृथग् द्वारैरिन्द्रियैर्नानायते। चक्षुषा रूपायते जिह्वया रसायते घ्राणेन सुगन्धायते यथा तथा श्रीकृष्णएवोपवर्णितोवेदैः। यथोपनिषद्भिर्ब्रह्मायते। हैरण्यगर्भैः परमात्मायते इत्यादि।

(२१) सर्वेषां वस्तूनां भूतेन्द्रियदेवतान्तः करणकर्मकालमायास्वभावादीनां भावार्थः परमार्थो भवद्ब्रह्म कारणं तस्मिन् ब्रह्मणि भवति भावार्थे। भगवान् कृष्णः स्थितः। तस्य ब्रह्मणो ऽपि कारणम्। अतः किमतत् कृष्णाव्यतिरिक्तं वस्तु रूप्यतान्निरूप्यताम्। को निरूपणविषयः? कथ्यताम्। तस्माद्यथागङ्गायां गङ्गा मूर्तिः, सूर्यप्रभायां सूर्यमूर्तिस्तया ब्रह्मणि ब्रह्ममूर्त्तिस्तु श्रीकृष्ण एव। कृष्णस्तु भगवान् स्वयमिति वचनात्॥

अहमेवासमेवाग्रे नान्यद्यत् सदसत्परम् ।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ।
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृद् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ।
ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ।

इति ॥ (२२) । न चैवं सविशेषब्रह्मस्वीकारे निर्विशेषब्रह्मप्रतिपादकानां वाक्यानां कोपोद्भवः स्यात् । निर्विशेषपरवाक्यानि तु अरूपवदेव हि । तत्प्रधानत्वात् । आह च तन्मात्रमिति वे-

---

(२२) अग्रे सृष्ट्यग्रेऽहमेव केवलमासम् नान्यत् किमपि । यदसत्कार्यं सदसत्कारणं परं प्रधानं न तत् तदा मदात्मकत्वात् मत्तः पृथक् सत्त्वाभावात् सूक्ष्मरूपेण मयि वर्त्तत एवेत्यर्थः । पश्चादहमेतत प्रत्यक्षाद्युपस्थितं जगदहमेव । कालेन विलीनेऽपि योऽवशिष्येत सोऽप्यहमेव । एवं स्वस्य नित्यवर्तमानत्वमुक्त्वा परमकारणत्वमाह अस्य विश्वस्याहमेव गति, र्यतः प्रभवः प्रकर्षेण भवो जन्म यस्मात् स प्रभवोऽहम् । प्रकर्षेण लयो यस्मिन् यतः सोऽप्यहम् ।, निवासो वासस्थानम् पालनं यस्मात्सोऽप्यहमतोऽव्ययं बीजं नित्यैकरसं कारणमित्यर्थः । ब्रह्मणो निर्विशेषस्य हि यस्मादहमेव प्रतिष्ठा आश्रयभूतः । धर्मादीनामपि । यथा सूर्यप्रभयोर्भेदेऽपि प्रभाया आश्रयः सूर्य एव प्रभानायत्वात्प्रभाकरत्वात्तथैवायमपीति भावः ॥

दान्तसूत्रे (२३) इति वाच्यम् । निर्विशेषब्रह्ममात्रस्वीकारे सविशेषब्रह्मप्रतिपादकवाक्यानामगतेः सविशेषपरवाक्यानि चेत्थम् अदृश्यादिगुणको धर्मोक्तेः (२४)। आनन्दमयोऽभ्यासात् (२५)। हेयत्वाऽवचनाच्चेति (२६) वेदान्तसूत्राणि ।

---

(२३) ब्रह्म सद्रूपवदेव । कुतः । शास्त्रेषु तत्प्रधानत्वात् । तदपि कुतः । तन्मात्रन्निर्विशेषमाह हि श्रुतिः ॥

(२४) अदृश्यो गुण आदिर्यस्य सः; अदृश्यादिगुणकः । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं, तदपाणिपादं नित्यं विभुं सर्वगत सुसूक्ष्मम् । तदव्ययम् यद्भूतयोनिं परिपश्यन्ति धीरा इति श्रुतेः । कुतः । धर्मोक्तेः । यतस्तस्य ब्रह्मणआनन्दादयो धर्मानित्याः स्वाभाविकाः ॥

(२५) तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरात्मानन्दमयइत्यत्र श्रुतौ परमात्मैवानन्दमय इत्युक्तः । कुतः । अभ्यासात् । आनन्दरूपोऽपि परमात्मानन्दगुणः । कुतः । अभ्यासात् । आनन्दगुणस्य पुनः पुनः कथनात् । आनन्दमयं प्रस्तुत्य एष एवानन्दयति । सैषानन्दस्य मीमांसा भवति। एतमानन्दमयमात्मानमुपसंक्रामति । आनन्दं ब्रह्मणो विद्वान्न बिभेति कथञ्चन । आनन्दं ब्रह्मेत्यादि श्रुतिभिरानन्दमयस्य बहुकृत्वोऽभिधानमभ्यासस्तस्मात् ॥

(२६) अन्नम्ब्रह्मेति, प्राणोब्रह्मेति, मनोब्रह्मेति, विज्ञानं ब्रह्मेति, मनो ब्रह्मेति, विज्ञानं ब्रह्मेति यथा विज्ञानमयान्तानां

शाण्डिल्यसूत्रे च यथा सम्प्रतिसिद्धम्परैश्वर्यन्तद्भावान्नैवमितरेषा मिति (२७)। अतो यन्निर्विशेषं ब्रह्म सदेव सविशेषमित्यगत्या स्वीकार्यम्। अतएव य एव निर्विशेषः परमात्मा, स एव सविशेष इति सिद्धान्तिनः। वेदान्तसूत्रे चोपपादितम् यथा-उभयव्यपदेशात्त्वहिकुण्डलवदिति (२८)।

---

हेयत्वं तथानन्दमयस्य न हेयत्वं क्वचिद्वेदान्ते प्रतिपादितम् तस्मात् परमात्मा उपादेय गुण इति सिध्यति।

(२७) परस्य परमेश्वरस्य ऐश्वर्यमानन्दादिकं न क्वापि श्रुतौ प्रतिषिद्धमस्ति येन तद्बाधितं स्यात् तस्य तत्स्वाभाविकत्वात्। इतरेषां ब्रह्मादीनां जीवानां तु प्रतिषिद्धमस्त्यागन्तुकत्वात्। यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तप इत्यादि श्रुत्या तस्य स्वाभाविका गुणाः प्रतिपादिता इति॥

(२८) यदात्मिको भगवांस्तदात्मिका व्यक्तिरिति वचनाच्छ्रुत्या भगवान् सच्चिदानन्दविग्रहः प्रतिपादितः। यथा आनन्दं ब्रह्मेत्यादि। क्वचित्' न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा' इत्यादि श्रुतिभिर्निर्गुणश्चोक्तः। इत्येवं सगुणनिर्गुणयोरुभयोर्वेदे कथनात्मकादुभयव्यपदेशात् अहि कुण्डलवत् परमात्मा उभयरूपः प्रतिपादितः। यथा अहेः सर्पस्य कुण्डलं कुण्डलाकारता स्वाभाविकं नागन्तुकं तथा दण्डाकारतापि तस्य स्वाभाविकी नागन्तुका य एव हि सर्पः कुण्डलाकारः स एव पुनर्दण्डाकारोऽपि यादृशस्तादृशः। एवं परमात्मनोऽप्यानन्दादयो गुणाः स्वाभाविका नागन्तुका इति। तस्मात्सवि-

अपि संराधने प्रत्यक्षानुमानाभ्यामिति (२९)च।

शेषं यद्ब्रह्म, तदेव निर्विशेषं यन्निर्विशेषं तदेव च सविशेषमितिज्ञेयम् ॥

(२९) ब्रह्माऽव्यक्तमपि नेत्राद्यविषयमपि संराधने सम्यग्धनात्मके योगे भक्तियोगेध्यानपूजनादितः प्रत्यक्षम्भवति भक्ताः प्रत्यक्षं भगवन्तं पश्यन्तीत्यर्थः। यतो भक्तियोगे परमेश्वरमूर्तिस्सदा तिष्ठति। तत्कथं निश्चीयते। तत्राह। प्रत्यक्षानुमानाभ्याम्। नायमात्मा प्रवचनेन लभ्यो न मेधया बहुना श्रुतेन यमेवैष वृणुते तेन लभ्य स्तस्यै वात्मा विवृणुते तनूं स्वामिति प्रत्यक्षेण श्रुत्या प्रत्यक्षानुभवात्। अतएव सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादिति, ब्राह्मणोऽस्य मुखमासीदिति, नाभ्या आसीदन्तरिक्षमित्यादिश्रुतयोऽनुपचरितार्था ऋजु उपपद्यन्ते। अनुमानन्तु स्मृतिर्यथा श्रीमद्भागवते—न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः। मनोवचोभ्यामनुमेयवर्त्मनो देव क्रियायां प्रतियन्त्यथापिहीति। तस्मादनुमानाच्च तन्निश्चीयते। अतएव,

जन्म कर्म च मे दिव्य मेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन।
बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप—

इत्यादि गीता च संगच्छते।

नायमात्मेत्यादिश्रुतेरर्थो यथा—अयम्मे बुद्धिगोचरः परमात्मा भगवान् प्रवचनेन वेदपठनेन न लभ्यः। पौरुषं जीववाक्यं यत्तद्वचनम्। अपौरुषेयं यत तत् प्रवचनमिति विवेकः।

तदेवाह तापनीयश्रुतिः आविर्भावा तिरोभावा स्वपदे तिष्ठति तामसी सात्त्विकी राजसी मानुषी विज्ञानघनाऽऽनन्दघना सच्चिदानन्दैकरसे

---

बहुना श्रुतेन मुहु र्मुहु र्वेदान्तश्रवणेनापि न लभ्यः । वेदान्तश्रवणजन्या या मेधा बुद्धिस्तयापि, साक्षात्कारलक्षणानुभवात्मकज्ञानेनेति फलितार्थः; न लभ्यः । तर्हि केन लभ्य इति जिज्ञासायामाह । एष शुद्धो जीवः यं परमेश्वरं वृणुते श्रवणादिभिर्भजते (वृङ् संभक्तौ इति हि धातुः) तेन लभ्यः । कुतः । यतस्तस्य तस्मै भक्ताय एष परमात्मा भगवान् स्वामव्यभिचारिणीं तनूं सच्चिदानन्दं वृणुते प्रकाशयतीत्यर्थः । एष एवार्थः श्रीशङ्कराचार्यैरप्युक्तः ।

न नाम रूपे इत्यादि श्रीमद्भागवतोक्तपद्यस्यार्थो यथा-भो देव द्योतमान श्रीकृष्ण तस्य तव नित्यसिद्धे नामरूपे ,सच्चिदानन्दे गुणजन्मकर्मभि र्निरूपणार्हे नभवतः । कुतः । माया गुणातीतत्वात । कथं भूतस्य तव मनोवचोभ्यामनुमेयवर्त्मनः । पुनः साक्षिणः । नहि साक्षिणस्तत्वं ,मनोवचोगोचरमित्यर्थः । एवम्भूतोऽपि त्वन्तथापि क्रियायामुपासनालक्षणायां त्वाम् प्रतियन्ति उपासकाः साक्षात् पश्यन्तीति हि प्रसिद्धम् । यथोक्तम्-

ध्यातु मिच्छन्ति यद् रूपं भक्ता भगवतो मुने ।
तदेव करुणस्तेषां प्रभु र्दर्शयतीच्छयेति ।

रामतापनीयोपनिषदि च-यथा

चिन्मयस्या ऽद्वितीयस्य निष्कलस्या ऽशरीरिणः ।
उपासकानां कार्यार्थं ब्रह्मणो रुपकल्पनेति ।

भक्तियोगे तिष्ठतीति (३०)। अतोऽदृश्य इत्यादिभिर्वाक्यैः अदृश्यो ऽग्राह्योऽचिन्त्योऽनणुरस्थूलो निर्गुणो यः प्रतिपादितः स एव सर्वज्ञः सर्ववित् सर्वशक्तिः सर्वेशानः सर्वान्तर्यामी सर्वस्वरूपः सर्वोपास्यः सर्वसद्गुणाश्रयः समस्त कल्याणगुणगणार्णवः सर्वकर्मफलदाता सच्चिदानन्दविग्रह इत्यादिवाक्यैः सगुणः सन्निरूपितः। इत्थम् एकस्मिन्नेव श्रीकृष्णे श्रीराधिकाप्रिये रमानाथे भगवत्यऽच्युते निगमागमाः पर्यवसिता भवन्ति । वस्तु द्वैरूप्याभावापादकस्तकस्त,

---

(३०) आविर्भावो विद्यते यस्याः साविर्भावा। तिरोभावो विद्यते यस्याः सा तिरोभावा। आविर्भावा चासौ तिरोभावा-चेति। तन्नाम्नी मूर्तिस्तामसी राजसी सात्त्विकी, भवाज्ज विद्याख्या, स्वपदे कैलाससत्यलोकरमावैकुण्ठेषु तिष्ठति। चिद्घनाघना आनन्दघनामानुषी सच्चिदानन्दा तद्रूपा मूर्तिस्तु सदा भक्तियोगे तिष्ठति। कीदृशे भक्तियोगे। सच्चिदानन्दैकरसे यथा सच्चिदानन्दविग्रहो भगवान् तथा तदीयभक्तियोगोऽपि। यथोक्तं गर्गगालवीय संहितायाम्—

ब्रह्मैकं सच्चिदानन्दं निरञ्जनमपाकृति।
यस्तेऽयं भगवान् कृष्णो लीलया देहवानिवेति।

एवं च सगुणत्वेन दर्शितस्यापि भगवद्रूपस्य निर्गुणब्रह्मस्वरूपभिन्नत्वे प्रमाणं नास्तीति।

अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्।
प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणमिति।
अचिन्त्यत्वोक्त्या प्रति समाहितः । यत्किञ्चि-
द्युक्तिविरुद्धं तदीश्वरकृतमिति न्यायाच्च । अय-
मत्र संग्राहकः श्लोकः ।

यदेव सगुणं ब्रह्म तदेव निर्गुणं विभु ।
भेदो न दृश्यते कुत्र चागमे निगमेष्वपीति(३१)।

तथा च एकस्मिन् वस्तुनि सगुणत्वं निर्गुणत्वं च मिथ उभयवयामर्दकत्वान् नोपपन्नमिति न वाच्यम्। यतोऽचिन्त्यैश्वर्य गुणे ब्रह्मणि सर्वमविरुद्धं भवति। तदुक्तं श्रीमद्भागवते—त्वयीश्वरे ब्रह्मणि नो विरुद्ध्यते त्वदाश्रयत्वादुपचर्यते गुणैरिति। तस्य परमेश्वरस्य महिमानं कोऽद्धा वेद। तथा च श्रुतिः । कोऽद्धा वेद क इह

---

(३१) यतो यः सर्वज्ञः सर्ववित् सर्वेशानः सर्वाश्रयः सर्वकारणं सर्वकर्मफलप्रदः सर्वभक्ताश्रयः सर्वविभूतिपतिः सर्वेश्वरः सगुणं ब्रह्मेति प्रतिपादितः स एव अगोत्रावर्णाचक्षुरश्रोत्राव्यक्ताचिन्त्यादृश्यागोचरागुणनिराकारादिशब्दैर्निर्गुणं ब्रह्मेति प्रतिपादितः। सगुणनिर्गुणात्मकब्रह्मभेद आगमेषु निगमेष्वपि न दृश्यतेऽतो भेदवादिनस्त्ववैदिकाः शास्त्रचक्षुर्विहीना सज्जनवन्दिता ज्ञेया इत्याशयः ॥

प्रावोचत्कुत आयाता कुत इयं विसृष्टिः। अर्वाग्देवा अस्य विसर्जने नाद्धा को वेद यत आबभूवेति (३२)।

अनेजदेकं मनसो जवीयो नैतद् देवा आप्नुवन् पूर्वमर्षत्। तद्धावतोऽन्यानत्येति तिष्ठदिति च (३३)।

यस्यामतं मतन्तस्य मतं यस्य न वेद सः।
अविज्ञातं विजानतां विज्ञातमविजानतामिति३४;

यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य वेदेष्वेति च

---

(३२) अद्धा साक्षात् परमात्मानं को वेद क इह प्रावोचत्। इयं विसृष्टि रपि कुतः कस्माज्जाता कुत आयाता इत्यपि को वेद अस्य विश्वस्य विसर्जने अर्वाग्देवाः पश्चाज्जाता अतस्ते न विदुरिति ॥

(३३) ब्रह्म त्वेकमनेजदचलं मनसोऽपि वेगवत्तरं तस्माद्देवानाप्नुवन् पूर्वमर्षत् गच्छत। यतो धावतोऽन्यानिन्द्रियगणानत्येत्यऽतिक्रम्य तिष्ठति तिष्ठदिति ॥

(३४) यस्य ब्रह्मविदः अमत मविज्ञातमविदितं ब्रह्मेति मतं तस्य मतं विज्ञातम्। मतं सम्यङ् मया ब्रह्मविज्ञातमिति यो वदति स नैव वेद। अतएव विजानतां विजानीम इति वदतामविज्ञातमिति ॥

श्रुतयः (३५)। श्रीमद्भागवते च–

मुनयः पदवीं यस्य निःसङ्गे नोरुजन्मभिः ।
न विदु र्मृगयन्तो ऽपि तीव्रयोगसमाधिनेति ।

स विशेषं परं तत्त्वं निर्विशेषं वेत्य ऽविज्ञाततत्त्वत्वेन विवदतां भ्रमापनुत्तये तयोरभेद एव वेदान्ते प्रधानकारणवाद खण्डनाध्याये व्यासेन मुनिना प्रतिपादितः। प्रधानकारणवादखण्डनप्रक्रिया चेयम्–ननु केचित्तु सांख्याचार्याः प्रधानमेव जगत्कारणमाहुः। श्रुतिं चोपन्यस्यन्ति अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपां अजो ह्येको जुषमाणो ऽनुशेते जहात्येनां भुक्तभोगामजो ऽन्य इतीति(३६)।

---

(३५) तस्माद्यदि कदाचिदस्य ब्रह्मणो यद् रूपमहं वेद इति मन्यसे तर्हि दभ्रं स्वल्पमपि ब्रह्मणो वेदेषु यद् रूपं गीतं तदपि दभ्रमेववेत्थेति मन्येऽहम्। सामवेदीयतलवकारोपनिषच्छ्रुतिरियम् ॥

(३६) एकः अजो जीव एकामजाम् मायां जुषमाणः सेवमानस्तस्यामेव शेते तदधीनो दुःखात्मा भवति। कीदृशीमजाम् गुणात्मिकाम्। पुनः सरूपा गुणात्मिका जडा बह्वीः प्रजाः सृजमानां जनयन्तीम्। तामेकामन्योऽजोन्तर्यामी तु जहाति। स्वतन्त्रत्वात्; तत्स्वामित्वादपि। कीदृशीम् भुक्तभोगां स्वाधीनां विघ्नकाररूपामिति ॥

चेन्न। श्रुत्यन्तरेण अस्याः श्रुतेरन्यार्थत्वनिर्णयात्। तथा च श्रुतिः-

परास्य शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च इति (३७);
मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वर मिति च
मयाध्यक्षेण प्रकृतिः सूयते सचराचरमिति
गीता च।
दैवात् क्षुभितधर्मिण्यां वीर्यमाधत्त वीर्यवान्।

इति वचनान्तरञ्च। यद्यपि माया प्रकृतिरिति पर्यायभेदादनर्थान्तरं तथापि प्रकृतेरंशभूता गुणमयी माया सा। यस्यास्तापनीयश्रुतिरभिधानमाह-कृष्णस्त्रिभिः (३८) शक्तिभिः समन्वितः। ह्लादिनी सन्धिनी ज्ञानेच्छा। तासु ह्लादिनी गरीयसीति (३९) वेदान्ते च प्रकृतिर्द्विधा परा-

---

(३७) अस्य भगवतः परा शक्ति र्विविधैव श्रूयते। ज्ञानानि शक्तयः। यथा श्री भूः कीर्तिरिला लीला कान्तिर्विद्येति सप्तकम्। विमलाद्या नवेत्येता मुख्याः षोडश शक्तयः।

विमलोत्कर्षिणी ज्ञाना क्रिया योगा तथोन्नतिः।
बह्वी सत्ता तथेशानी तथैवान्नुग्रहा मतेति॥

(३८) त्रिभिरिति श्रौतः प्रयोगः॥

(३९) गरीयसीयमन्तरङ्गभूता राधा चिद्रूपा भगवतः प्रिया रमा जानकी रूपा च। श्रीश्चते लक्ष्मीश्च पत्न्याविति

चैवा पराचेति। तयोरपरागुणमयी माया। तथा च गीता—

भूमिरापो ऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा।
अपरे यमित स्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगदिति।

तस्माज्ज्ञानबलक्रियावद् ब्रह्मैव विश्वकारणं न ज्ञान शून्यं जडं प्रधानम्। ईक्षते र्नाशब्दमिति वेदान्तसूत्राच्च (४०)।

नन्वचेतनमपि तृणदुग्धादिकं दुग्धदध्याकारेण निमित्तान्तरनिरपेक्षं परिणमते; तद्वत्प्रधानमपि विश्वरूपेण परिणमताम्नाम; कानुपपत्तिरितीमामाशङ्कां निरस्यति वेदान्तसूत्रम् अन्य-

---

श्रुतेः। सन्धिनी तु धामभूषणशय्यासनादिमित्रभृत्यादिरूपेण परिणता मर्त्यलोकावतीर्णा मातापितृरूपेण च। ज्ञानशक्तिस्तु क्षेत्रज्ञरूपेति॥

(४०) प्रधानमशब्दन्नविश्वकारणम्। अवेद्यत्वात् अशब्दमिति हेतुगर्भं विशेषणमिदम्। तर्हि किं कारणम् पूर्वोक्तं ब्रह्मैव। कुतः ईक्षतेर्हेतोः। तदीक्षितृत्वश्रवणात्। तस्य ज्ञानत्वादिति भावः। सदेव सोम्येदमग्रआसीदिति प्रकृत्य तदैक्षतेति कारणस्य सत ईक्षितृत्वश्रवणादिति।

त्राभावान्न तृणादिवदिति (४१)।

ननु सर्वज्ञानां कपिलादीनां मतं नान्यथा भवितुमर्हति, अतो ब्रह्म प्रकृतिश्चोभयमपि कारणमस्तु। कुतः। मिथोऽपेक्षणात्। ब्रह्मणा प्रकृतिः प्रकृत्या च ब्रह्म अपेक्ष्यते। अत एवान्धपङ्गुन्यायमाश्रित्य श्रुतावपि द्वयोरेव कारणत्वं श्रूयत इति चेत् सत्यम्। न तेषां कपिलादीनां जगत्कारणत्वेन प्रधानप्रतिपाद्यत्वे दृष्टिः किन्त्वात्मनोऽकर्तृत्वसिद्धान्ते एवाऽभिसन्धिः। यतस्ते देहात्मवादिनां हिलाय तत्सम्मत्या गूढाभिप्रायवाचः पेशलैः कर्तृत्वादिकं प्रकृते रुक्त्वाऽऽत्मानः अकर्तृत्वं प्रतिपादितम्। नान्यथाऽभिनिवेशेन तेषामभिप्रायो नेतव्य इति। एवं गौतमादिरूपेण च भगवता परमाणूपादान

---

(४१) धेन्वादेरन्यत्र बलीवर्दादौ तृणादेः क्षीरीभावस्याभावात्। अत ईश्वरसत्तया धेनुपात्रयोस्तृणदुग्धेदुग्धदधिरूपेण परिणमेते, न तु द्रव्यान्तररूपेणातो न प्रधानं विश्वकारणम्। तथा जडवासो जडस्य वाससो घटो वा घटस्य निरपेक्षं कारणन्न संभवति; चेतन आत्मा तु नखलोमादीनां जडानां जनने कारणं भवेज्जडप्रधानं तु जगद्धेतुत्वेनाज्ञैः कल्पितमिति। तत्तत्कार्यक्रियाज्ञानवान् कोऽपि तत्कारणं भवितुमर्हति; नाचेतनमिति निष्कर्षः॥

कारण (४२) वादेनाऽऽत्मा निमित्तकारणत्वेनैव प्रतिपादितः। मतावधिभूते वेदान्ते तूपादान-निमित्तहेतुत्वेन परमात्मा सम्प्रतिपाद्यते। रचनानुपपत्तेश्च नानुमानमिति (४३) श्रुत्यनुकूलतर्कानुसृतिवेदान्तसूत्रात्। सांख्ये करणेकारणदृष्ट्या तत्करणमेव कारणत्वेनोपवर्णितम्। यथा दण्डादयो घटादीनां करणत्वेनोक्तानि कारणानि। अतो न प्रधानं विश्वकारणम्। विश्वकारणत्वेन भगवदाश्रितं घटादेर्दण्डादिवत्तु विश्वस्य कारणं प्रधानं भवितु मर्हतीत्यस्त्वित्येक

(४२) यदुपादाय कार्यं प्रवर्तते तदुपादानकारणम्। नैयायिकानां नये त्रिविधं कारणम्। समवायिकारणमऽसमवायि कारणं निमित्तकारण मिति भेदात्। यत्र समवेतं कार्यमुत्पद्यते तत्र समवायि कारणम्। यथा मृद् घटस्य तन्तवः पटस्य समवायि कारणम्। समवायस्तु घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः। तेषु जातेश्च संबन्धः समवायः प्रकीर्तित इत्युक्तः असमवायि कारणं श्यामगौरादि कपालरूपादिकं घटरूपादेः। उक्तोभयलक्षणभिन्नं कारणं निमित्तकारणं, यथा घटादेर्दण्डादिकमिति।

(४३) अनुमानस्य अश्रौतत्वात् कल्पितस्य प्रधानस्येत्यर्थः जड़स्य तस्य कर्तृत्वेनाऽधिष्ठातृतया सृष्टे रचनानुपपत्तेश्च तर्कोपष्टम्भात् अनुमानं प्रधानं जगत्कारणं न भवितुमर्हति। अपि तु श्रौतश्चेतन एवेति ॥

देशिन आहुः । तन्मतेऽपि परमकारणन्तु भगवान् श्रीकृष्ण एव। अयमत्र निष्कृष्यफलितार्थः। यस्मात्तस्य श्रीकृष्णस्य परायाश्चिच्छक्तेरंशभूता गुणमाया प्रधानरूपाऽतो न विश्वकारणमपि तु विश्वकारणमेव सेति ।

ननु चेतनस्य जगदुपादानकारणत्वे अचेतनस्य प्रधानस्य च करणकारकत्वे, जगति घटकुण्डलादि जड़कार्यदर्शना ऽसंभवाच्चेतनस्योपादानकारणत्वानुपपत्ते रचितः कार्यस्या ऽचिदेव प्रधानमुपादानकारणं भवितुमर्हति, चितश्च चेतनमित्यतः प्रधानमेव कारणमचित्त्वादन्यथा सृष्टि जाड्यानुपपत्तेरितिचेन्न । न विलक्षणत्वादस्य तथात्वं च शब्दादिति—दृश्यते त्वितिवेदान्तसूत्राभ्याम् । लोके हि कार्यकारणानां मिथो विलक्षणत्वन् दृश्यते । यथा जड़ाद् गोमयाद् वृश्चिकादयः कीटविशेषाः प्राणिनश्चेतनाः। सतश्चेतनाज्जीवाद् जड़ानि नखलोमानि च सम्भवन्तीत्युभयोः सर्वदैव सहभावेन कार्यकारणभावोपपत्ते नैकतरत्रव्यवस्थित्या कारणत्व संस्थिति र्नित्यसापेक्षत्वादित्येतत् सूत्रद्वयतात्पर्यसंक्षेपः।

तद्वच्चाह श्रुतिः—सतः पुरुषान्नखलोमानीति(४४)।

उक्तविधव्यभिचारदर्शनाद् विनिगमनाविरहान् नैव प्रधानस्यैवकारणत्वमिति च श्रुत्याशयः। क्वचित्कार्यस्य मिथ्यात्वदर्शनादपि न कापिलप्रधानकारणवादोपपादनं संघटते। तथाहि श्रुतिस्तुसौ, सत इदमुत्थितं सदिति चेन्ननुतर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुगिति (४५)। ननु, अस्तूभयोः कारणत्वम्। मिथः सापेक्षत्वेऽपि चेतनस्य चेतनोजडस्य जडमुपादानकारणमित्यसाङ्कर्येण व्यवस्था स्वीकारे कानुपपत्तिरितिचेन्न। चेतनस्य पुरुषस्य कारणत्वा-

---

(४४) सतश्चेतनाज्जीवाज्जडानि नखलोमानि अचितो गोमयाद्वृश्चिककीटकादयश्चितश्च, यतो जायन्तेऽतः कार्यस्य विश्वस्य न प्रधानस्य कारणत्वविनिगमनं सूपपादमितिभावः।

(४५) सत उत्तमात्परमेश्वरात् सदुत्तमं जगत् कथं नाभूत्प्रत्युत कामक्रोधादिवहुलकलुषं मध्यममेवेदमभूत् ? न हि पद्मरागाकरात्काच उत्पद्यते इति चेन्न। ननु तर्कहतमेतद् व्यभिचरति क्वचेति—यथा उत्तमादप्यङ्गनृपादधमोवेनोऽभूत्। क्व च मृषेति—वैष्णवत्वेनोत्तमादपि मयाद् यथा मिथ्याभूतमिन्द्रजालमभूत्। क्वचिन्नोभय युगिति—क्वचिन्नाधमत्वं मिथ्यात्वमपि उभययुग्भवति। यथोत्तमात् प्रियव्रता दप्याग्नीध्रः। स च नाधमोनापि मिथ्याभूतः किन्तु प्रियव्रतस्यानु-रूपो

भ्युपगमे तस्य विकारित्वप्रसङ्ग एव सुमहान् दोषः । ननु स तु तवाप्यनिष्ट इति चेन्न—प्रत्यक्षोपलम्भेन केनापि निराकर्त्तुमऽशक्ययो जड़चेतनयोर्यथा क्रमं शक्तिशक्तिमतो र्मिथो भेदाभेदस्वीकारात् । प्रधानं शक्तिश्चेतनः शक्तिमानिति हि विमतेऽपि सिद्धान्तः । तथा च चेतनस्य शक्त्यभिन्नस्य शक्तिमतः प्रधानात्मकशक्तिद्वारा परिणामित्वस्वीकारे न कदाचित्काचिदनुपपत्तिः । अत्र श्रुतेरप्युष्टम्भो यथा-

---

मध्यम एवा भूदत उत्तमादुत्तम एव भवेदिति न नियमः । परमेश्वरस्य प्रकृतिद्वारा एवोपादानत्वम् । साक्षात्तु निमित्तत्वमेवेति विवेकिभिरुच्यते । ननु दुष्टस्य जगतः प्रकृतौ लये तेन भगवच्छक्तिरपि दूषितैवस्यादिति चेन्न । न तु दृष्टान्तभावादिति वेदान्तसूत्रात् । अस्य सूत्रस्यार्थः—यदभिहितं कारणमपि गच्छत् कार्यङ्कारणमा ऽऽत्मीयेन धर्मेण दूषयेदिति तद् दूषणम् । कस्मात् । दृष्टान्तभावात् । सन्ति हि दृष्टान्ताः यथा कारणमपि गच्छत् कार्यङ्कारणमाऽऽत्मीयेन धर्मेण न दूषयति । तद्यथा शरावादयो मृत्प्रकृतिका विकारा विभागावस्थायामुच्चावचमध्यमप्रभेदाः सन्तः पुनः प्रकृतिमपिगच्छन्तो न तामात्मीयेन धर्मेण संसृजन्तीति । अतः परमात्मा भगवानेव विश्वकारणं सर्वेश्वरत्वादनन्यसिद्धत्वादन्यसाधकत्त्वाच्च अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदु रिति श्रुतेरिति ।

यस्तूर्णनाभ इव तन्तुभिः प्रधानजैः स्वभावतः । देव एकः स्वयमावृणोतीति । नन्वभेदपक्षे इयमुपपत्तिरकुण्ठितापि भेदपक्षेऽसौ कथ नं त्रपेतेति वाच्यम् । करणकारकत्वेनेत्युक्ति पूर्वं ह्येकदेशिमतेनेति । ननुप्रधानस्य तथात्वे करणत्वेसति कथंचिदक्षितो जगत उपादानकारणमिति चेदत्राह व्यासः-कामाच्च नानुमानापेक्षेति (४६) वेदान्तसूत्रम् । कामोऽत्र संकल्पः । तदैक्षत । बहुस्यामिति श्रुत्युक्त संकल्पात्मकेनेक्षणेन सत्य संकल्पस्य भगवतः स्वशक्त्या करणेन जगत उपादानकारणत्वस्योपपादनस्य नहि करणमेव उपादानकारणम् । विचित्राश्च संकल्पशक्तयो दृष्टाः । प्राकाम्यात् । संकल्पादेवास्य पितरः समुत्तिष्ठन्तीति श्रुतेश्च । एवं यदाशक्तिशक्तिमतोर्भेदवादेऽपि न प्रधानमात्रस्योपादानकारणत्वं युक्तियुक्तन्तदा किमु वाच्यं सैद्धान्तिकेऽध्वनि तयो रभेदवादे पृथक् प्रधानस्य कारणत्वमिति । अभेदवादे हि शक्तिशक्तिमतोस्ता-

(४६) एकोऽहम्बहु स्यामिति श्रुतौ साक्षात् सोऽकामयतेति काम (संकल्प) शब्दश्रवणादनुमानस्य प्रधानस्य विश्वकारणत्वेन अपेक्षा अपेक्षितव्या नोपपद्यत इति ॥

दात्म्यस्वीकारात् करणत्वानुपपत्त्या चैतन्याभेदाद् वस्तुतः प्रधानस्य नकरणत्वमपि अभिप्रेयते। तथा च, नानुमानस्य प्रधानस्य विश्वकरणत्वेनापि व्यपेक्षा। कुतः पुनः कारणत्वेनेति श्रुतिश्चात्र भवति—न तस्य कार्यं (कर्म) करणं च विद्यते न तत् समश्चाऽभ्यधिकश्च दृश्यत(४७) इति। आत्मनो जड़शक्तिद्वारा चेतनस्य परिणामस्वीकाराच्च न चेतनस्य स्वरूपतो विकारित्वापत्तिः। अत एव विश्वं जड़न्नश्वरं न दुःखरूपं माया कार्यत्वात् ईश्वरस्तु सृष्टिस्थितिप्रलयेष्वपि जीवमायादिभिर्जड़ाजड़शक्तिभिः सह सदैकरसो नित्यलीलः सच्चिदानन्दविग्रहो विराजमान एव मायादिषु चतुर्ष्वपि पदार्थेषु अनादिनिधन स्तेषां नियन्ता स्वतन्त्रस्ते सर्वे तदधीना एवेति समञ्जसः सिद्धान्तः। अयंभावः यतः स्वयमेव श्रीकृष्णः करणकारणकार्यकर्तृस्वरूपिणो पवर्णितो वेदै स्ततः, यथोर्णनाभिः

(४७) ईश्वरः किं निमित्तकारणमेव जगतः। नेत्याह श्रुतिः। न तस्य कार्यं करणं च विद्यत इति। विश्वस्य तदचिद्विग्रहत्वात्। तत्कुतः। यतः सोऽभिन्नोपादाननिमित्तकारणम्। तस्मात्तत्समोऽभ्यधिकश्च न विद्यते सर्वेश्वरत्वादिति॥

स्वयमेव करणकारण कार्यकर्तृस्वरूपत्वेन क्रीड़ास्थानं निर्माय क्रीड़ां करोति तथा भगवानपि चिच्छक्त्येति । सोऽकामयत । एकोऽहं बहुस्यामिति श्रुतेः । लोकवत्तु लीलाकैवल्यमिति वेदान्त सूत्राच्चेति(४८) ॥ समाप्ता प्रधानकारणवादखण्डनप्रक्रिया । इत्थं च यदा भगवति सगुणत्वं ज्ञानानन्दादि गुणत्वात् निर्गुणत्वं च मायागुणातीतत्वादुपपन्नं तदा सगुणनिर्गुणात्मकैकब्रह्मणोऽभेदएव वेदान्तेनिरूपितः। पाद्मे चोक्तं यथा—य एवाऽविग्रहो व्यापी परिच्छिन्नः स एव हि ।

एकस्यै वैकदा चास्य द्विरूपत्वं विराजत इति । अपण्डिताः पण्डितमानिनो मूर्खास्त्विदं मायोपाधि सगुणं ब्रह्म पृथग् । इदन्निरूपाधि निर्गुणं तु ब्रह्मेति ततो भेदं वदन्ति । ते भवजलधिमीनाः । का तेषां कथा कथनीया । सगुणमूर्त्तेर्भगवतो भौतिकत्ववेदने दोषश्च स्मर्यते । यथा—

(४८) अत्र लोकशब्देन ऊर्णनाभादयो दृष्टान्तत्वेनाभिप्रेता गृह्यन्ते । यथा ऊर्णनाभादयः स्वस्वभावभूतया केवलया मनोविनोदात्मिकया लीलया तन्त्वादि सृजन्ति तथा ईश्वरोऽपि स्वभावेन सृष्टयादि करोतीति भावः ॥

यो वेत्ति भौतिकं रूपं कृष्णस्य परमात्मनः ।
स सर्वस्माद् बहिः कार्यः श्रौतस्मार्तविधानतः ।
मुखं तस्यावलोक्याऽथ सचलस्नानमाचरेदिति ।
सगुणनिर्गुणात्मकैक ब्रह्मभेदस्य निगमागमपुराणेष्वदृश्यमानत्वादितिभावः । तस्माद् भक्तियोगनिष्ठानां भगवान् व्यक्तो निराकारनिष्ठानां विमुखानां चाव्यक्त इत्यगत्यैवायाति । ननु युक्त्यनुपपन्नद्वैरूप्यनिरूपणेन ते केष्टसिद्धिः । उच्यते-तज्ज्ञानेन जन्मसाफल्यमिति । यथोक्तं तत्त्व निर्णये एवं चास्य स्वरूपं च पूर्वोक्तम्परमात्मनः । ज्ञातव्यं जन्मनश्चैतत् फलं सद्गुणशालिनामिति (४९) ।

---

(४९) सद्गुणा यथा-

कृपालु रकृतद्रोह स्तितिक्षुः सर्वदेहिनाम् ।
सत्यसारो ऽनवद्यात्मा समः सर्वोपकारकः ॥
कामैरहतधीर्दान्तो मृदुः शुचिरकिञ्चनः ।
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ।
अप्रमत्तो गभीरात्मा धृतिमाञ्जितसद्गुणः ।
अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः ।
असत्वरो ऽर्थजिज्ञासु रनसूय रमोघवाग्-

इत्यादयः उक्ताः । एषां राजमानानामेव जन्म साफल्यम् भगवद् रूपज्ञाने नेति ॥

ननु कालः सृजति भूतानीत्यादि वचनवलात् कालस्यैव विश्वकारणत्वे ऽभ्युपगम्यमाने दूर आस्तां सगुणनिर्गुणात्मकैक ब्रह्माभेदचर्चा; प्रधानकारणवादो वेति चेन्नेत्युच्यते । कुतः ।

अक्षरात् संजायते कालः कालाद् व्यापक उच्यत इति स विश्वकृद्विश्वविदात्मयोनिः।सकालकालो गुणिसर्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसार मोक्षस्थितिहेतुरिति ; योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टा माहुश्चेष्टते येन विश्वम् । निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्य इत्यादि श्रुतिस्मृत्यादि वचनजातेभ्यः कालस्य परमेश्वराद् हीनकक्षत्वात् । ननु माभूत् कालो विश्वकारणमदृष्टम् प्राणिपुण्यपापाऽऽत्मकं कर्म तु धारा प्रवाहेण जगद्धे तु रस्तु । मीमांसकैर्यथोक्तं न कदाचिदनीदृशं जगदिति चेन्न । कर्मापि न विश्वकारणमचित्त्वाद्ध्रुव पराधीनत्वाच्च । तदेवाह श्रुतिः–

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताकेवलो निर्गुणश्चेति । अत्र कर्माध्यक्ष इत्युक्तेनैव कर्मफलप्रदत्वम् परमेश्वरस्योक्तम् ।

फलदातृत्वेऽपि सर्वभूतगूढत्वाद्भगवान्न बुद्ध्यादिगोचरः। न च स तत्र तत्र रागद्वेषादिना सक्तस्तेन तेन लिप्येतेति वाच्यम्। रागद्वेषादिरहितनिरञ्जनस्य सर्वसाक्षित्वात्। सूर्यवत्।

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।
तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम्।
न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा॥

इति गीतावचनाच्च।

कर्माण्यनादिसान्तानि जीवानां प्राकृतानि च(५०)

इति वचनात् कर्मणामनादित्वादीश्वरेऽपि न वैषम्य नैर्घृण्यदोषप्रसक्तिः। तदुक्तं वेदान्ते—वैषम्यनैर्घृण्येन सापेक्षत्वात् तथाहि दर्शयतीति(५१)

---

(५०) जीवानां धाराप्रवाहेण प्राकृतानि कर्माणि त्वनादीनि सान्तानि च भगवद्भक्त्या तेषां विनाशे मुक्तिद्वारेण श्रीकृष्ण साक्षात्कारान्न पुनः संसारः। नवीनकर्मण उत्पत्तिहेत्वभावादिति॥

(५१) सृष्ट्यादि कर्त्तुरीश्वरस्य तत्तत्प्राणिपुण्यपापानुसारेण विषमफलदातुरपि न वैषम्यनैर्घृण्ये दोषौ प्रसज्जेयाताम् कुतः। सापेक्षत्वात् जीवानां प्राचीनकर्मसापेक्षत्वात्। अन्यथा ह्यन्यायः प्रसज्जेत। यस्य जीवस्य पूर्वसृष्टिकृतं देवयोनिकारणं कर्म, तेन कर्मणा ईश्वरेण स देवः कृतः। तद्विपरीतेन असुरयोनिकारणेन कर्मणा असुरः कृतः। सृष्टौ विषमसर्गदर्शनात्

ननु क्रियाजन्यानामपूर्वरूपाणां कर्मणां कथमनादित्वं व्याघातात्। तत्राह व्यासः—
उपपद्यते चाप्युपलभ्यतेचेति (५२)।

कर्मणां धाराप्रवाहेणानादित्वात् सृष्टेरप्यनादि धारा प्रवाहः श्रूयते—सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदित्यादि श्रुतिषु। श्रीमद्भागवते च—
यथेदानीं तथाग्रे च पश्चादप्येतदीदृशमिति।

ननु ईश्वरस्य सृष्ट्यादौ जीवकर्मसापेक्षत्वेऽभिमते निरंकुशन्तत् कर्तृत्वं न युज्यते इति चेन्

---

तद्वै तु भूत तथा तथा तत्तत्कर्मभेदात्। स्थितौ च तत्तद्वैचित्र्यं तस्मादेव। जीवानां पृथक् सुख दुःखादि फलभोगवैचित्र्याच्च कर्मैव जीवसुख दुःखादिभोग परिमाणनियमे तन्त्रं न तु सृष्ट्यादि कर्तुरीश्वरस्य रागद्वेषादिस्तत्र हेतुः समर्थनीयः तथा च स्मृतिः—

कर्मणा जायते जन्तुः कर्मणैव विलीयते।
सुखं दुःख भयं क्षेमं कर्मणैवाभि पद्यत इति।म

(५२) पूर्व पूर्वसृष्टिकाले जीवस्य कर्म कर्तृत्वादेव उत्तरोत्तरत्र सुखदुःखादिफलोपभोग वैचित्र्यमुपपद्यते। अन्यथा तु तदनुपपत्तेः कर्मणां धारा प्रवाहेणानादित्वं सिध्यति। प्रलयेऽपि कर्मादीनां सदात्मकत्वात्सद्भिन्नद्रष्टव्याभावेन स एव सोम्येदमग्र आसी दिति, एकमेवाद्वितीयं ब्रह्मेति चोक्तन्न तु तेभ्यस्तत्तद्भेदनिषेधायेति सुधीभिर्विभावनीयम्॥

न उच्यते । जीवानां प्राचीनकर्मानुरूपकर्म-कारयितृत्वेऽप्यन्तर्यामिण ईश्वरस्य अनन्यसिद्ध-प्रभुत्वेनैव तत्तत् कर्मफलभोगदातृत्वान्न कदापि प्रभोस्तस्य प्राणिकर्माधीनत्वम् । तथा सति हि तस्य प्रभुत्वव्याघातापातात् । कर्तुमकर्तु मन्यथा कर्तुं च समर्थः प्रभु रिति हि प्रभुत्वस्य सर्ववादिसंमतं लक्षणम् । अतएव शरणागतस्य सर्वपापेभ्यो मोक्षणं तत्प्रतिज्ञानं च साधु शोभत एव । न चान्यायापातः । विवेकित्वात् तस्य ॥ न हि कश्चिदीश्वरोऽपि सन्निर्विवेकः संभवति । विप्रतिषेधात् । व्यासेन ईश्वरस्यैव प्राणिकर्मफलदातृत्वमुक्तं च, कर्मफलमत उपपत्ते रिति (५३) ।

कर्मणां जड़त्वात् स्वभावस्य चानिर्वचनीयत्वाज्जीवानां चाऽसर्वज्ञत्वात् तत्कर्म्म तदनुरूपफलानुसंधानस्य चैतन्यसापेक्षत्वमिति तर्कानुग्रहाच्च । सर्वज्ञश्चेतन श्चेश्वर एव । नान्यः । उक्तं हि—

(५३) कर्मफलमतश्चेतनात् परमेश्वराज्जीवैः प्राप्यते । नान्यतः । राजादि रोषतोषाभ्यामिव तस्य तदुपपत्तेः । यतो ब्रह्मादीनामप्यधीशः स इति ॥

यथाजडानि बीजानि न फलन्ति स्वयं तथा ।
जडानि सर्वकर्माणि न फलन्तीश्वरं विनेति ।
यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तप इतिश्रुतेः ।
वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चनेति ।

गीतायाञ्च । क इह नु वेद बतावरजन्मलयो ऽग्रसरम् यत उदगादृषिर्यमनुदेवगणा उभये । तर्हि न सन्नचासदुभयं न च कालजवः । किमपि तत्र शास्त्रमवकृष्यशयीत यदेति (५४) ।

---

(५४) बताहो भगवन् इह जगति अग्रसरं पूर्वसिद्धं त्वा-मवरजन्मलयो ऽर्वाचीनोत्पत्तिनाशवान् कोनु पुमान् वेद जा-नाति । यत उदगाद् ऋषिरिति यतस्त्वतः ऋषि र्ब्रह्मा उत्पन्नः । कः यं ब्रह्माणमनु उभये आध्यात्मिकाधिदैविका देवगणा उत्-पन्नाः । ब्रह्मैव यदा न ज्ञातुमलन्तदा ततोऽप्यर्वाचीनास्ते सर्वे कथं जानीयुरिति भावः । यदा तु भवान् सर्वमवय उप संहृत्य शयीत योगनिद्रां वितन्वीत तदा अनुशायिनां जीवा-नां साधनं नास्ति । तथाहि न सत् स्थूलमाकाशादि न चासत् सूक्ष्मं महदादि वर्त्तते । न चोभयं सदसद्भ्यामारब्धं शरीरम् न च कालजवः तत्तत् परिणामनिमित्तभूतं कालवैषम्यम् । एवं सति तत्र तदा न किमपि इन्द्रियप्राणाद्यपि ज्ञानजनकम् । न ज्ञापकं शास्त्रमपि । अयमभिप्रायः—अर्वाक्सृष्टिगतानां देहा-द्युपाधिकृतान्तराणां कालवशेन च मलिनसत्वानां न तावद्-

श्रुति स्तुतेश्च । अतएव ईश्वरस्य न कदापि कर्माधीनत्वम् । तदनुभवमाह प्रेक्षावतां श्रीशुकः

सर्वभूतात्मदृक्साक्षी तस्यागमनकारणम् ।
विज्ञायाचिन्तयन्नाऽयं श्रीकामो माभुजत्पुरा ॥
पत्न्याः पतिव्रतायास्तु सखा प्रियचिकीर्षया ।
प्राप्तो मामस्यदास्यामि संपदोऽमर्त्यदुर्लभा (५५)

इति । अत्र सुदाम्ने तस्यार्जित पूर्वकर्माभावेऽपि ।

पात्रापात्रविवेकेन देशकालाद्युपेक्षणात् ।
वदान्यत्वं विदुर्वेदा औदार्य वचसाहरेरिति

भगवद्गुणदर्पणोक्त लक्षणेनौदार्येण संपत्फलदातृत्वस्य प्रकटम्प्रदर्शनात् प्रभुत्वप्रख्यापनान्नेश्वरस्य कर्माधीनत्वमितिद्योत्यते । तथा दक्षशापेन नारदस्यैकत्र वासाभावसम्भावके प्रारब्धेऽपि

---

गवज्ज्ञानसामर्थ्यम् । अतो न कदापीश्वरस्य प्राणिकर्माधीनत्वम् । स्वभक्तहितविधाने च तस्य सर्वथा स्वतन्त्रत्वादिति ॥

(५५) अयं सुदामा पुरा ऽन्यस्मिन् जन्मनि, अस्मिन् जन्मनि वा श्रीकामो मान्नाभजत् । अतोऽस्य प्रारब्धे तु द्रव्याभाव एव निर्दिश्यते । तथाप्यमर्त्यदुर्लभाः संपदो दास्यामीति निश्चित्य ददौ ताः । पत्नी प्रियचिकीर्षयाप्याऽऽगतस्य तस्य प्रपत्तेः सिद्धत्वादिति भावः ॥

गोविन्दभुजगुप्तायां द्वारवत्यां कुरूद्वह ।
अवात्सीन्नारदो ऽभीक्ष्णं कृष्णोपासन लालस-

इत्यादिना द्वारवत्यां नारदस्य चिरनिवासः। तथा मुनीनां शापेऽपि वज्रोद्धवादीनां यदूनां मुसलास्पर्श एव च श्रूयते। अतः स्वतन्त्रेच्छस्य सुविवेकिन ईश्वरस्य यादृशस्तादृशः संकल्प एव कारणं मुख्यम्। न तु तस्य कर्माधीनत्वं तत्र तन्त्रम्। किञ्च प्रभोः परमेश्वरस्य क्वापि प्राणि-प्रारब्धनाशकगुणत्वमप्युत प्रतीयते। अपराद्धाप-राद्धस्य च क्षमोचितस्थले क्षमाशक्त्यभावे औदा-र्यप्रकटनस्थले च कार्पण्ये अखण्डप्रभुत्वासिद्धेः। प्रभोः प्रभुत्वसंरक्षको न्याय एव हि महान्नायः। अन्यथा न्यायाऽन्याययो र्निरूपकविनिगमना-भावान्निरूपणा भावादप्रतिपत्तिरेव तयोरापद्येत। न हि क्षमाया औदार्यस्य वा उचितस्थले अक्ष-मिष्णुः कृपणो वा ईश्वरो न्यायी प्रभुरिति सं-घटते जातु। उचितत्वञ्च विशुद्धसत्त्वमूर्त्तिना ईश्वरेण स्वसंकल्पे सम्प्रधारितमित्येव सुव-चम्। नान्यत्। ईश्वरीय तथाविध संकल्पस्य सर्वैः प्रमेयस्य च शास्त्रप्रामाण्यात्सौष्ठवेन न विसंष्ठुलत्वम्। शास्त्रप्रामाण्यं चान्यप्रमाणान-

धिगम्यजीवन्मुक्तिविदेहकैवल्याद्यानन्दानुभवस्य जीवत्येव जीवे तेन उपलभ्योपभुज्यमानत्वाद-न्येभ्य आप्तत्वेन उपदिश्यमानत्वाच्च निर्विवा-दम्। तदनुभवप्रतिबन्धात्तु सामग्र्यभावमूलक-एव बौद्धादि प्रावादकानां विवादः। न तेन शास्त्रस्य किञ्चिद्धीयते। नैष स्थाणोरपराधो यद-न्धो नैनं पश्यतीति न्यायानुसृतनिरुक्तोक्तेः। अतो भगवानेव विश्वकारणं न कर्मेति सिद्धम्। ईश्वरस्य सृष्ट्यादि कर्तृत्वे स्वातन्त्र्ये चोदिते अमोघस्वभावशक्त्यन्यथानुपपत्त्यैव पूर्वं दत्तो त्तराया अपि प्रयोजनजिज्ञासाया ग्रहिलत्वे तु शाण्डिल्य सूत्रकृत्पुनस्तं समाधत्ते—मुख्यं तस्य हि कारुण्यमिति (५६)।

---

(५६) भगवतः सृष्ट्यादि प्रवृत्तौ प्रादुर्भावादौ च स्थूल-दृष्टया लीलाभूभारहरणादीन्यनेकानि कारणानि वदन्ति। विवेकदृष्ट्या तु तस्य मुख्यं कारुण्यमेव तत्र कारणम्। दुःख-निवृत्तिः सुखप्राप्तिरेव न हि केवले प्रवृत्तिहेतू; अपितु कर्त्त-व्यबुद्धिः स्वसुखदुःखाद्युदासीनापि प्रवृत्तिहेतुः। सा एव कारु-ण्यशब्देनात्रसूत्रे ऽभिप्रेतो ऽर्थः। अनादिकालात संसृत्यापन्नेषु जीवेषु कारुण्यं परमेश्वरस्य सृष्ट्यादौ प्रवर्त्तकं मुख्यम् कारणम्। न हि स्वार्थमेव सर्वः प्रवर्त्तते नान्यहितसाधने कर्त्तव्य बुद्ध्या कश्चित् इति अस्ति कश्चिच्छपथ इति। स्वयमेवाह श्रीमुखेन—

श्रीमद्भागवते च-नावेक्षसे यदि ततो भुवनान्यमूनि नालं प्रभो भवितु मेव कुतः प्रवृत्तिः। एवं निसर्गसुहृदि त्वयि सर्वजन्तोः स्वामिन् न चित्रमिदमाश्रित वत्सलत्वमिति। नन्वदृष्टस्य जड़त्वात् साक्षा त् तत् कारणत्वासिद्धौ तद्द्वारा चेतनस्य ज्ञानबलक्रियादिशक्तिमतो जीवस्यैवास्तु कारणत्वम्। अशक्तेनापि शक्तसाधनबलाद् दुर्घटशक्यसाधनस्य प्रायशोदर्शनात्॥कथमपि अव्यवहार्येण किमन्तर्गडुना ईश्वरेण जीवस्य चेतनत्वे प्रमाणं च, श्रुतिर्यथा–स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव। अत्रायम् पुरुषः स्वयं ज्योति र्भवतीति (५७)।

---

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणीति।

भगवतः कारुण्यलक्षणन्तु प्रतिकूलानुकूलोदासीनसर्वचेतनाचेतनवस्तु विषयं पालनानुगुणव्यापारं भगवतः कारुण्यमिति ज्ञेयम्। तदुक्तं भगवद्गुणदर्पणे–

परदुःखानुसन्धानाद् विह्वली भवनं विभोः।
कारुण्यात्मगुणस्त्वेष आर्त्तानां भीतिवारकं इति।

(५७) जीवात्माणुरपि चेतन इति तत् तत्वमाहेयं श्रुति र्दृष्टान्तेन बाह्यशून्यः कृत्स्नो रसघनो लवणरसमूर्तिरन्यविकारानुपलम्भाद्यथा; तथा जीवात्मा अनन्तरः अबाह्यः कृत्स्नः

चेन्न । जीवस्याऽसर्वज्ञत्वादित्युक्तपूर्वात् । यदा यथा कथं चित् सर्वेऽपि जीवाः संभूयापि असर्वज्ञत्वात् सृष्ट्यादे र्नैशीरंस्तदा किमुवाच्यजीवस्यैकस्य कस्यचित् स्वादृष्टद्वारापि सृष्ट्यादिकर्तृत्वमिति । जीवस्वरूपे हि निरूप्यमाणे जीवाख्यचेतनसमष्ट्यात्मकस्वशक्ति विशिष्टस्य भगवतः खल्वेकैकोंऽश एकैको जीवो जगति जागर्त्ति । स च तेजोमण्डलमध्यचरमार्तण्डरश्मिपरमाणुरिव परमचिदेकरसस्य तस्य परमेश्वरस्य चिन्मण्डलमध्यचरश्चित् परमाणुः । स च तत्समष्टिश्च उभयी ईश्वराद्भिन्ना अभिन्ना चेतिराद्धान्तः । तत्र भिन्नत्वदृष्ट्या उभय्या अपि जगत्कारणत्वानुपपत्तिरसर्वज्ञत्वात् । अभिन्नत्वदृष्ट्या सार्वज्ञे त्वीश्वरस्यैव विधान्तरेण कारणत्वमापतति । असर्वज्ञत्वे च नाभेदे इति । का तर्हि द्रविडप्राणायामेनेव पृथग् जीवकारणवादेनेष्टसिद्धिः । धाराप्रवाहेणादृष्टादि जन्यदेहादिसापेक्षत्वाच्च कथं तस्य जीवस्य निरंकुश-

---

प्रज्ञानघनश्चिन्मूर्तिः । अत्रायं पुरुषः स्वयं ज्योतिर्भवतीत्यनेन स्वप्रकाशचैतन्यज्ञीवतत्त्वं निरूपितम् । तस्माज्ज्ञानस्वरूपो जीवो न तु देहादिजड़रूपः स इति ।

ङ्कारणत्वं सिध्येत्। एतेन सृष्ट्यादि कतिमन्नि-
मित्तकारणमात्रस्य परमाण्वादि सामग्री सापे-
क्षस्य नैयायिकाभिमतस्येश्वरस्य विश्वकारणत्वं
प्रत्याख्यातं वेदितव्यम्। वेदान्तसूत्रभाष्ये शङ्क-
राचार्येण परमाणु खण्डनाच्च।

वस्तुतस्तुजरायुजादि चतुर्विधशरीरग्रामभाजो
मूढस्य जीवस्य वस्तुगत्या भगवद्देहत्वेऽपि ना-
स्ति ममेदं शरीरमिति तस्य साम्प्रतं भगवन्स-
मत्वानास्पदत्वप्रतिभासान्न नितान्तमभेदस्तस्ये-
श्वरेणेति विश्वस्य जीवाकारणता स्पष्टा।
नात्र किंचित् परं चोद्यमस्ति।

तस्मात् पृथगेकैको जीवो जीवसमष्टि र्वा
सर्वा संभूय भगवत इतरा अभिन्ना चेति सिद्धा-
न्ते शृङ्गग्राहिकया ग्राहिते जीवस्येश्वरांशत्वम-
णुत्वं चेतनत्वे सति ज्ञानगुणत्वमक्षरत्वञ्चोपपा-
द्यते। तत्राह व्यासः-ब्रह्मणोंश भूतस्तथेतरो
भोक्तेति (५८)।

---

(५८) जीवस्तु ब्रह्मणोंऽश भूतस्तस्मात् कर्मफलभोक्ता
च सः। कर्मफलभोक्तृत्वादेव च कश्चिद् बद्धः कश्चिन्मुमुक्षुः
कश्चिन्मुक्त इति व्यपदेश इति ॥

अंशो नानाव्यपदेशाद् (५९) इति च।

ममैवांशो जीवलोके जीवभूतः सनातन इति गीता च। एषोऽणुरात्मेति च॥

बालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः सचानन्त्याय कल्पतइति
बालादेकमणीयस्क मुतैकन्नैव दृश्यते।
ततः परिष्वजीयसी देवता सा मम प्रिया।

इत्यादि श्रुतिभ्यः। सूक्ष्माणामप्यहं जीव इति गीतायां श्रीभगवदुक्तेश्च जीवोऽणुरेव सिध्यति। विशेषतस्तु गीतायां यः सिद्धान्तः स एव निगमागमसिद्धान्त इत्यत्र नास्ति कस्यचिदास्तिकस्य द्विरुक्तिः। गीता हि वेदविदो-वेदजनकस्य वेदवेद्यस्य श्रीकृष्णस्य श्रीमुखादर्जुनसुबोधाय जाता। यथोच्यते-

गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः।

---

(५९) जीवस्तु भगवदंश एव। न प्रतिविम्ब आभासोऽवच्छिन्नो विवर्तो वा। ननु एव माग्रहः कुतः नानाव्यपदेशात् बद्धो मुमुक्षुर्मुक्त इति नाना व्यपदेशानिगमागमेषु दृश्यन्ते ये हि नाना व्यपदेशा प्रतिविम्बादिषु न संभवन्ति। प्रतिविम्बो रज्जुसर्पो घटाद्यवच्छिन्नाकाशो वा बद्धोऽयं मुमुक्षुरयम्मुक्तोऽयमिति विभज्य वक्तुं नहि युज्यते इति॥

या स्वयम्पद्मनाभस्य मुखपद्माद्विनिःसृता ॥
षट्शतानि सविंशानि श्लोकानां प्राहकेशवः ।
अर्जुनः सप्तपञ्चाशत्सप्तषष्टिं धनञ्जयः ।
धृतराष्ट्रः श्लोकमेकं गीताया मानमच्युत इति
सर्वोपनिषदो गावो दोग्धा गोपालनन्दन इति
च । एवं जीवस्येश्वरांशत्वमणुत्वं च प्रतिपाद्याऽथ
तस्य चेतनत्वेसति ज्ञानगुणत्वे निरूप्यमाणे श्रु-
तिरुपन्यस्यते—आत्मायं च विज्ञानमयो ज्ञान-
गुण इति । ज्ञानगुणत्वेनैव तत्तद्द देहव्यापित्व-
मिति प्रस्तुत श्रुत्याशयः ।
अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति ।
यथा व्याप्यशरीराणि हरिचन्दन विन्दुवदिति ।
स्कान्दोक्तेश्च । जीवस्याक्षरत्वे प्रमाणं च यथा ।
चिन्मात्रं श्रीहरेरंशं सूक्ष्ममक्षरमव्ययम् ।
कृष्णाधीनमिति प्राहुर्जीवं ज्ञानगुणाश्रयमिति ।
अतो जीवः सदा ज्ञान स्वरूपो ज्ञानगुण आ-
नन्दमयः परमाणुर्जन्ममरणातीतत्वात्षड्भाव-
विकारषडूर्मिरहितो गुणातीतोऽजातषडरिः कृ-
ष्णाधीनस्तदंश इति सिद्धम् । एष आत्मापहत-
पाप्मा विजरो विमृत्युर्विशोक इत्यादि श्रुतिर-
प्यत्रानुसन्धेया । ब्रह्मणो जीवस्य चत्वेतावानेव

पूर्वापरक्रमेण विशेषो यत् सर्वज्ञः अज्ञः परिपूर्णोऽपूर्ण आप्तकामोऽकिञ्चनो भर्ता भृत्यः प्रेरकः प्रेर्यो ऽशरीरः शरीरी अक्षरः क्षरी (६०) धारको धार्यमाणो व्यापको व्याप्यः स्वामी दासो भोक्ता भोग्यः सर्वशक्तिरशक्तः पिता पुत्रः परमेश्वरो जीव इति । स्यादेतत्-अशुद्धो बद्धोऽविद्यावृतो जीवो माभूज्जगतः करणम् । शुद्धोबुद्धोमुक्तो नित्यमुक्तो वा जीवस्तु तद्भवितुर्महतीति । तत्र न काचिदनुपपत्तिरिति । न । तस्याप्यणुत्वात् परतन्त्रत्वाच्च । अयम्भावः-सर्वे जीवा बद्धनित्यबद्धमुमुक्षुनित्यमुक्तमुक्ताश्चाणवः कृष्णाधीनाश्चेति यतो न स्वतन्त्रा अतोमुक्तोऽपि जीवो न प्रपञ्चकारणं स्यादिति । तत्र प्रमाणं श्रुतिः

कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः ।
यत् प्रसादादिमे सन्ति न सन्ति यदुपेक्षयेति।

श्रीमद् भागवतेऽपि-

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।

---

(६०) अत्र जीवस्यक्षरत्वोक्ति र्गीतोक्ताभिप्रायेण नेतव्येति न दोषः । सा गीता च यथा-

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यत इति ॥

यदनुग्रहतः सन्ति न सन्ति यदुपेक्षयेति ।

वेदान्तदर्शने यदा परमेश्वरो मुक्तोपसृप्य इत्युक्तस्तदा स कथं जगत् कारणं सिध्येत् । तथा हि–मुक्तोपसृप्यव्यपदेशादिति व्याससूत्रम्(६१)।

ननु आप्नोति स्वाराज्यमिति । सर्वेऽस्मै देवा बलि माहरन्तीति, तेषां सर्वेषु लोकेषु कामचारो भवतीत्यादि श्रुतिषु मुक्तजीवस्यापि महैश्वर्यं श्रूयते । स च कथं न समर्थः स्यात् सृष्ट्यादाविति चेन्नेत्युच्यते-जगद्व्यापारवर्ज्जमित्यादि व्याससूत्रात् (६२) ।

---

(६१) अविद्यादोषविनिर्मुक्ते रीश्वर उपसृप्यः प्राप्य इति श्रुतौ व्यपदेशान् मुक्तोऽपि जीवोऽणुरेव। उत् क्रान्तिगत्या गतीनामिति वेदान्तसूत्राच्च । अस्य उत् क्रान्तीत्यादिवेदान्त सूत्रस्यचायमर्थः । स यदास्माच्छरीरादुत् क्रामति सहैवैतैः सर्वैरुत् क्रामति । स एवास्माल्लोकात्प्रैति । चन्द्रमसमेवते सर्वे गच्छन्ति तस्माल्लोकात पुनरेवास्मै लोकाय कर्मणे इति जीवोत् क्रान्ति गत्या गतीनां श्रवणाद् जीवोऽणुरेव । अन्यथा श्रुत्यर्थोपपत्तये भवता कुत्र लोको विनिश्चितः । अस्मदादिभिस्तु न कुत्रापि दृश्यते । ब्रह्मण्डव्यापकस्य तस्य जीवस्य ब्रह्माण्डान्तः स्थावरजङ्गमादिचतुर्दश भुवनसंयोगेषु सम्पन्नेषु तद् बाह्येऽपि च ततसत्तातिरिक्तस्थानाभावात्तु स देह इव सर्वत्रचेतयेत । निखिलमूर्त्तद्रव्यसंयोगित्वं विभुत्वलक्षणमिष्टम् ।

(६२) मुक्तादिरुपासको जगत् कर्तृत्वादि व्यापारवर्जमन्यकर्तृत्वादौ भगवत् साम्यम्भजत इति ।

अतएव शाण्डिल्यो ऽप्याह—
न प्राणिबुद्धिभ्यो ऽसंभवादिति (६३)।
मुक्तजीवानामीशसाम्यं च भोगमात्रे उद्दिष्टम्।
भोगमात्रसाम्यलिङ्गाच्चेति (६४)।

वेदान्तसूत्रात्। जीवश्च देहेन्द्रियप्राणमनोविज्ञानेभ्योऽपि भिन्नो विलक्षणश्च। चक्षुरादिभी रूपाद्यनुभवामीति अबाधित-भेद-प्रतीतेः। योऽहं द्रष्टा सोऽहं स्पृशामीति प्रत्यनुसन्धातुरेकस्यैव प्रसिपत्तृत्वाच्च। नेन्द्रियाण्यात्मा। प्राणोऽपि नात्मा। प्राणो व्याकुलो मे गच्छतीति व्यक्तमनुभवात्। मनोऽपि नात्मा। मनसैव तव हार्द्दम्मया ज्ञातमिति ज्ञानकरणत्वे नैव तत् प्रतीतेः। वस्त्वदं निश्चितं जानाम्यहमिति व्यवसितत्वेन ज्ञातृधर्मतयानुभवाद् बुद्धिरपि नात्मा। तस्माद्वा एतस्मादन्नरसमयादन्यो ऽन्तरात्मेति श्रुतेश्च न देहादि जीवः। अतो जन्ममरणादयो

(६३) प्राणिबुद्धिभ्यो जीवबुद्धिचमत्कारेभ्यः सकाशान्न विश्वोत्पत्तिः सम्भवति। कुतः। असम्भवात्। जीवास्तु स्वेच्छाकृतिभ्यां स्वपुत्रोत्पत्तावप्यसमर्था आस्तामन्यवार्त्ता ॥

(६४) भोगमात्रेण सुखभोगमात्रेण मुक्तादिरुपासको भगवत्साम्यं लभते नान्यत्र लक्ष्मीविलासादाविति भावः ॥

धर्मा देहस्य नात्मनो जीवस्येति स्थापितम् । तदुक्तं श्रीमद्भागवते-नात्मा जजान न मरिष्यति नैधतेऽसौ न क्षीयते सवनविद्व्यभिचारिणां हि । सर्वत्र शश्वदनपाय्युपलब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं सदिति (६५) ।

नात्मा वपुः पार्थिवमिन्द्रियाणि देवाह्य सु र्वायुजलंहुताशः । मनोऽन्नमात्रं धिषणा च सत्त्व महं कृतिः खं क्षितिरर्थसाम्यमिति च । इत्थं च देहादिविशेषकृतमात्रविशेषान्न देवादिभ्योऽपि जीवजातेभ्यः सृष्ट्यादि संभवः । अतः परमेश्वर एव स्वमायाशक्त्या नानाब्रह्माण्डानिरचयति६६

---

(६५) आत्मा देहेन सह न जजान न जातः । अतो न मरिष्यति । नैधते न तेन सह वर्धते । नापाय्यपि न क्षीयते । यतस्तेषामागमापायिनां व्यभिचारिणां जन्मादीनां तु ज्ञातृमात्रं तत्तत्कालवित् सर्वत्र सर्वदाऽनपायित्वात् । उपलब्धिमात्रं स्वप्रकाश ज्ञानमात्रं शब्दागोचरत्वात् । न चैवं तर्हि कथं जन्मादिरूपत्वेन प्रतीयते ? तत्राह–यथेन्द्रियबलेनैकोऽपि प्राणो दशविधः कल्पितस्तथा सदपि चैतन्यजीवतत्त्वं विवेकाभावेन भ्रान्तैर्देहादिधर्मत्वेन कल्पित मिति ।

(६६) भगवतः सकाशान्मायया सृष्ट्युत्पत्तिक्रमं चाह श्रुतिः तस्माद् ब्रह्मणोऽव्यक्तमेवाक्षरं तस्मादक्षरान्महान्महतोऽहङ्कारः । तस्मादेवाहङ्कारात् पञ्चतन्मात्राणि तेभ्यो भूतानीति । तदुपबं-

स विश्वकृत् स हि सर्वस्य कर्ता यस्मिन् विश्वा भुवनानि तस्थुरिति, द्यावा पृथिवी जनयन् देव एकः। विश्वस्य कर्ता भुवनस्य गोप्तेत्यादि श्रुतिभ्यः। अन्यथा हे महाशय त्वमपि स्वबुद्ध्यैकमेवापि लोकं रचयित्वा तत् पालनादि कर्म कुरु। स्पष्टं च श्रुतयो विश्वस्यान्यकारणवादान्निराकृत्येश्वरकारणत्वं स्वयम्प्रति पादयन्ति। यथा कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्। संयोगएषान्नतुनात्मभावादात्माप्यनीशः सुखदुःखहेतोः। ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्। यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधि तिष्ठत्येक इति स्वभाव मेके कवयो वदन्ति कालं तथान्ये परि मुह्यमानाः। देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रमिति। तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्। पतिं

---

हणं च मुहुः श्रीमद्भागवते द्रष्टव्यम्। अत्र च संक्षेपेण दिङ्मात्रं प्रदर्श्यते।

प्रणम्य राधिका कान्तं भुक्तिमुक्तिप्रदं प्रभुम्।
वक्ष्ये तदनुरागाय विश्वोत्पत्तिक्रमं शुभम्॥

स च नारायणो जीवमायाकालकर्मस्वभावेश्वरो यदा प्राकृतप्रलये स्वाभिन्नदृश्याभावे स्वात्मानमसन्तमिव मन्यमानो ऽकामयत—एकोऽहं बहुस्यामिति । तदैव तस्माद् जीवमाया काल कर्मस्वभावाः पृथग् भूत्वा भिन्ना जाताः । ततो नारायणाधिष्ठितात् कालात् माया गुणानां क्षोभः । क्षुब्धायां मायायाम् स तु पुरुषरूपेण वीर्यमाधत्त वीर्यवान् । ततः पुरुषाधिष्ठितात् स्वभावात् परिणामो रूपान्तरापत्तिः । ततो नारायणाधिष्ठितात् कर्मणो महतो (बुद्धितत्त्वापरपर्यायस्य महत्तत्त्वस्य) जन्म। विकुर्वाणात् महत्तत्त्वादहं तत्त्वं व्यजायत । कार्यकारणकर्त्रात्मा भूतेन्द्रियमनोमयः । सोऽहं कारो विकुर्वाणस्त्रिधा समभवत्। वैकारिकस्तैजसस्तामसश्चेति। विकुर्वाणात्तामसाच्छब्दः तस्माच्छ्ब्दवत् नभोऽभूत् । नभसः स्पर्शस्तस्मादनिलः । अनिलाद् रूपम् तस्माद् रूपवत्तेजः । तस्माद्रसस्तस्माज्जलम् । तस्माद् गन्धो गन्धाद् गन्धवती पृथ्वी सर्वगुणा । शब्दादयो गुणाः । आकाशादीनां कारणान्यपि शब्दादयस्तेषां गुणाश्च ज्ञेयाः । विकुर्वाणादहङ्काराद्वैकारिकात् मनो जज्ञे वैकारिका देवाश्च । दिग्वातार्कप्रचेतोऽश्वि वन्हीन्द्रोपेन्द्रमित्रकाः प्रजापतिरिति । विकुर्वाणादहंतत्त्वात्तैजसादिन्द्रियाणि दशाभवन् ज्ञानकर्ममयानि च । श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि ज्ञानमयानि वाक्पाणिपादपायूपस्थानि कर्ममयानि । ततो भगवच्छक्तिप्रेरिता स्ते अन्योऽन्यं संहत्य सदसत्त्वं (स्थूलसूक्ष्मत्व) मुपादाय ब्रह्माण्डं ससृजुः । अन्योऽन्यं संहत्येत्यस्यायं भावः । भगवच्छक्त्या प्रेरितं नभो द्विविधं जातम् । ततोऽर्द्धांशेन तत् स्वयमेवस्थितमर्द्धांशस्य च तस्य चत्वारोंऽशाः कृताः । तत्रैकोंऽशस्तु तेन वायवे

पतीनां परमं परस्ताद्विदामदेवं भुवनेशमीड्यम् इति। स कारणं कारणकाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिप इति चेति (६७)।

---

दत्तो द्वितीयोंऽशस्तेजसे तृतीयोंऽशो जलाय तुर्योंऽशः पृथिव्यै। तथानिलोऽपिद्विधाभूत्। सचार्द्धांशेन तु स्वयं स्थितः। अर्द्धांशस्य च तस्य चत्वारोंऽशाः कृताः। तत्र प्रथमोंऽशो नभसे द्वितीयोंऽशोऽनलाय। तृतीयोंऽशो वारिणे तुर्योंऽशोऽवन्यै दत्तः। तथानलोऽपि द्विविधो जातः। ततोऽर्द्धांशेन स्वयमेव अनलः स्थितः। तत्रैकोंशस्त्वाकाशाय द्वितीयोऽनिलाय तृतीयोंऽशो वारिणे तुर्योंऽशो धरायै दत्तः। उदकमपि द्विविधं भूत्वा तथैव तेनापि विभागव्यवस्था संपादिता। एवं पञ्चीकृते पञ्चभूतान्यन्योन्यं संहत्योभयं समष्टिव्यष्टिरूपं विश्वं समृजुः। व्यष्टिदेहे त्वस्थिमांसस्नायुत्वग्रोमाणीति पञ्चविधा पृथिवी ज्ञेया। रेतःपित्तस्वेदलालारक्तरूपं पञ्चविधं जलं ज्ञातव्यम्। क्षुतृण्निद्राऽऽलस्यकान्तिरूपं पञ्चविधं तेजः। धावनप्रसारणोत्क्रमणचलनसंकोचन रूपः पञ्चप्रकारो वायुरिति। एव मुपादानसामग्र्या सर्वं कार्यजातं समजनीति।

(६७) स परमात्मा विश्वकारणम्। यतः स कारणं कारणकाधिपाधिपश्च। ननु तस्यापि किमपि कारणं भवितु मर्हतीति चेन् नेत्याहुः। अस्य भगवतो न कोऽपि जनिता कारणम्। न चाधिपः शासिता। भौतिकपदार्थानां कारणं प्रकृति स्तस्या अप्यधिपो हि स इति॥ ब्रह्मकारणप्रश्नस्याऽति प्रश्नत्वान् मूर्द्धपातफलकत्वेन श्रुतौ दूषितत्वाच्च न ब्रह्मणोऽपि कारणं ग्रष्टव्यम्। अभावाद्धि तत्कारणस्येति।

चिज्जडात्मकं विश्वन्तु ब्रह्मणः स्वरूपपरिणाम इत्युक्तं प्राक्। तदेवाह, श्रुतिश्च-यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ति सरूपाः। तथा क्षराद्विविधाः सौम्यभावा इति। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति च। भगवता श्रीकृष्णेनापि स्वयमुक्तम् विद्याविद्ये ममतनू विद्ध्युद्धवशरीरिणाम्। बन्धमोक्षकरी आद्ये मायया मे विनिर्मिते(६८) इति

स्थूलसूक्ष्मकारणभेदेन जीवदेहं त्रिविधम्। तत्र जडमायादि चतुर्विंशतितत्वमयं स्थूलदेहं प्रथमम्। द्वितीयं तु लिङ्गदेहम् सप्तदशतत्त्वमयं प्राहुर्मनीषिणः। स्थूलदेहे चतुर्विंशति स्तत्त्वानि तु पञ्चभूतानि दशेन्द्रियाणि शब्दस्पर्शादयः पञ्च विषयाः मनोबुद्धिचित्ताहंकारा इति। लिङ्गदेहे सप्तदशतत्त्वानितुपञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि पञ्चविषया मनोबुद्धी इति। ताभ्यां स्थूल

(६८) विद्या तु भगवदुपासना। ब्रह्मविद्या ब्रह्मोपासनेत्युक्तेः। विद्ययामृतमश्नुत इति श्रुतेश्च। कर्मात्मिका अविद्या फलानुसन्धानपूर्विकोपासना पञ्चपर्वा। अन्धं तमः प्रविशन्ति येऽह्यविद्यामुपासत इति श्रुतेः। अतः फलानुसन्धानपूर्विकोपासना फलदा ऽमुक्तिदा च। संसारदेत्यर्थः॥

सूक्ष्मदेहाभ्यान्तयो र्धर्मेभ्यश्च विलक्षणो जीव-स्तेभ्यो भिन्नः । तथा अविद्यामयाद् देहादपि विलक्षणो भिन्नश्च सः । नात्मा स्थूलदेहादिरूपः न हि तस्य स्थूलदेहादिस्वरूपम् । देहेन्द्रियप्राण मनो-बुद्धि-धर्मेभ्योजन्माऽप्यय स्थूलत्वकृशत्व क्षुत्पिपासा शोकमोहादिभ्यो भिन्नत्वात् तेषां साक्षित्वाच्च तस्य ॥ स सर्वान् ज्ञातुं शक्नोति । सर्वे एनमात्मानन्न जानन्तीति च ज्ञेयम् । एवं च ज्ञातं तत्वं प्रसीदतीति न्यायेन भगवत् प्र-सत्तये स्वात्मप्रसादनाय च भगवत् स्वरूपं स्व-स्वरूपं च सम्यङ् निरूपणपूर्वकं ज्ञात्वा न कस्याऽप्यहं न कोऽपि ममेति निश्चित्य देहगेह पुत्रदारधनेष्वसङ्गः सन् ममत्वं परित्यज्य तान् स-र्वान् दुःखप्रदान् बुद्ध्वा तथा असुरभोगान् मत्वा श्रीकृष्णे परब्रह्मपरमात्मनि भगवति नारायणे मधुसूदने पुरुषोत्तमे परमसगुणे परमनिर्गुणे सकलजनमनोहरे जगदुपादाननिमित्तकार[illegible] [illegible]-च्चिदानन्दविग्रहे सर्वावतारकारणे विश्वतनौ सर्वेश्वरे श्रीराधिकानाथे भक्तवत्सले भक्ताधीने सर्वज्ञे सर्वनियन्तरि सर्वान्तर्यामिणि अनन्तको-टिब्रह्माण्डाधीशे भक्तिप्रिये समस्तमङ्गलगुणस-

मुद्रे महाविभूतिपतौ परमकारुणिके विश्वमंगले परमसुन्दरे तद्भिन्नाभिन्नस्सन् कायादिभिः परां भक्तिं (प्रीत्या सेवनात्मिकाम् । भजसेवायामिति धातुः) कुर्यात् यथोक्तमभियुक्तैः । वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणादौदार्यादघशोषणादगणितश्रेयः पदप्रापणात् । सेव्यः श्रीपतिरेव सर्वजगतामेते यतः साक्षिणः प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुव इति (६९) ।

ननु तत्र तत्र वेदादिषु हिरण्यगर्भेन्द्रादय उपास्यत्वेन विहिताः । तेषु शिवस्तु साक्षाद् ब्रह्मैव । यथाम्नायते—देवा ह वै स्वर्गं लोकमायान् । तं ते रुद्रमपृच्छन् । को भवानिति । सोऽब्रवीदहमेकः प्रथममासम् नान्यः कश्चिन्मत्तो व्यतिरिक्तः । सोऽहं चान्तरादन्तरं दिशः प्राविशम् । अन्तरं स प्राविशम् सोऽहं नित्या नित्यो व्यक्ता

---

(६९) अत्रास्ति कश्चिदपूर्वो भगवद्भक्तभक्त्युद्गारः । यथा सुराधिपो वा भुजगाधिपो वा नराधिपो वा यदि हैहयः स्याम् । संदर्शनन्ते गुणकीर्तिनन्ते सेवाञ्जलिं ते तदहं विदध्यामिति ॥ यद्यपि केनापि कविनाकस्य चिद्राज्ञः प्रशस्तावयं श्लोको निर्मितस्तथापि तस्य भगवदीयार्थत्वेऽपि न काचित क्षतिः ।

व्यक्तौ, ब्रह्माहं विष्णुरहमिति। विष्णु पुराणे च-

न मत्तोऽभ्यधिको देवः सर्वेभ्योऽपि महानहम्।
अत एव महादेवः प्रथितो निगमेष्वहम्।
आद्यंत्रयं ब्रह्मरूप मिति। अत्रोच्यते-
ब्रह्मेन्द्राग्न्यादयो देवाः परत्वेनानुवर्णिताः।
वेदे नारायणादृष्ट्या न ते सर्वेत्र्यधीश्वरा इति

सुसिद्धान्तोत्तमो(७०)क्त्या हिरण्यगर्भेन्द्राग्न्यादयो न विश्वकारणानीश्वराः। यतस्तेऽपि जीवाणव ईश्वराधीनास्तज्जन्या तदधीनज्ञानाश्चेति न ते साक्षात् परब्रह्मत्वेनोपास्याः। सर्वेषान्तदधीनत्वे प्रमाणं यथा श्रीमद्भागवते ब्रह्मवाक्यं-

सृजामि तं नियुक्तोऽहं हरो हरति तद् वशः।
विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्।

वयम्भवस्ते तत एष महर्षिर्वहाम सर्वे विवशा यस्य दिष्टमिति। तेषां तज्जन्यत्वे प्रमाणं

(७०) ब्रह्मादिषु नारायणादृष्ट्या नारायणस्य आदृष्टिरासमन्ताद् दृष्टिस्तया दृष्ट्या न तु पृथग्दृष्ट्या। यथा मनो ब्रह्मेत्युपासीतेति विद्युद् ब्रह्मेत्याहुः। अन्नं ब्रह्मेत्येके इत्यादयो मन्त्रा अर्थवादप्रतिपादकास्तथान्यदेवोपासनापरा अपि वेदभागाज्ञेयाः। यथा च मनो ब्रह्मेत्युपासीतेत्यत्र मनसि ब्रह्म दृष्ट्या ब्रह्म उपासीतेति श्रुत्यभिप्रायो, न मनो ब्रह्मेति, तथा हिरण्यगर्भादयोऽपि नेश्वरा इति।

च यथा-नारायणाद् ब्रह्मा जायते,नारायणाद्रुद्रो जायते,नारायणादिन्द्रो जायते, नारायणात् प्रजापतिः प्रजायते नारायणादष्टौ वसवो जायन्ते नारायणादेकादशरुद्रा द्वादशादित्याः सर्वे ऋषयः सर्वाणि च्छन्दांसि नारायणादेव समुत्पद्यन्ते नारायणात् प्रवर्द्धन्ते, नारायणे प्रलीयन्ते इतिश्रुतिः। तेषां तदधीनज्ञानत्वे च-यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्य इति श्वेताश्वतरश्रुति र्मानम् (७१)।

अत्र ब्रह्मेत्युपलक्षणमन्येषां सर्वेषामपि देवादीनाम्। किंच सर्वोऽपि भगवतो बिभेति। तथा हि-भीषास्माद्वातः पवते भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति

---

(७१) अस्य परमेश्वरस्य महतो भूतस्य यन्निःश्वसितं तदेतद् ऋगवेदादि यः परमेश्वरः सर्गादौ ब्रह्माणं विदधाति ससर्ज तस्मै ब्रह्मणे वेदांश्च प्रहिणोति प्रददौ तं देवं द्योतमानमात्मबुद्धिप्रकाशं स्वविषयां बुद्धिं प्रकाशयन्तं मुमुक्षुर्मोक्षाकांक्षी अहं शरणं प्रपद्ये इति। देवपदवाच्यश्चात्र साक्षाच्छ्रीकृष्ण एवेति व्यक्तम्। समानार्थोपसंहृत श्रुत्यन्तरात्। यथा-यो ब्रह्माणं विदधाति पूर्वं यो विद्या स्तस्मै गोपायति स्म कृष्णः। तं ह देवमात्मप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्य इति॥

श्रुतेः । मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात्
वर्षतीन्द्रो दहत्यग्नि मृत्युश्चरति मद्भयात् ॥
लोकानां लोकपालानां मद्भयं कल्पजीविनाम् ।
ब्रह्मणोऽपि भयं मत्तो द्विपरार्ध्य परायुष इति
श्रीभगवदुक्तेश्च । नहि स्वयमभयपदस्य पर-
ब्रह्मणः कुतश्चिद्भयं संभवतीति यस्मादेवं तस्माद्
ईश्वरत्वेन विज्ञाया ऽनीश्वरं ये भजन्ति ते ।
स्वेष्टं न प्राप्नुवन्त्येव कल्पकोटिशतै रपीति-
सिद्धम् । अथ ब्रह्मा च नारायणः शिवश्च नारा-
यणः शक्रश्च नारायणो वसवोऽश्विनौ च नारा
यणो द्वादशादित्याश्च नारायणः सर्वे ऋषयश्च
नारायणः कालश्च नारायणो अधश्च नारायण
ऊर्ध्वञ्च नारायणो मूर्तामूर्तञ्च नारायणो नारायण
एवेदं सर्वं भूतं यच्चभाव्यमिति । सर्वं खल्विदं
ब्रह्म, एक मेवाद्वितीयं ब्रह्म, नेह नानास्ति
किंचनेत्याद्यभेदवादानां कागतिः । किंचन केव-
लमभेदवचनं वचनमात्रम् । हरिहरयोरन्तरदर्श-
नस्य प्रायश्चित्ताद्यनपनोद्य नामापराधाख्य (७२)

(७२) वैष्णवनिन्दादि । विष्णुशिवयोः पृथगीश्वरबुद्धिः ।
श्रीगुरुद्वेवे मनुष्यबुद्धिः । वेदपुराणादिशास्त्र निन्दा नाम्न्यर्थ

वादत्वकथनम् । नास्ति कष्ट व्याख्यायाः क्लिष्टकल्पना । नामबलेन पापे प्रवृत्तिः । अन्यशुभकर्मभिर्नामसाम्यदृष्टिः । अश्रद्दधाने नामोपदेशः । नाममाहात्म्ये श्रुतेऽपि अप्रतीति रिति दश नामापराधाः । नामापराधपापं दुरपनेयम् । यथा । सर्वापराधकृदपि मुच्यते हरिसंश्रयः । हरेरप्यपराधान्यः कुर्याद्द्विपदपांसनः । नामाश्रयः कदाचित् स्यात्तरत्येव न संशयः । नाम्नोऽपि सर्वं सुहृदो ह्यपराधात् पतत्यध इति ।

जले विष्णुः स्थले विष्णु र्विष्णुः पर्वतमस्तके ।
ज्वालमाला कुले विष्णुः सर्वं विष्णुमयं जगदिति ।
यथाहं वसुधा सर्वं सत्यमेतद्दिवौकसः ।
अहं भवो भवन्तश्च सर्वे नारायणात्मकाः ।
विभूतयश्च या स्तस्य तासामेव परस्परम् ।
आधिक्यं न्यूनता बाध्यबाधकत्वेन वर्तते ।
विष्णोरन्यन्तु पश्यन्ति ये मां ब्रह्माणमेव च ।
कुतर्क मतयो मूढाः पच्यन्ते नरके ऽबुधा. ।
त्वया तु यद्भयं दत्तं तद् दत्तमखिलं मया ।
मत्तो विभिन्न मात्मानं द्रष्टुं नार्हसि शङ्कर ।
योऽहं सत्वं जगच्चेदं सदेवासुरमानुषम् ।
अविद्या मोहितात्मानः पुरुषा भिन्नदर्शनाः ।
सितनीलादिभेदेन यथैकं दृश्यते नभः ।
विष्णु रुद्रान्तरं चैव यो ब्रूते मूढधीस्तु सः ।
उभयोः प्रकृतिस्त्वेका प्रत्यय भेदेन भिन्नवद्भाति ।
पश्यति कश्चन मूढो हरिहरभेदं विना शास्त्रम् ।
त्रय्या च विद्यया केचित् त्वां वै वैतानिका द्विजाः ।
यजन्ते वितते र्यज्ञै र्नानारूपाऽ मराख्यया ।

पातकोत्पत्तेर्महानिष्टजनकत्वात्। तथा च सनत्कुमारः-शिवस्य श्रीविष्णो र्य इह गुणनामादि सकलं धिया भिन्नं पश्येत् स खलु हरिनामाहितकर इतीति चेत् सत्यम्। एतद्वयेन अभेदस्वीकारे यस्तु नारायणं देवं ब्रह्मरुद्रादि दैवतैः। समत्वेनैव वीक्षेत स पाखण्डी भवेद्ध्रुव मिति आलिङ्गनं वरं मन्ये व्यालव्याघ्र जलौकसाम्। न सङ्गःशल्य युक्तानां नानादेवैकसेविनामित्यादि वैष्णवतन्त्रवचनविरोधे दुर्निवारे शरणमनुसन्धीयताम्। अभेदवचसां सर्वथा ऽभेदे तात्पर्य स्वीकारे, गीतायाम्-

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः।
तेऽपि मामेव कौन्तेय यजन्त्यऽविधिपूर्वकमिति

भगवद्वचने अविधिपूर्वकमिति निन्दा च कथं

---

त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम्।
बह्वाचार्यविभेदेन भगवन् समुपासते।
सर्व एव यजन्ति त्वां सर्वदेव मयेश्वरम्।
येऽप्यन्यदेवता भक्ता यद्यप्यन्यधियः प्रभो।
यथाद्रिप्रभवा नद्यः पर्जन्या पूरिताः प्रभो।
विशन्ति सर्वतः सिन्धुं तद्वत्त्वांगतयो ऽन्तत-,

इत्यादि वचनानि चात्रानुसंधेयानि ॥

संगच्छेत। इत्थं विरुद्धवचसां परस्परव्याकोपे सामञ्जस्य चिन्ताया मिदमुद्यते अन्येषां देवाना मभेददृष्टि वचनं समदृष्टिभक्त ज्ञान्यादि प्रतिपत्तिपरमेव। वैष्णवस्यान्यदेव समदर्शिनस्तु न भक्तिपोषः। प्रत्युत प्रत्यवायश्चेति व्यवस्था ऽऽदरणीया। नामाऽपराधप्रत्युत्तरन्तु श्रीमद्भागवते श्रुतिस्तुतेर्भावार्थ दीपिका व्याख्यानात्मके ग्रन्थे राधारमणदासो ददाति। यथा-वर्णाश्रमाचारपराणामेवायमपराधः (नामापराधः) भगवदेकशरणानां नामपराणान्तु स नास्तीति तेन (सनत्कुमारेण) एवोक्तम्-नामापराधां स्तरति नाम्न एव सदा जयादिति। पाद्मे च-

नामापराधयुक्तानां नामान्येव हरन्त्यघम्।
अविश्रान्ति प्रयुक्तानि तान्येवार्थ कराणि चेति।

अन्यथा, योहि मां (शिवं) द्रष्टुमिच्छेत ब्रह्माणं वा पितामहम्। द्रष्टव्यस्तेन भगवान् वासुदेवः प्रतापवानिति। प्रीते हरौ भगवति प्रीयेऽहं स चराचरमित्यादि नारायणोत्कर्षपराणि शिव वाक्यान्येव व्याकुप्येयुः। यत्तु केचिद्वैष्णवाः शिवपूजनमावश्यकत्वेनोपस्थितं चेत्तर्हि शिवाधिष्ठाने भगवन्तमेव पूजयन्ति। तत्र नाऽभेदे-

न पूजने तेषां तात्पर्यं अपि तु वैष्णवानामहं श-
म्भुरिति श्रीमद्भागवतवचनमनुसृत्य श्रीशिवम-
पि वैष्णवत्वेनाभिप्रेत्य तदधिष्ठाने भगवत्पूजा-
यामभिप्रायः। स्कान्दे च-

रकारादीनि नामानि शृण्वतो मम पार्वति।
मनः प्रसन्नता मेति रामनामाभिशङ्कयेति-
शिवस्य परमवैष्णवत्वमुक्तम् (७३)।

---

(७३) पुष्पदन्ताचार्य कृत महिम्नः स्तोत्रे—हरिस्ते साहस्रं कमलबलिमाधाय पदयो र्यदेकोनेतस्मिन्निजमुदहरन्नेत्रकमलम् गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगतामिति।

आदित्यपुराणमूला श्रीकृष्णस्य शिवत्वोक्तिस्तु समदर्शिभक्तहृष्टिमतानुवादः। शिवस्य वैष्णवत्वाभिप्रायमूलक एव च विष्णुधर्मोत्तरान्तिमोऽयमितिहासः। विष्वक्सेननामा कश्चिद् ब्राह्मण एकान्तभक्तः पृथ्वीं विचरन्नेवासीत्। स च कदाचिद् वनान्त उपविष्टः। तत्र ग्रामाध्यक्षसुतः कश्चिदागतस्तमुवाच। कोऽसीति। ततः कृतस्वाख्यानं पुनस्तमुवाच—मम शिरः स्थाने पीड़ा जातेति निजेष्टदेवं शिवं पूजयितुं न शक्नोमि। ततो मम प्रतिनिधित्वेन त्वमेव तं पूजयेति। एतदुक्तोभक्तः प्रत्युवाच—वयमेकान्तिनः श्रुताः।

चतुरात्मा हरिः पूज्यः प्रादुर्भावगतोऽथवा।
पूजयामास नैवान्यं तस्मात्त्वं गच्छ माचिरमिति।
तच्छ्रुत्वा शिरश्छेत्तुं शैवः खड्गमुन्नमितवान्। विप्रस्तद्-

स्तेन स्वमृत्युमनभीप्सन् विचारितवान्। रुद्राधिष्ठाने श्रीनृसिंह पूजामेव करिष्यामीति ततो नृसिंहाय नम इति गृहीतपुष्पाञ्जलौ तस्मिन् पुनः क्रोधाविष्टेन ग्रामाध्यक्षपुत्रेणखड्गः समुद्यमितः। ततश्चा ऽकस्मात तदेव लिङ्गं स्फोटयित्वा श्रीनृसिंह देवः स्वयमाविर्भूय तं ग्रामाध्यक्षपुत्रं सपरिकरं जघान लिङ्ग स्फोटनामा स्वयं च तत्र दक्षिणदेशे प्रसिद्धतया स्थितवानिति॥

अथ श्रीधरस्वामिभिरप्युक्तम्—माधवो माधवावीशौ सर्व सिद्धि विधायिनौ। वन्दे परस्परात्मानौ परस्परनुतिप्रियाविति तदपि समदर्शिभक्तदृष्टिपर मेव श्रेयम्। अन्यथा शिवपूजनस्य एकान्ति वैष्णवेन स्वातन्त्र्येऽभि प्रेयमाणे भृगुशापो दुरत्ययः। तथाहि चतुर्थे—

भृगुः प्रत्यसृजच्छापं ब्रह्मदण्डं दुरत्ययम्।
भवव्रतधरा ये च ये च तान् समनुव्रताः।
पाखण्डिनस्ते भवन्तु सच्छास्त्र परिपन्थिन इति।

अतो वेदविहितमेव शिवपूजनमनुष्ठेयं वैष्णवानाम्। तच्च—

एष एव हि लोकानां शिवः पन्थाः सनातनः।
यं पूर्वे चानुसन्तस्थु र्यत प्रमाणं जनार्दन इति॥

अतो वैष्णवा विष्णुना सहैव शिव पूजनं कुर्वन्ति। पृथगेव शिवोपासनायामुक्त दोषावकाशः।

श्रीमद्भागवते—मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ। नारायणकलाः शान्ता भजन्ति ह्यनसूयव इति। अस्य मुमुक्षव इत्यादि पद्यस्यार्थो यथा—मुमुक्षवस्तु भूतपतीन् यमेन्द्रेशाजवरुणकुवेरादीन् हित्वा नारायणस्य शान्ताः कला आवेशावतारादीन् भजन्ति। कथंभूतान् घोररूपान् सेवया अल्प फलदानेनाल्पापराधेन प्राणनाशकान्। कथं भूता मुमुक्षवः।

अनसूयवः सर्वेषु देवेषु भगवद्भावनया तदसूयारहिताः सन्तः भजन्तीत्यनेन भेदसत्त्वमुक्तम् । यतो जीवन्मुक्तिदशायामपि परमेश्वरजीवयोर्नात्यभेदः श्रुतिसंमतः किन्तु किञ्चिद्भेदोऽस्त्येव । यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेति श्रुतेः । ब्रह्मवादिनां मुक्तानां भेदाभावे तु नमनादिकं भजनं न संभवि । यतस्तयोरत्यभेदाभावत्वमेव यतश्च न केनापि देहान्ते ब्रह्माहमस्मीति भावेन देहस्त्यक्तः । ततः ॥ तद्ध्यानोद्रिक्तया भक्त्याविशुद्धधिषणाः परे । तस्मिन्नारायणपदे एकान्तमतयो गतिमिति युधिष्ठिरादीनां गतिः ॥ वासुदेवे भगवति ह्येकान्तमति राप तमिति द्रौपद्याः ॥ कृष्ण एव भगवति मनोवाग्दृष्टिवृत्तिभिः । आत्मन्यात्मानमावेश्य सोऽन्तः श्वासमुपारमदिति भीष्मस्य ॥

तेऽपि तन्मुखनिर्यासं यशो लोक मलापहम् ।
हरेर्निशम्य तत्पादं ध्यायन्त स्तद्गतिं ययुरिति प्रचेतसाम्
एवं सा कपिलोक्तेन मार्गेण चिरतः परम् ।
आत्मानं ब्रह्मनिर्वाणं भगवन्तमवापहेति-देवहूतेः ।
इच्छा द्वेषविहीनेन सर्वत्रसमचेतसा ।
भगवद्भक्तियोगेन प्राप्ता भागवतीगति रिति । कर्दमस्यापि ।
एवंविधो ऽनेक गुणः स राजा परात्मनि ब्रह्मणि वासुदेवे ।
क्रियाकलापैः समुवाहभक्तिं यया विरंच्यां निरयांश्चकारेत्यम्बरीषस्य ।
स तत्र निर्मुक्तसमस्तसङ्ग आत्मानुभूत्या विधुतत्रिलिङ्गः ।
परेऽमले ब्रह्मणि वासुदेवे लेभेगतिं भागवतीं प्रतीतइति ययातेः ॥
सर्वत्रसङ्गमुत्सृज्य स्वप्नौपम्ये न भार्गवी ।
कृष्णे मनः समावेश्य विधुनोल्लिङ्गमात्मन इति देवयान्याः ।
परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना ।
समाधाय परं दध्यावस्पन्दासु र्यथातरुरिति परीक्षितोऽपीति ॥

यथातरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः । प्राणोपहाराच्च यथेन्द्रियाणि तथैव सर्वार्हणमच्युतेज्ये इति-तु विष्णोर्न साम्यदृष्ट्या संगमनीयम् । कथं तर्हि ? उच्यते । सर्वे देवाः सर्वे पितरः सर्वे मनुष्या विष्णुनाऽशितमश्नन्ति विष्णुनाघ्रातं जिघ्रन्ति विष्णुना पीतं पिबन्तीति श्रुते, यथा प्राणोपहारात् सर्वेन्द्रियाणां तृप्तिर्भवतीति दृष्टान्तोऽयं प्रत्यक्षानुभवकारक स्तथा भगवतोऽच्युतस्येज्या सर्वार्हणं देवासुरमनुष्यमृगखगकीटपतङ्गादीनामप्यर्हणं (तर्पणं) भवतीति व्याख्येयम् । तथा चोक्तमाश्वलायनेन—

यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानाम् ।
तेनैव पिण्डां स्तुलसी विमिश्रा नाकल्पकोटिं पितरस्तुतृप्ताइति

स्मृत्यन्तरे च—

गृहे यदस्ति सिद्धान्नं तद्विष्णोः प्राङ्निवेद्य च ।
दद्याद् देवर्षि पितृभ्यस्तत्तेषां तृप्तिकारकमिति ।

उद्धवेन चोक्तम्—

त्वयोपभुक्तस्रगन्ध वासोलङ्कारचर्चिताः ।
उच्छिष्टभोजिनोदासास्तव मायां जयेमहीति ॥

मे नोपयुंज्यात् निवेदितमिति भगवद्वाक्यस्यार्थस्तु अन्यस्मै देवायार्पितं मे मह्यन्नोपयुंज्यात् न निवेदयेदिति ।

पितृशेषं तु यो दद्याद् हरये परमात्मने ।
रेतोधाः पितरस्तस्य भवन्ति क्लेश भागिन इति

दोषस्मरणात् । कृष्णार्पितन्तु सर्वेभ्योदेयम् ।

विष्णो र्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चैव तद्देयं तदानन्त्याय कल्पत—

इत्युत गुरुस्मरणात् ।

वैष्णवै रपि अन्यदेवेष्व ऽवज्ञा न कार्या । यथोक्तं स्कान्दे-

हरि रेव सदा राध्यः सर्वदेवेश्वरेश्वरः ।
इतरे ब्रह्मरुद्राद्या नावज्ञेयाः कदाचनेति ॥

अवज्ञाभावप्रदर्शनाभिप्रायेण भगवद्विभूतित्वेनैव अन्येषामपिदेवानां वैष्णवागमादौ तद्बहिरङ्गावरणसेवकत्वेन पूजाविधानमुक्तं च ज्ञातव्यम् । अतएव श्रीमद्भागवते-

ततः संपूज्य शिरसा ववन्दे परमेष्ठिनम् ।
भवं प्रजापतीन् देवान् प्रह्लादो भगवत्कला-

इत्युक्तम् । (७४) ।

---

(७४) युधिष्ठिरेण चोक्तम्-क्रतुराजेन गोविन्द ! राजसूयेन पावनीः । यक्ष्ये विभूती र्भवत स्तत् संपादय नः प्रभो इति । पाद्मे कार्तिक माहात्म्ये सत्यभामां प्रति श्रीभगवता ऽप्युक्तम्

सौराश्च शैवा गाणेशा वैष्णवाः शक्तिपूजकाः ।
मामेव प्राप्नुवन्तीह वर्षाम्भः सागरं यथा ।
एकोऽहं पञ्चधाजातः क्रीड़या नामभिः सहेति ।

तथा नारद पञ्चरात्रे-

ज्ञायतेऽत्यन्त दुःखेन सेयं प्रकृतिरात्मनः ।
दुर्गेति गीयते सद्भि रखण्डरसवल्लभेति ।

अतएव श्रीभगवदभेदेनोक्तं गौतमीयकल्पे-यः कृष्णः सैव दुर्गा स्याद् या दुर्गा कृष्ण एव स इति । तस्मात्तदीयत्वेनैवोपासना

र्या गुणः । तत्र च शिवावज्ञादौ महान् दोषः । यथा चतुर्थे नन्दीश्वरशापः—संसरन्त्विह ये चामुमनुशर्वाऽवमानिनमिति । अत एवोक्तं भगवता—

योमां समर्चयन् नित्यमेकान्तं भावमाश्रितः ।
विनिन्दन् देवमीशानं स याति नरकं ध्रुव मिति ।
अहं सर्वेषु भूतेषु भूतात्माऽवस्थितः सदा ।
तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनमिति ।
यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् ।
हित्वाऽर्चां भजते मौढ्याद् भस्मन्येव जुहोति स इति च ।

तस्य च मूढस्य मद्दृष्ट्यभावात् सर्वभूतावज्ञापि भवति । ततस्तद्दोषेण भस्मनि यथा जुहोति कश्चित् तस्याश्रद्दधानस्य फलाभाव इत्यर्थः । मौढ्याच्छैली दारुमयी वा काचित् प्रतिमेय मिति बुद्ध्या । अन्यथा अर्चावतारावज्ञास्यात् । तत्र च दोष उक्तः—अर्च्ये विष्णौ शिलाधी र्गुरुषु नरमति र्वैष्णवे जाति बुद्धि र्विष्णो र्वा वैष्णवानां कलिमलमथने पादतीर्थेऽम्बुबुद्धिः । शुद्धे तन्नाम्नि मन्त्रे सकलकलुषहे शब्दसामान्यबुद्धि र्विष्णौ सर्वेश्वरेशे तदितरसमधी र्यस्य वा नारकी स इति । अग्निपुराणेऽप्युक्तं दशरथमारितपुत्रस्य तपस्विनो विलापे । यथा—

शिला बुद्धिः कृता किं वा प्रतिमायां हरे र्मया ।
येन कर्म विपाकेन पुत्रशोको ममेदृश इति ।

श्रीमद्भागवते—

अहमुच्चावचै र्द्रव्यैः क्रिययोत्पन्नया ऽनघे ।
नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ।
आत्मनश्च परस्यापि यः करोत्य ऽन्तरोदरम् ।
तस्य भिन्नदृशो मृत्यु र्विदधे भयमुल्बण मिति ।

भिन्नदृशः—क्षुधितादिकमपि दृष्ट्वा स्वोदरादिकमेव केवलं यो बिभर्ति तस्येत्यर्थः। पूजादि साफल्यार्थं क्वापि भूते भेदबुद्धि र्न विदधीतेति भावः।

अथ मां सर्वभूतेषु भूतात्मानं कृतालयम्।
अर्हयेद् दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा।
तितिक्षया करुणया मैत्र्या चाखिलजन्तुषु।
समत्वेन च सर्वात्मा भगवान् संप्रसीदतीति।

अथ यतो हेतोरवमाने मे न तोष श्चाऽतो यथायोग्यं यथा- शक्ति दानादिना तदभावे मानदानेनैव। तच्चाऽभिन्नेन चक्षुषे- त्यर्थः। भूतानुकूल्ये प्रयोजनं च भगवत् परितोष एव ज्या- यान्। यथोक्तम्—

यथा सर्वात्मभावेन तुष्यते भगवानजः।
न तथा तपसा योगै र्मखै र्भूतावमानिनः।

यथा सर्वभावभजनेन भगवांस्तुष्यति तथा भूतावमानिनः पुरु- षस्य तप आदिभि र्न तुष्यतीत्यर्थः। इत्थं सर्वेषां सामान्येना- ऽर्हणे प्राप्ते विशेषं च दर्शयति— जीवाः श्रेष्ठा ह्यजीवाना मित्यारभ्य।

ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञो ऽभ्यधिकस्ततः।
अर्थज्ञात संशयच्छेत्ता ततः श्रेयान् स्वधर्मकृत्।
मुक्तसङ्ग स्ततो भूयान ऽदोग्धा धर्ममात्मनः।
तस्मान् मय्यर्पिताशेष क्रियार्थात्मा निरन्तरः।
मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणः।
न पश्यामि परं भूतमकर्त्तुः समदर्शनादिति।

पूर्वपूर्वस्मादुत्तरोत्तरस्मिन् एकैकगुणाधिक्येनाधिक्यम्। धर्मम- दोग्धा निष्कामकर्मा। न तु धर्मध्वजमात्र इति बोध्यम्।

प्रह्लादसंहितायाम् चोक्तम् ।

न सौरो न च शैवो वा न ब्राह्मो न च शाक्तिकः ।

न चान्यदेवताभक्तो भवेद् भागवतोपमः ।

ततो मद्भक्तेष्वादरादिबाहुल्यं कर्त्तव्यम् । अन्यत्र तु यथाप्राप्तं यथाशक्ति चेति भावः ।

अन्येषामादरावश्यकत्वं चान्यतो रागद्वेषनिवृत्त्या झटिति भगवत् प्रीति प्रस्फूर्ति फलकं ज्ञेयम्। उक्तं हि विष्णुधर्मे-

रागादि दूषितं चित्तं नास्पदं मधुसूदिनः ।

बध्नाति न रतिं हंसः कदाचित् कर्द्दमाम्बुनीति ।

अन्यच्च—न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।

भवन्तिकृतपुण्यानां भक्तानां पुरुषोत्तम इति ।

पाद्मे—शोकामर्षादिभिर्भावै राक्रान्तं यस्य मानसम् ।

कथं तत्र मुकुन्दस्य स्फूर्ति संभावना भवेदिति ।

यदा यस्य कस्याप्यनादरे भगवत् प्रीतौ विक्षेपाऽऽतङ्कस्तदा किमु वाच्यं वैष्णवावमाने दोष इति । तथा च स्कान्दे—

निन्दां शृण्वन्ति ये मूढा वैष्णवानां महात्मनाम् ।

पतन्ति पितृभिः सार्द्धं महारौरव संज्ञके इति ।

श्रीमद्भागवते—श्रिया विभूत्या भिजनेन विद्यया त्यागेन रूपेण बलेन कर्मणा । जातस्मयेनाऽन्धधियः सहेश्वरान् सतोऽवमन्यन्ति हरिप्रियान् खला इति । पाद्मोत्तरखण्डे—यथा

पूजितो भगवान् विष्णु र्जन्मान्तरशतैरपि ।

प्रसीदति न विश्वात्मा वैष्णवे चावमानिते ।

दृष्ट्वा भागवतं विप्रं नमस्कारेण नार्चयेत् ।

देहिनस्तस्य न च वै क्षमते हरिरीश्वर इति ।

बृहन्नारदीये—

पूजनाद्विष्णु भक्तानां पुरुषार्थोऽस्ति नेतरः ।

कामैस्तै स्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्य देवताः ।
तं तं नियम मास्थाय प्रकृत्या नियताः स्वया ।

---

तेषु तद्द्वेषतः किञ्चिन् नास्ति नाशनमात्मन इति । यर्हि शतधन्वनाम्नो राज्ञो भगवदाराधनपरस्यापि वेदपुराणविप्रवैष्णवनिन्दकेन सह संभाषामात्रेणापि कुक्कुरादियोनिप्राप्तिरुक्ता विष्णुपुराणे तर्हि आधुनिकानां धर्मद्रुमोच्छेदकानां भगवद्विमुखानां खलानां कागतिरिति भगवानेव वेत्ति। परनिन्दा, परस्तुति, देवतानिन्दनानि द्वात्रिंशदपराधेषु परिगणितानि वैष्णवागमेषु यथा—

यानै र्वा पादुकै र्वापि गमनं भगवद् गृहे ।
देवोत्सवाद्य ऽसेवा च अप्रणाम स्तदग्रतः ।
उच्छिष्टे वाप्यऽशौचे वा भगवद् वन्दनादिकम् ।
एकहस्तप्रमाणश्च तत् पुरस्तात् प्रदक्षिणम् ।
पादप्रसारणं चाग्रे तथा पर्यङ्कबन्धनम् ।
शयनं भक्षणं चापि मिथ्या भाषणमेव च ।
उच्चैर्भाषा मिथो जल्पो रोदनानि च विग्रहः ।
निग्रहा नुग्रहौ चैव नृषु च क्रूरभाषणम् ।
कम्बला वरणं चैव परनिन्दा परास्तुतिः ।
अश्लीलभाषणं चैव अधोवायु विमोक्षणम् ।
शक्तौ गौणोपचारश्च अनिवेदित भक्षणम् ।
तत्तत्कालोद्भवानां च फलादीनामनर्पणम् ।
विनियुक्तावशिष्टं च प्रदानं व्यञ्जनादिके ।
पृष्ठं कृत्वाशनं चैव परेषामभिवादनम् ।
गुरौ मौनं निजस्तोत्रं देवता निन्दनं तथा ।
अपराधास्तथा विष्णो द्वात्रिंशत् परिकीर्त्तिता इति ॥

यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितु मिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ।
स तया श्रद्धया युक्तस्तस्या राधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तान्।
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति यान्तिमद्याजिनोऽपिमा-
मिति।गीतादिषु निन्दनन्तु भेददृष्ट्या नेयम् नहि
निन्दानिन्दनीयन्निन्दितुम् । किन्तर्हि तदितरत्
स्तोतु मिति शवरस्वाम्युक्तदिशा भगवत् पूजा
प्रवर्तनपरमेव विभावनीयम् । भेददृष्ट्यान्यदेवा-
नाम् पूजनानुमोदने त्वनेकेश्वरत्वप्रसङ्गः पुरा-
णादीनां परस्पर विरोधश्च दुष्परिहर एव स्यात्
पुराणादिषु सर्वत्र विष्णुशिवयोरभिन्नेश्वरत्वप्र-
तिपादनम्। एक मेवाऽद्वितीयं ब्रह्म नेह नानाऽस्ति
किञ्चनेत्यादि श्रुतिश्चानेकेश्वरत्वं प्रत्याचष्टे ।
श्रीमद् भागवते च-

त्वमेक एवास्य सतः प्रसूतिस्त्वं सन्निधानं त्वमनुग्रहश्च । त्वन्मायया मोहितचेतसस्त्वां पश्यन्ति नाना न विपश्चितो य इति ।

भेददृष्ट्या पूजनस्योत्कृष्टफलत्वमप्युक्तमभि
युक्तैः-

अस्थिप्राणो विधातुर्या हिरण्यकशिपुः श्रियः।
लेभे तः स्मरणादेव प्रह्लादो हि मधुद्विषः।
या विभूति र्दशग्रीवे शिरश्छेदेन शङ्करात्।
दर्शनादेव रामस्य सा विभूति र्विभीषणे।
विधे र्वा धूर्जटे र्वापि वरदाने न दर्पिताः।
दुष्टा जगद्द्रुहो जग्मु र्विष्णुवन्हौ पतङ्गतामिति

क्वचिद् हरिहरविरञ्चीनां परस्पर विरोधो
क्तयः पुराणेषु या दृश्यन्ते तासां समाधानन्तु-

विभूतयश्च यास्तस्य तासामेव परस्परम्।
आधिक्यं न्यूनता बाध्यबाधकत्वेन वर्त्तते।

इति दत्तपूर्वम् ॥ वैष्णवे च-

तथाप्यनेकरूपस्य तस्य रूपाण्यहर्निशम्।
बाध्यबाधकतां यान्ति कल्लोला इव सागर इति

परमेष्ठ्यपि निष्ठावान् ह्रियते हरिरप्यजः।
भवोऽप्य ऽभवमायाति कैवास्था मादृशे जने-

इत्यादि वाशिष्ठादि वचनानि तु विभूति तिरो-
धानपरत्वेनैव नेयानि। अन्यथा नारायणस्येश्व-
रत्वख्यापकवचनानां व्याकोपो दुष्प्रतिसन्धान-
आपद्यतेति॥ यदाऽन्यदेवनिन्दने पापमुच्यते तदा
साक्षाद्भगवन्निन्दनजन्यपापस्य का कथा वक्त

व्या । स्वयं च श्रीमुखेन स्वनिन्दकान्निन्दति भगवान् गीतायाम्—

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरम्
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः।
राक्षसीं मासुरीं चैव प्रकृतिं मोहिनीं श्रिता इति

श्रीमद्भागवते—

निन्दां भगवतः शृण्वंस्तत् परस्य जनस्य वा।
ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युत इति । अग्निपुराणे च—

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।
विष्णुभक्तिपरो दैव आसुरस्तद्विपर्यय इति ।

श्रीमद्भागवते च—

मुक्ता मुमुक्षवो ह्यन्ये यं भजन्त्यच्युतं प्रभुम् ।
को न सेवेत तं साधुर्ब्रह्मविद्ब्राऽसुरं विनेति (७५)।

---

(७५) मुक्ताः सनकादयः । मुमुक्षवः प्रह्लादादयः । अन्ये देवा ब्रह्मादयो यं भगवन्तमच्युतं प्रभुं सच्चिदानन्दविग्रहं परं ब्रह्म भजन्ति तं परमेश्वरं कः साधुर्ब्रह्मवित् सेवेत ? महासुरं विना तथा च श्रुतिः—

यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेति ।

असुरा स्तु वाक्छलैर्भगवत सच्चिदानन्दविग्रहखण्डनेन तदनादरं कृत्वा न भजन्ति; ते मन्दाः केवलं भगवद्भजनेनात्मानमज्ञानावृतं मन्यन्ते। न शब्दादिविषय सेवनेनेति। भगवद्भक्ता एवासुराः। यतः कलौयुगे त एव बुधोत्तमा ये सदाचारभ्रष्टा भगवद्विग्रहनिन्दका भगवद् गुणश्रवणपूजनादिरहिता अभक्ताः। तेषां कलौ स एव धर्मः। तदुक्तं श्रीमद्भागवते—

कलौ न राजञ्जगतां परं गुरुं त्रिलोक्यनाथानत पादपल्लवम्
प्रायेणमर्त्या भगवन्तमच्युतं यक्ष्यन्ति पाखण्डविभिन्नचेतस इति

अस्य श्लोकस्यार्थो यथा—कलियुगे तु मर्त्या नराधमाणो ऽपि भगवन्तमच्युतं सर्वैश्वर्यप्रदमपि न यक्ष्यन्ति नार्चयिष्यन्ति। कथंभूता मर्त्याः पाखण्डविभिन्नचेतसः। तद्भजने त्वज्ञानामधिकारोऽस्ति न नो मुक्तानां ज्ञानिनाम्। यतोवयमेव ब्रह्मभूताः सजातीयविजातीयस्वगतभेदशून्या इति वदद्भिः पाखण्डैर्जनैश्च विभिन्नं चेतो येषां ते। कथं भूतं भगवन्तम्। जगतां पतिं पालकञ्जनकमित्यर्थः। पुनः किंविशिष्टम्? गुरुं हितोपदेष्टारम्। अतस्त्रैलोक्यनाथैर्ब्रह्मादिभिः आसमन्तान्नतं पादपल्लवं यस्य तमपि यतो न भजन्ति यतोऽसुरा गुरुजनकद्रोहिणास्ते मन्दभाग्याः प्रायेणेत्यस्याशयस्तु—पुरुषोत्तमा देवोत्तमांशा भजन्ति पाखण्डविभिन्नचेतसस्त्वसुरा न भजन्ति न यक्ष्यन्तीत्यर्थः। भगवन्तमभजन्तो जीवा ब्राह्मणादय एवासुराः। तदुक्तं स्कान्दे—

चण्डी युद्धे हता ये तु राक्षसा घोरकर्मणः।
कलौ जाता द्विजत्वेन बाधन्ते श्रोत्रियान् कृशान् इति।

यन्नामधेयं म्रियमाण आतुरः पतन्स्खलन्वा विवशोगृणन् पुमान्

विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति यच्छ्रयन्ति न तं कलौ जना इति च।

असुर्या नाम ते लोका अन्धेन तमसावृताः।

तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जना इति

श्रुतौ ये भगवद्विमुखास्त एवात्महन इति पदेन उक्ताः। ते नरकलोका असुर्या असुराणां स्वभूता असुरेभ्यो हिताः। असुर्या इति पाठे सूर्यविवर्जिता इत्यर्थः। अथैतच्छ्रुत्यर्थो यथा—कीदृशाः अन्धेन तमसा घोरा इति भावः। तान् लोकान् प्रेत्यमृत्वा ते ऽभि गच्छन्ति वारं वारं गच्छन्ति ये के च के चन आत्मघ्नो जना इति।

योऽन्यथा सन्तमात्मान मन्यथा प्रतिपद्यते।

किं तेन न कृतं पापं चौरेणात्मापहारिणेति।

आत्मा श्रीकृष्ण एव। एवं स्वचित्ते स्वत एव सिद्ध आत्मा प्रियोऽर्थो भगवाननन्त इति श्रीमद्भागवतोक्तेः। एतेन—नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम्। मयानुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स आत्महेति॥

श्रीमद्भागवतपद्यपठित आत्मह शब्दोऽपि व्याख्यातः। या कृतघ्नता सा स्वोपकारिहननमेवेत्याशयात्। यथोक्तं रसानन्देयोऽसृजत् सर्वभूतानि योऽन्तरात् सेश्वरोऽवति।

तं विष्णुं येऽवमन्यन्ते कृतघ्नास्ते पतन्त्यधः।

ब्रह्मरुद्रादयो देवास्तीर्थदानार्चनाध्वराः।

नैव शक्ताः परित्रातुं नरं कृष्णपराङ्मुखमिति।

यद्वा—आत्मानं हन्तीत्यात्महेति व्युत्पत्त्या नित्यस्यात्मनो हननं यद्यपि कदापि न संगच्छते तथाप्यज्ञानस्थगितमतिभिरप्राप्यमाण आत्मा भगवान् हत इव भवति। वारं वारं जन्ममर-

सर्वावतारकारणत्वाच्च एकः श्रीकृष्ण एव देवः सेव्यः। तस्य सर्वावतार कारणत्वं चोक्तं श्रीमद्भागवते-

---

त्क्लेशसहनात्तत्कादपराधादिति। स्वभक्तं च स्वयं स्तौति भगवान् श्रीमुखेन गीतायाम्-

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः।

भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययमिति।

श्रीमद्भागवते च-

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।

कुर्वन्त्य हैतुकीं भक्ति मित्थम्भूत गुणो हरि रिति,

कले र्दोषनिधे राजन्नस्ति ह्येको महान् गुणः।

कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेदिति।

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरे ऽर्चयन्।

यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशव मिति च।

अन्यत्र च=घोरे कलियुगे प्राप्ते सर्वधर्मविवर्जिते।

वासुदेवपरा मर्त्यास्ते कृतार्था न संशय इति।

कृष्णं संकीर्तयन्मर्त्यः संसारान्मुच्यते ऽनघ।

तथा नान्यः कलौ पन्था विद्यते पृथिवी पते इति।

महाभारते-एष निष्कण्टकः पन्था यत्र संपूज्यते हरिः।

कुपथं तं विजानीयाद् गोविन्दरहितागमम् इति।

ब्रह्मविचारणमपि भगवद्भक्तिरिति तत स्तूयते। यथा-स्नातं तेन समस्ततीर्थसलिले दत्ता च सर्वावनि र्यज्ञानां च सहस्रकं खलु कृतं देवाश्च संपूजिताः। उद्धारं गमिताश्च सर्वपितरस्त्रैलोक्यपूज्यो यतो यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुया दिति।

एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्
इन्द्रारि व्याकुलं लोकं मृडयन्ति युगेयुग इति ७६

स्वस्य सेव्यत्वं च भगवता स्वयं श्रीमुखेन गीतायामुद्गीतम् । यथा–

(७६) एते पूर्वोक्ताः मत्स्यादयः पुंसो गर्भोदशायिनो नारायणस्य । केचिदंशा लीलावताराः केचित्कलाश्च । तु शब्दो भिन्नक्रमे–कृष्णस्तु स्वयं भगवानिति । अवतारेषु परिगणितोऽपि तेभ्यो भिन्नः स्वयं भगवान् सः । अन्ये तु सर्वेऽवताराः । अयम्भावः यो महदादिभिर्लोकसिसृक्षया पौरुषं रूपं जगृहे स एव भगवान् श्रीकृष्ण इति । तस्माच्छ्रीकृष्णात् षड्विधा अवतारा भवन्ति । ते चैकात्मावतारपुरुषावतार गुणावतार लीलावतारावेशावतार प्रकाशावताराः षड्विधाः । तेषु तत्समानाकारशक्तिरेकात्मावतारः । स तु वासुदेवः । शक्त्यभेदभिन्नाकारः पुरुषावतारः । स च क्षीरगर्भकारणोदशायी विराड्रूपेण चैकात्मावतारः । क्रमात् सृष्टिस्थिति प्रलयकारि ब्रह्मविष्णु शिवरूपो गुणावतारः । शक्तिभेदभिन्नाकारो लीलावतारो मत्स्यादिः । ज्ञानशक्त्यादिकलावानाऽऽवेशावतारो नारदादि जीवगणः । प्रकाशावतारस्तु–अनेकत्रप्रकटतारूपस्यैकस्य ह्येकदा । सर्वदा तत्स्वरूपैव स प्रकाश इतीर्यते इति प्रकाश लक्षणलक्षितः । यथा रासक्रीड़ायां वत्सहरणे नारदमोहने बहुलाश्वश्रुतदेवयोर्निमन्त्रणे च । लीलावतारेष्वपि श्रीरामादयः पूर्णाः । तदुक्तं पाद्मे स्वयं भगवता श्रीकृष्णेन–

अन्तरङ्ग स्वरूपा मे मत्स्यकूर्मादयस्त्वमी ।
सर्वात्मनायमत्रापि श्रीमद्दशरथात्मज इति ।

अन्यत्र च—रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि ।
इति राम पदेनासौ परब्रह्माभिधीयत इति ।
मत्स्यादीनां पूर्णत्वे प्रमाणं वाराहेऽपि ।
सर्वे पूर्णाः शाश्वताश्च देहा स्तस्य परात्मनः ।
हेयो पादेयरहिता नैव प्रकृतिजाः क्वचित् ।
परमानन्द सन्दोहा ज्ञानमात्रांश्च सर्वतः ।
सर्वे सर्वगुणैः पूर्णाः सर्वदोष विवर्जिताः ।
परमावतारा अपि मत्स्यकूर्मवाराहनृसिंहवामनरामचन्द्रवतरा-
मादयो लीलावताराः ।
स्कान्दे नारदं प्रति नारायणवाक्यम्—
ब्रह्मेश शेषविघ्नेशाः कूर्मो धर्मोऽहमेव च ।
नरश्च कार्तिकेयश्च श्रीकृष्णांशा वयं स्मृताः ।
शूकरो वामनः कल्कि बौद्धः कपिलमीनकौ ।
एते चांशाः कलाश्चान्ये सन्त्येव कतिधा मुने ।
पूर्णो नृसिंहो रामश्च श्वेतद्वीपो विराड् विभुः ।
परिपूर्णतमः कृष्णो वैकुण्ठे गोकुले स्वयम् ।
वैकुण्ठे कमलाकान्तो रूपभेदश्चतुर्भुजैः ।
गोलोके गोकुले राधाकान्तोऽयं द्विभुजः स्मृत इति ।
इत्थं मुक्त्यर्थं श्रीकृष्णस्य सेव्यत्वे प्रमाणैर्ध्रुवी कृतेऽपि स्वस्व-
वासनानुसारेण यस्मिन् यस्मिन् यस्य यस्यानुरागस्तेन तेन स स
एव सेव्योऽवताराणामभेदबुद्धया । यथोक्तम्—
यस्मिन्यस्मिन् परा प्रीतिर्भगवद्विग्रहे तु वा ।
तेन तेनापि सेव्यः स सोऽपि तेषा मभेदत इति ।
त्यक्त्वा सङ्गं विदूराद्वै मत्स्यादेर्भेदवादिनाम् ।
सेव्यः स्व स्व प्रियः प्रेष्ठो दास भावेनसाधुभिरिति ।

स्व स्वप्रियं परमिति निश्चित्य सर्वावताराणां तद्रूपत्वमेव सभेदबुद्ध्या साधुभिर्दासभावेन स्वस्वप्रेष्ठः सेव्यः । किं कृत्वा मत्स्यादेर्भेदवादिनासंशकलादिविवरणेन न्यूनाधिक्ये विवदतां सङ्गं शाक्तादीनामिव दूरतस्त्यक्त्वा । तदुक्तम्—

नास्तिकानां च शाक्तानां तार्किकाणां तथैव च ।
प्रसङ्गो वर्जनीयो वै दाम्भिकानां मुमुक्षुभिरिति ।

दासभावेनेत्युपलक्षणम् । सख्यवात्सल्य शान्तादिनापि । न तु ब्रह्माहमस्मीत्यभेदभावनया मायावादिनाम् । तत्कुतः ।

यदेकः सेवकः सेव्य एक एवेति लक्षणम् ।
सुभक्तेर्मुनयः प्राहुर्भक्तिशास्त्र विदांवराः ।

यत एकः (भिन्न) एव सेवकः एक एव सेव्यो यत्तदेव सुभक्तेर्लक्षणं प्राहुः । शाक्तास्त्वत्र पञ्चमकारिणः कौला इति ।

मत्स्यादिषु च त्रयोऽधिकाः सर्वतः । नृसिंहो रामः श्रीकृष्णश्चेति । अत्र यद्यपि विश्वकारणत्वेन श्रीकृष्णस्य वर्णनेन श्रीरामादीनामपि श्लेषेण विश्वकारणत्ववर्णनं च जातप्रायम् तेषां कृष्णरूपत्वेन भेदाभावात् तथापि श्रीकृष्णस्तु साक्षादवतारीति तस्मादधिकः कोऽपि नास्ति । यथोक्तम्—सन्त्ववतारा बहवः पुष्कर नाभस्य सर्वतो भद्राः । कृष्णादन्यः को वा लतास्वपि प्रेमदो भवतीति । सर्वेऽवताराः सर्वशक्त्या अया अपि न सर्वशक्तिप्रकाशकाः । सर्वासां शक्तीनां प्रादुर्भावस्तु श्रीकृष्ण एव दृष्टो यथा मृद्भक्षणे यशोदया श्रीकृष्णविग्रहे—

गर्भादशायिनो रूपं दृष्टमुदर बन्धने । यथा पाद्मे—
य एव विग्रहो व्यापी परिच्छिन्नः स एव हि ।
एकस्यै वैकदा चास्यद्विरूपत्वं विराजते ।
न चान्त र्न बहि र्यस्य न पूर्वं नापि चापरम् ।

पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च यः ।
तं मत्वात्मजमव्यक्तं मर्त्यलिङ्गमधोक्षजम् ।
गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथेति ।

एतेन श्रीकृष्णविग्रहस्य परिच्छिन्नत्वोपाधिना व्यापकत्वव्याघातोत्थापनं पराहतम् । यत्किञ्चिद्युक्तिविरुद्धं तदीश्वरकृतमित्युक्ते राप्तवाक्यभूतवेदादिवाक्यस्य प्रमाणमूर्द्धन्यत्वाच्च । ब्रह्मणा वत्सहरणे । तावत् सर्वे वत्सपालाः पश्यतोजस्य तत्क्षणात् । व्यदृश्यन्त घनश्यामाः पीतकौशेयवासस इति श्रीमद्भागवतोक्तेः प्रतिजनमेकेन परमेष्ठिना, द्वाभ्यामश्विनीकुमाराभ्यां, त्रिभिर्गुणैश्चतुर्भिर्वेदैः, पञ्चभिस्तन्मात्राभिः, षड्भिर्ऋतुभिः, सप्तभिर्ऋषिभिरष्टभिः सिद्धिभिर्नवभिर्ग्रहैर्दशभिर्विश्वेदेवैरेकादशभी रुद्रैर्द्वादशभिरादित्यैस्त्रयोदशभिस्तत्तदिन्द्रियाधिष्ठातृदेवैश्चतुर्दशभिर्मनुभिः पञ्चदशभिस्तिथिभिः षोडशभिर्विकारैरुपास्यमाना ददृशिरे । एकएव श्रीकृष्णस्तत्तद्रूपेण ददृश इत्याशयः । यमुनाजले अक्रूरेण क्षीरोदशायिनो रूपं दृष्टम् । अर्जुनेन विराड्रूपम् दृष्टम् । यदुल्लेखो गीतायामेकादशाध्याये । आदित्येषु द्वादशसु युगपत् प्रणमत्सु युगपत्तं मूर्द्धसु हस्तार्पणप्रसादाय द्वादशभुजोऽभूच्छ्रीकृष्णः । यथोक्तं स्कान्दे—

यथा श्रीदाम्नि तार्क्ष्यत्वे प्राप्ते सोऽपि चतुर्भुजः ।
आदित्येष्वथ लब्धेषु बभौ द्वादशभिर्भुजैरिति ।

एकदैवसर्वरसानां प्रादुर्भावोऽपि कंससभायां श्रीकृष्णे एवाभूत् । यथा श्रीमद्भागवते—

मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ।

मृत्यु र्भोजपते र्विराडविदुषां तत्त्वं परं योगिनाम्
वृष्णीनां परदेवतेति विदितो रङ्गङ्गतः साग्रज इति ॥

एकोऽपि दशरसाश्रयः परमानन्दरसो व्यापकः श्रीकृष्णः स्त्रीणां सम्बन्धी मूर्तिमान् रसः शृङ्गाररसस्ताभिर्ज्ञातः । गोपानां श्रीदामादीनां स्वजनो मित्रोत्तमो मूर्तिमान् हास्यरसः । पित्रोर्वसुदेवनन्दयोः शिशुर्वात्सल्यात्मकः करुणरसः । असतां कृष्णविमुखानां राज्ञां शास्ता साक्षाद्वीररसः । मल्लानां चाणूरादीनामशनिर्वज्रो रौद्ररसः । नृणान् नरवरोऽयमप्यद्भुतात्मकोत्साहरूपवीररसः। भोजपतेः कंसस्य मृत्युर्भयानकरसो विदितः । अविदुषां मांसाशकानां बीभत्स रसः । योगिनां यतीनां परं तत्त्वं परब्रह्मारूपशान्तरसः । वृष्णीनामुद्धवादीनां दासानां परदेवता परमेश्वरो भक्तिरसः । एकस्मिन्नपि कृष्णे नानासत्त्वदर्शनादस्माभिः स एवाद्भुतरसो विदितः । रसोवैसः । रसं ह्येवायं लब्ध्वानन्दी भवतीति श्रुतेः ।

द्वारकालीलायां नारदेनापि श्रीकृष्णस्य सर्वदेशव्यापित्वं दृष्टम् । तदुक्त श्रीमद्भागवते—

तदेव सर्वगेहेषु सन्तमेकं ददर्शहेति ।

पूतनावध कालियनिर्यापणाऽग्निपान गोवर्धनधारणादीनि बहून्यद्भुतानि दृष्टानि बहुभिरिति ।

ननु नैवाभूत् कश्चित् कृष्णाख्य ऐतिहासिकः पुरुषः किन्तु स कविकल्पित एवेति चेन्न । तद्धैतद् घोर आङ्गिरसः कृष्णाय देवकी पुत्रायोक्त्वोवाच पिपास एव स बभूव। सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसंशितमसीति छान्दोग्ये देवकी पुत्रस्य कृष्णस्य नामाम्नानात् ।

ऋक्संहितायां राजगणनामसध्ये श्रीरामचन्द्रस्यापि ना-
मोपनाम्नानात् सोऽप्यैतिहासिक एवेति ज्ञेयम् ।

रामश्च बलवान् राजाभूदिति वाल्मीकीयाज्ज्ञायते एव ।
तत् प्रत्यनीकस्य दशास्यस्यापि नामवेदे दृश्यते । यथा अथर्व
संहितायाम्-

ब्राह्मणो जज्ञे प्रथमो दशशीर्षो दशास्यः । स सोमं प्रथमः
पपौ स चकाराऽरसं विषमिति ४,६,१ । अस्यार्थो यथा-दशमूर्द्ध
मुखः प्रथमः प्राचीनो ब्राह्मणो ब्राह्मणजातीयो जज्ञे जातो
यः स प्रथमो देवान्विजित्याग्रगः सन् सोमं सोमरसस्पपौ वि-
षन्नागैः सह युध्ये तेषां विषम् अरसन्निःसारं चकारेति ।
सायण इमं मन्त्रं तक्षकपरं व्याचख्यौ ।

मन्त्रार्थवादयोरन्यार्थत्वेनाप्रामाण्यचोदनं तु मीमांसकानां
शङ्कराचार्येण प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः कारणं नान्या-
र्थत्वमनन्यार्थत्वं वेति प्रत्याख्यातम् ।
शतायुः पुरुषः इति श्रुतिविरुद्ध तदधिकायुःख्यापकवचनस्थले,
ननु पुराणेषु शताधिकस्यायुषो दशरथादेः श्रुतत्वाच्छतवर्षान-
न्तरं कर्मसन्न्यासः स्यादित्याशंक्य शतायुः श्रुतिविरोधेन तस्या-
र्थवादत्वात्तथाङ्गीकारेऽपि जीवनकालस्य सर्वस्यापि कर्मणा
व्याप्तश्रुते, रित्यादिना यथा आनन्दगिरिणा वाक्यविरोधः स-
माहितस्तथैव तद्दर्शितदिशा रावणस्य विंशति भुजख्यापकवच-
नविरुद्धं ददर्श स कपिस्तस्य बाहूशयनसंस्थिताविल्यादि द्वि-
बाहुत्वख्यापकवचनमर्थवादादिना यथा कथंचित् समाधेयम् ।
न तत्र विशेष आग्रहः । रामाभिरामीये तु अत्र द्विभुजत्वकथ-
नाद्युद्धादिकाल एव विंशति भुजत्वं दशशीर्षत्वं चेति बोध्य मि-
ति समाहित मिति दिक् । अनयैव दिशा हनूमदादीनां वानर

त्वादेश्च वानरप्रायनरजातित्व स्वीकारे न कापिक्षतिरिति।
तथा च ऋक्संहितायाम्—

प्रतद्दुःशी मे पृथवाने वेने प्ररामे वोचमसुरे मघवत्सु।
ये युक्ताय पञ्चशतास्मयु पथा विश्राव्येषामिति १०।९३।१४ अत्र
सायण भाष्यम्—ये देवाः पञ्चशता शतानि रथान् युक्ताय अश्वै-
र्युक्त्वा अस्मयु अस्मत् कामाः सन्तः यथा यज्ञमार्गेणागच्छन्ति
तेषामेषां देवानां विश्रावि देवानां लोके वा विशेषेण श्रावकगुण-
युक्तं तत्स्तोत्रं दुःशीमे दुःशीमनाम्नि पृथवाने पृथवानः पृथ-
स्तस्मिन् वेने च असुरे बलवति रामे चैतेषु राजसु प्रवोचम्
प्रब्रवीमि प्रख्यापयामीत्यर्थः।

पृथिः पृथुर्नाम राजा। असुर इति पदस्य सायणेनैवात्र
बलवदित्यर्थ व्याख्यया राजनामसाहचर्याच्च रामो राजैवेति सि-
ध्यति। स च न जामदग्न्यो बलरामो वा। राजत्वाभावात्।
यद्यपि असुर शब्दः सुरविरोध्यर्थेऽपि प्रयुक्तो वेदेषु दृश्यते त-
थापि बलवदर्थेऽपि स पुरा प्रायुज्यतेति निर्विवादम्। असेरु-
रन्निति उणादिसूत्रेण असूधातोरुरन् प्रत्ययेऽसुर शब्दस्य व्यु-
त्पादनात्। न संस्कारमाद्रियेतार्थनित्यः परीक्षेतेति यास्कवच-
नादसवः प्राणाबलं विद्यन्ते यस्यासावित्यर्थ विवक्षायामसुशब्दा
न् मत्वर्थीय र प्रत्यय विधानाद्वा। निघण्टौमेघनामसुपठितस्या
सुरशब्दस्यपाक्षिकीयमपि त्र्यो वै गतश्रियः शुश्रुवान् ग्रामणी
व्युत्पत्तिर्दर्शितादेव राजयज्वना। निघण्टु भाष्ये। राजन्यस्ते-
षां महेन्द्रो देवता इति श्रुतेर्गतश्री शब्दो गता प्राप्ता श्रीयं स
गत श्रीरिति व्युत्पत्त्या वेदे शोभनार्थे प्रयुक्तोऽपि सम्प्रति लोके
गत श्रीर्गणकान् द्वेष्टीत्यादौ गता नष्टा श्रीर्यस्या सावित्यर्थेयथा
प्रयुज्यमानो दृश्यते तथा असुरशब्दोऽपि व्युत्पत्तिभेदात प्राक्

मां च यो ऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयायकल्पत इति७७

इत्थं सर्वसेव्यत्वेन यः प्रतिपादितः स एव श्रीकृष्णो जगत् कारणमिति नात्र संशयलेशः संभवतीति । येन शास्त्रेण श्रीकृष्णो विश्वकारणं निर्दिश्यते । तच्छास्त्रमपि तज्जन्यत्वात्तत्र सुष्ठु प्रमाणं भवति । भगवतः परमाप्तत्वात् ब्रह्मणः शास्त्रयोनित्वे प्रमाणं च श्रुतिर्भवति । यथा- अस्य महतो भूतस्य निःश्वसितमेतद् ऋग्वेदो यजुर्वेदः सामवेदो ह्यथर्वाङ्गिरस इतिहासः पुराणमिति । शास्त्रसमन्वयादपि ब्रह्मैव कारणम् । सर्ववेदा यत्पदमामनन्तीति श्रुतेः । अन्यत्र च यथोक्तम्-

---

बल वदर्थे प्रायुज्यत । इदानीन्तु सुरद्विडर्थ एवासुरशब्दःप्रचरद् रूपो वर्त्तते ।

(७७) इमावत्र संग्रहश्लोकौ भवतः । यदि मधुमथनत्त्वदङ्घ्रि सेवां हृदि विदधाति जहाति वा विवेकी । तदखिलमपि दुष्कृतं त्रिलोके कृतमकृतं न कृतं कृतं च सर्वमिति ।

शरीरं सुरूपं तथा वै कलत्रं गृहं चारुचित्रं धनं मेरुतुल्यम् ।
यशोदा किशोरे मनो वै न लग्नं ततः किं ततः किं ततः किं ततः किमिति ।

वेदवेदान्तयोर्नित्वात् सर्वशास्त्रसमन्वयात् ।
तमेव कारणं सत्यमानन्दं ब्राह्मणाविदुरिति ॥७८॥

वेदान्त सूत्रेऽपि शास्त्रयोनित्वादिति । सर्वेषां वेदानां शास्त्राणां तस्मिन् परमेश्वरे हि यतः समन्वयस्तात्पर्यार्त्थ पर्यवसानम्, तस्माद्ध यद्ब्रह्म वेदतात्पर्यपर्यवसितं तस्माच्छ्रीकृष्ण एवेति प्रतिपादितं प्राक् तत्सिद्धमिति । श्रीमद्भागवते च

वासुदेव परा वेदाः वासुदेवपरा मखाः ।
वासुदेवपरा योगा वासुदेवपराः क्रियाः ।
वासुदेवपरं ज्ञानं वासुदेवपरन्तपः ।
वासुदेव परो धर्मो वासुदेवपरागतिरिति ।

शक्त्या विना शक्तिमाऽशक्त एव शक्यसम्पादने, यतोऽतः श्रीकृष्णः स्वशक्त्या राधया स हैवोपास्यः । उक्तं ह्यादिपुराणे—

---

(७८) मन्दा वेदवेदान्तयोस्तात्पर्यमज्ञात्वा सगुण निर्गुणयोर्भेदं वदन्ति । इदं मायोपाधि सगुणं ब्रह्म इदं शुद्धं निर्गुणं ब्रह्मेति । वस्तु तस्तु ब्रह्म सदैव सगुणं ज्ञानानन्दादि गुणयुक्तं माया गुणातीतत्वान्निर्गुणं च । तस्य जगत्कारणत्वे हेतुद्वयमुपन्यस्यति । वेदवेदान्तयोनित्वादिति । सर्वशास्त्रसमन्वयादिति च । तस्माद्धे तु युग्माद् ब्राह्मणा ब्रह्मविदो जगत् कारणं भगवन्तं सत्यं ज्ञानमनन्तं ब्रह्म विदुस्तमेव भजन्ति चेति ।

त्वं मे प्राणाधिका राधे प्रेयसी प्रेयसां परा ।
यथाहं च तथात्वं च भेदो नास्त्यावयोर्ध्रुवम् ।
यथा दुग्धे हि धावल्यं यथाग्नौ चैव दाहिका ।
यथा पृथिव्यां गन्धश्च तथाहं त्वयि सन्ततम् ।
मृदा विना घटं कर्त्तुं विना स्वर्णं न कुण्डलम् ।
कुलालः स्वर्णकारश्च नहि शक्तः कदाचन ।
तथा त्वया विना सृष्टिमहं कर्त्तुन्न च क्षमः ।
सृष्टेराधारभूता त्वं बीजरूपो ह्यहं पुनः ।
यदा तेजः स्वरूपोऽहं तेजोरूपासि त्वं तदा ।
स शरीरो यदाहं च तदा त्वं च शरीरिणी ।
त्वं च शक्तिस्वरूपासि सर्वस्त्री रूपधारिणी ।
ममार्द्धांशस्वरूपात्वं मूलप्रकृतिरीश्वरी ।
आवयोर्भेदबुद्धिं च यः करोति नराधमः ।
तस्य वासः कालसूत्रे यावच्चन्द्रदिवाकरौ ।
अज्ञानादावयोर्न्निन्दां ये कुर्वन्ति नराधमाः ।
पच्यन्ते नरके घोरे यावद्वै ब्रह्मणःशतमिति(७९) ।

---

(७९) नारदपञ्चरात्रे–
कृष्णवामांशसंभूता बभूव सुन्दरी पुरा ।
यस्याश्चांशांशकलया बभूवुर्देवयोषितः ।
राशब्दोच्चारणाद्भक्तो भुक्तिं मुक्तिं च राति सः ।
धाशब्दोच्चारणे नैव धावत्येव हरेः पदम् ।

आविर्भावस्तिरोभावस्तस्याः कालेन नारद ।
न कृत्रिमा च सा नित्या सत्यरूपा यथा हरिः ।
देवी कृष्णमयी प्रोक्ता राधिका पर देवता ।
सर्वलक्ष्मी मयी सर्वकान्ति संमोहिनी परा ।
प्राणाधिष्ठात्री या देवी राधारूपा च सामुने ।
राधा वामांश संभूता महालक्ष्मीः प्रकीर्तिता ।
तदंशा सिन्धु कन्या च क्षीरोद मथनोद्भवा ।
नारायणि महामाये विष्णुमाये सनातनि ।
प्राणाधिदेवि कृष्णस्य मामुद्धर भवार्णवात ।
संसार सागरे घोरे भीतं मां शरणागतम् ।
प्रपन्नं पतितं मात मामुद्धर भवार्णवादिति ।

श्रीकृष्णः श्रीमुखेन राधां स्वप्राणाधिकामाह—यथा—

कोपं गोपनृपः करोतु नितरां निन्दन्तु सामाजिका-
जल्पन्तु प्रतिमन्दिरं परुषिता वृद्धा विरुद्धा चरम् ।
नासादत्तकरांगुलीयमधिकत्यानर्त्तनभ्रुश्रियो
धन्यं धन्यमुदीरयन्तु मम तु प्राणाधिका राधिकेत्यादि

पुराणे । ननु कोपं गोपनृपः करोत्वित्यादि वाक्यस्वरसेन प्रतीयते यद् राधा परकीया व्रजलीलायां श्रीकृष्णेन तस्या विवाहव्यवहाराश्रवणादिति चेत्सत्यम् । सा परकीया राधैवान्या । प्रेमराधा छायाराधा पराराधेति राधायाभेदत्रयात । प्रेमानन्दा प्रेमसिद्धा प्रेमराधा एता वीणावाद्ये इत्याथर्वणवेदोक्तेः । छाया नारायणगृहे इति नारायणवचनाचच । कोपं गोपनृप इत्यादि तु लोक दृष्ट्यानुवादमात्रम् । न तु तात्त्विकम् । यदंशांशा कमला शैल पुत्री तां राधिकां शक्तिधात्रीन्नाम इति राधोपनिषदुक्तेः ।

श्रीराधैव परा शक्ति र्नित्याऽऽनन्द विग्रहा ।

तस्य शक्तिश्चानेकधा ह्लादिनी सन्धिनी ज्ञानेच्छा क्रियाद्या बहुविधा, तत्र ह वै तासु ह्लादिनी गरीयसीति श्रुत्युक्ता ह्लादिनीयमन्तरङ्गभूता च राधैव । अस्या एव कायव्यूहरूपा गोप्यो महिष्यः श्रियश्चेति । एतामवज्ञाय कृष्णमाराधयितु मिच्छति स मूढतमः । स मूढतमश्चेति श्रुतेः । राधैव तु लक्ष्मी रुक्मिण्यादिरूपा स्वकीयैव । तस्याः स्वकीयात्वे प्रमाणं च ब्रह्मवाक्यम् । तथाहि ब्रह्मा बाल्यावस्थायां निर्जने वने राधाकृष्णयोर्विवाहं विधिपूर्वकं कृत्वा राधां प्रति, प्राह—भो देवि विवाह काले स्वच्छाया राधिका पितृगृहे त्वया स्थापनीया । तस्या नारायणेन गोपेन सह विवाहो भविष्यतीति । तत्प्रार्थनया तथैव च्छायां राधां कृत्वा अप्रकटलीलासुखेस्थिता । यथा । सीता छायाजानकीं कृत्वा स्वसुखेन पावके स्थिता । याच्छायाराधा स्वपत्यङ्ग सङ्गं हित्वा श्रीकृष्णपदाम्बुजं हृदि कृत्वा नित्यलीलासुखमवाप, सैव परकीयान्येति । वस्तु तस्तु श्रुत्यर्थविचारणे सापि स्वकीयैव । यतो वत्स वत्सपालहरणे तत्तद्गोपकुमाररूपेण श्रीकृष्णेन सह सर्वासां गोपकन्यानां विवाहश्रवणात् धर्म्यैर्विवाहैरूढा या सा पत्नी परिकीर्तितेति स्मृतौ स्वकीयात्वनिर्वचनाच्च । काश्च विष्णुपत्न्यो गोप्यो नामेति श्रुतेश्च । इदं सकलं जगन्नामरूपाभ्यां गोपायति रक्षतीति गोपी यद्वा परं पुमांसं परब्रह्मस्वरूपं गोपायति संवृणोतीति गोपी मायेति, गोपीपदनिरुक्तेश्च । गोप्यः कृष्णपत्न्यः स्वकीया एव द्रष्टव्याः । माया हि भगवतः स्वभूता सर्वत्र निगमागमेष्वाम्नातेति । अथ तत्र द्वैधमङ्गीकृत्याप्युच्यते यदि छाया राधा परकीयेति तर्हि नित्या परा तु स्वकीयैवेति । कृष्णजन्मखण्डे ब्रह्मवैवर्त्ते कृष्णेन तद्विवाहश्रव-

णात् । स एव गुप्तविवाहोऽनुवर्णितो वाक् कुशलतया शुकेन वेणुगीते । पूर्णाः पुलिन्द्य उरुगायपदाब्जरागश्रीकुङ्कुमेन दयितास्तनमण्डितेन तद्दर्शनस्मररुजस्तृणरूषितेन लिम्पन्त्य आननकुचेषु जहुस्तदाधि मिति ।

पूर्णाः पुलिन्द्य इति श्लोकस्यार्थो यथा—उरुगायपदाब्जरागश्रीकुङ्कुमेन पुलिन्द्यः शवराङ्गनाः पूर्णाः कृतार्थाः । कीदृशेन दयितास्तनमण्डितेन दयितायाः श्रीराधायाः स्तनमण्डितेन । पुनः कीदृशेन तृणरूषितेन । उरुगायस्य श्रीकृष्णस्य पदाब्जयो रागेण आरुण्येन श्रीःकान्तिर्यस्य तेन कुङ्कुमेन तृणेषु रूषितेन लग्नेन । कीदृश्यः पुलिन्द्यः । तद्दर्शनस्मररुजः । तथा भूतस्य कुङ्कुमस्य दर्शनेन यः स्मरः कामः स एव रुक् यासां ताः । तेन स्मरेण कृता रुक् तापो यासां ता इति वा । तदाधिं जहुस्त्यक्तवत्यः । किं कुर्वत्यः । तदेव कुंकुमं माननकुचेषु लिम्पन्त्यो लेपनं कुर्वत्यः । न चात्र तस्यदयिता रमेति वाच्यम् । गोप्यो ऽन्तरेण भुजयोरपि यत्स्पृहा श्रीरिति भगवत एव वचनात् । श्री भगवान् संकर्षणव्याजेन हि स्वं माहात्म्य मनुवर्णयति । गोप्यो मे भुजयोरन्तरेण वक्षःस्थलेन आलिङ्गनेन धन्याः । यद्यस्मिन्नालिङ्गने श्रीः स्पृहा स्पृहावत्यद्यापि यत् स्पृहयतीत्यर्थः केवलं तदभावे तीव्रं तपोऽपि चरति । कस्यानुभावोऽस्ति न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः । यद्वाञ्छया श्रीललना चरत्तपो विहाय कामान् सुचिरं धृतव्रतेति नागपत्न्युक्ते रिति अतो व्रजलीलायां न रमा कृष्णस्य दयिता किन्तु राधैवेति ।

वृन्दावनाधिपत्यं तु दत्तं तस्यैव प्रतुष्यता ।
कृष्णेनान्यत्र देवी तु राधा वृन्दावने वने इति पाद्मोक्तेः
वाराणस्यां विशालाक्षी विमला पुरुषोत्तमे ।

रुक्मिणी द्वारकायां तु राधा वृन्दावने वने।
वृन्दावने च या देवी परिपूर्णतमा सती।
रासमण्डलमध्ये च रासक्रीडां चकारसेत्याद्युक्तेश्च।

अत एव श्रीवल्लभाचार्यः साधु समवर्णयत्—

कृतार्थोऽहं कृतार्थोऽहं कृतार्थोऽहन्न संशयः।
प्रभु र्नन्दकुमारो मे स्वामिनी वृषभानुजा।
को वा ब्रह्मा महेशो वा महेन्द्रो वा परोऽपि वा।
प्रभु र्नन्दकुमारो मे स्वामिनी वृषभानुजा।
सर्वसाधनहीनस्य पराधीनस्य सर्वतः।
पापपीनस्य दीनस्य श्रीकृष्णः शरणं ममेति।

तस्मात्तस्य भगवतो राधैव दयिता। अतः श्रीराधया सहैव तस्य भजनं श्रेष्ठम्। यथोक्तं नारदपञ्चरात्रे—

राधया सहितं देवं यः पूजयति नित्यशः।
भवेद्भक्ति र्भगवति मुक्तिस्तस्य करे स्थिता।
देवी कृष्णमयी प्रोक्ता राधिका पर देवता।
स्वरूपाद् द्विभुजा चित्रवसनाभरणान्विता।
पुरुषः कृष्णसर्वात्मा सा शक्तिः सर्वदेवता।
वराभयकरस्था या सेविता दैवतैरपीति।

यस्मादेवं तस्माद्विद्वद्भिर्निःशेषाविद्यानिवृत्या श्रीकृष्णानुरागप्राप्तये अभेददृष्ट्या युगलरूपमेवोपास्यमिति सिद्धम्।

तथा वै रमया श्रीशो जानक्या रघुनन्दनः।
अन्ययान्योऽवतारो हि सेव्यस्तत्तदुपासकैरिति-

च न विस्मर्त्तव्यम्। अन्यया तत्तत् प्रियया सह सेव्यो न तु तया तया विरहित इति॥ शक्तिविरहितस्याशक्तस्य सेवनादऽसेवन मेवान्यथा वरमापद्येत॥ यतः।

नन्वेकस्यैव श्रीकृष्णस्य भजने किं हीयते, यतो राधया सह तस्य भजनं विधीयते इति आशङ्किते उत्तरम् ।

गौरतेजो विना यस्तु श्यामतेजः समर्चयेत् ।
ध्यायते वा जपेद्वापि स भवेत् पातकी शिवे ।
स ब्रह्महा सुरापी च स्वर्णस्तेयी च पञ्चमः ।
एतैर्दोषैर्विलिप्येत तेजो भेदात् महेश्वरीति

शिववाक्येन पातकी भवनादि हानि बोधात् ॥

तया सहार्चितः कृष्णः सेवितो मुक्तिदो भवेत् ।
इत्युक्तं मुनिभिस्तस्मादाराध्यो राधया सहेति(८०)
राधया सहितो देवो माधवेन च राधिका ।

अनयोर्भेदं पश्यति स संसृतेर्मुक्तो न भवतीति श्रुत्या अन्वयमुखेनापि राधा राधनं विधीयते ।

यः कृष्णः सैव राधा या राधा कृष्ण एव सः ।
अनयोरन्तरादर्शी संसारान्न विमुच्यत इति स्मृत्या च भेदनिन्दया अभेददर्शने विहिते पूजा क्रमजिज्ञासायां निरूप्यते—

(८०) तया श्रीराधया सहार्चितः कृष्णो मुक्तिदो भवेदित्युपलक्षणं भुक्तिमुक्तिदो भवेदिति तु तत्त्वं मुनिभिरुक्तं तस्मात स राधया सहैवाराध्य इत्यर्थः ।

आदौ राधां समुच्चार्य पश्चात् कृष्णं वदेद् बुधः
व्यतिक्रमे ब्रह्महत्यां लभते नात्र संशय इति ।
अत्र वदनं भजनमात्रोपलक्षणम् ।

ननु भेदाभावे एकभजनेऽन्यभजनमर्थापन्नमिति राधाकृष्णयोर्भेदाभावं ज्ञात्वैकस्या राधाया एकस्य श्रीकृष्णस्य वा भजने को दोषः । नोच्यते दोष इति । किं तर्हि । उभयभजने परमोगुणइति निन्दनं तु भेददर्शनपरम् ।

अथ प्रमेयस्य प्राप्त्युपायनिर्णयः ।

हं हो परां भक्तिं कुर्यादित्युक्तम् भवता, तत्कस्य हेतोः । न कुर्यान्निष्फलं कर्मेति । प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इत्याद्यभियुक्तोक्तेः । पृच्छ्यते मया ननूक्तं मुक्तिर्हेतुरिति । नेत्युच्यते । धर्मानुष्ठानादेव भुक्तिमुक्त्युभयलाभसिद्धेः । यतोऽभ्युदयानिःश्रेयससिद्धिः स धर्म इति कणादेन धर्मलक्षणोक्तेः । भारते च–

धर्म एष प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् ।
सैव नौः सागरस्येव वणिजः पारमिच्छतः ।
अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः ।
अप्रतिष्ठे तमस्येतद्जगन् मज्जेद ऽनिन्दिते ।

निर्वाणं नाधिगच्छेयु र्जीवेयुः पक्षिजीविकाम् ।
विघातेनैव युज्येयु र्न सुखं केचिदाप्नुयः ।
ऋषयश्चैव देवाश्च गन्धर्वा सुरराक्षसाः ।
ईश्वराः कस्य हेतो स्ते चरेयु र्धर्ममादृताः ।
व्यासो वशिष्ठो मैत्रेयो नारदो लोमशः शुकः ।
अन्ये च मुनयः सर्वे धर्मेणैव सुचेतसः ।
अतो नार्हसि कल्याणि धातारं धर्ममेव च ।
राज्ञि मूढेन मनसा क्षेप्तुं शङ्कितु मेव च ।
प्रायश्चितं न तस्यास्ति योधर्ममभिशङ्कते ।
यस्य नार्षं प्रमाणं स्याच्छिष्टाचारश्च भामिनि ।
नैव तस्य परो लोको नायमस्तीति निश्चयः ।
सर्व एवहि लोकोऽयं यदिस्याद्धर्म तत्परः ।
अतो निरन्तराः सर्वे भवेच्छून्यापि मेदिनीति ।

मनुश्चाप्याह—

श्रुति स्मृत्युदितं धर्म मनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं फलमिति ८१

---

(८१) विष्णु पुराणे—

शब्दे स्पर्शे च रूपे च रसे गन्धे च भारत ।
प्रभुत्वं लभते जन्तु धर्मस्यै तत्फलं विदुरिति ।
धर्माद्राज्यं धनं सौख्यमधर्माद् दुःख संभवः ।
तस्माद्धर्मं सुखार्थाय कुर्यात् पापं च वर्जयेत् ।

यद्वैरूप्यमनर्थता विकलता नीचे कुले जन्मता
दारिद्र्यं स्वजनाच्च यत् परिभवो मौर्ख्यं पर प्रेष्यता ।
तृष्णा लौल्यमनिर्वृतिः कुशयनं कुस्त्री कुभोज्यं रुजः
सर्वाः पापमहीरुहस्य महतो व्यक्तं फलं दृश्यते ।
व्याधिर्वित्तविनाशः प्रियविरहो दुर्भगत्वमुद्वेगः । सर्वत्राशाभङ्गः स्फुटम्भवत्यकृतपुण्यस्येति ।
भारते—अधर्मेणैधते तावत् ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलं च विनश्यतीति ।
मनुः—एकएव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ।
न सीदन् नपि धर्मेण मनोऽधर्मे निवेशयेत् ।
अधार्मिकाणां पापानां माशु पश्यन् विपर्ययमिति
सारसंग्रहे—धनानि भूमौ पशवश्च गोष्ठे भार्या गृहद्वारि जनाः श्मशाने । देहश्चितायां परलोकमार्गे धर्मानुगो गच्छति जीव एक इति ।
पुलाका इव धान्येषु पुत्तिका इव पक्षिषु ।
मशका इव कीटेषु येषां धर्मो न कारणम् ॥
देवता मुनयो नागा गन्धर्वा गुह्यकास्तथा ।
धार्मिकं पूजयन्तीह न धनाढयन्न कामुकम् ।
भारते—न जातु कामान्न भयान्न लोभाद् धर्मं त्यजेज्जीवितस्यापि हेतोः । धर्मो नित्यः सुखदुःखेत्वनित्ये जीवो नित्यो हेतुरस्यत्व नित्यः ।
नास्ति धर्मसमो बन्धु र्नास्ति धर्मसमः सुहृत् ।
नास्ति धर्मसमो लाभो नास्ति धर्मसमा गतिः ॥

धर्मश्च ऋणत्रयापाकरणलक्षणो मनुनाम्नातो यस्यानुष्ठानाज्जीवस्योद्‌ र्ध्वगतिरननुष्ठानादधः पातो भवति । तथा हि—

---

तस्माद्धर्मः सहायत्वे सेवितव्यः सदा नृभिरिति ।

यन्नागा मदगण्डभिन्नकरटा स्तिष्ठन्ति निद्रालसा
द्वारे हेमविभूषिताश्चतुरगा ह्रेषन्ति यद्दर्पिताः ।
वीणावेणुमृदङ्गशङ्खपटहैः सुप्तश्च यद् बोध्यते
तत्सर्वं सुरलोकराज्यसदृशं धर्मस्य विस्फूर्जितमिति ।
धर्माज्जन्म कुले शरीरपटुता सौभाग्य मायुर्धनं
धर्मेणैव भवन्ति निर्मलयशो विद्या महीसंपदः ।
आरण्येषु महाभयेषु सततं धर्मः परित्रायते
धर्मः सम्यगुपाश्रितो भवति हि स्वर्गापवर्ग प्रद इति

चोक्तमभियुक्तैः । व्यासश्च ।

ऊर्ध्वबाहु र्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थन्न सेव्यतइति ।

धर्मो विश्वस्य प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पंति, धर्मेण पाप मपनुदति धर्मे सर्वं प्रतिष्ठितम् । तस्माद्धर्मं परमं वदन्तीति, यथा संपुष्पितस्य वृक्षस्य दूराद्‌ गन्धो वाति एवं पुण्यस्य कर्मणो दूराद्गन्धो वातीत पापस्तम्बश्च । धर्मस्य पुरुषार्थत्वमेव चेतसि कृत्वा जैमिनिरप्याह अथातो धर्मजिज्ञासेति । यतो धर्मेण जन्मसाफल्यं ततो धर्मजिज्ञासा कर्तव्येत्यर्थः ॥ एवमादीनि बहूनि वचनजातानि धर्मस्य श्रेयस्करत्वे प्रमाणान्युपन्यसनीयानि अतः परं विरम्यते ।

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
अनपाकृत्य मोक्षं तु सेवमानः पतत्यध इति ।
गीतायां भगवांश्च धर्मानुष्ठानमनुशास्ति।यथा ।
यज्ञोदानं तपः कर्म न त्याज्यं कार्यमेव तत् इति
यज्ञो दानं तपश्चैव पावनानि मनीषिणा मितिच।
श्रुतिश्चापि तथैव। कुर्वन्नेवेह कर्माणि जिजी-
विषेच्छतꣳ समाः। इत्यादि वचनैर्यद्यपि कर्म-
णोऽवश्यकर्त्तव्यताप्रतीयते तथापि न सा कर्म-
मात्रस्य किन्तुफललिप्सारहितकृतस्यैव नित्यस्य
कर्मणोनाऽन्येषां कर्मणाम् तेषान्तु, कर्मणां परि-
णामित्वादाविरंच्यादमङ्गलम्। विपश्चिन्नश्वरं
पश्येदहृष्टमपिहृष्टवत्।हृष्टवदानुश्रविकःस ह्यऽ-
विशुद्धिक्षयातिशययुक्त इति सांख्यकारिकयाचता-
रतम्यविशिष्टानांतेषामीर्ष्यादिजनकत्वेनाऽनित्त्य
फलदत्वेन वन्धनकारणत्त्वेन च हेयत्वबोधनात्।
देवानिष्ट्वा मखै र्लब्ध्वा लोकान् पुण्यजितानथ।
विमानै र्विहरिष्यामो मोदमानाः सहामरैः।
इष्ट्वैव देवता यज्ञै र्गत्वा रंस्यामहे दिवि।
तस्यान्त इह भूयास्म महाशाला महाकुला-
इत्त्यादीच्छया क्रियमाणत्वात्। स्वर्गसाधनभू-

तयज्ञादिश्रेष्ठत्वप्रतिपादकानामपि निन्दा श्रवणाच्च। तथा हि। प्लवा ह्येते अदृढा यज्ञरूपाः। अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो ये वदन्ति मूढाः। जरामृत्युं ते पुनरेवाभियन्तीति च श्रुतिः क्षयिष्णत्वात् कर्म तत् फलं नाभिनन्दति (८२)।

अन्येच श्रुती यथा—अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः। जंघन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः। अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति वाला इति (८३)।

गीतायां भगवांश्च—

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः।

---

(८२) यतो यज्ञरूपा एते प्लवा अदृढाः प्लवाः। के येष्वष्टादशोक्तमवरं कर्म। षोड़श ऋत्विजो ब्राह्मणाः। यजमानो यजमानपत्नी चेत्यष्टादशाङ्गानि येषु ते यज्ञाः। तथापि मूढास्तानेव श्रेयो वदन्ति। तेपुनरेव जरामृत्युमभियन्तीति ॥

(८३) अविद्यायामन्तरे वर्त्तमाना अपि स्वयं धीराः पण्डितोऽहम् इति मन्यमानास्तेषां गुरवोऽपि तादृशा एव। एवमन्धेन नीयमाना यथान्धा जङ्घन्यमाना मूढाः परियन्ति संसारे भ्रमन्तीत्यर्थः ॥

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यं गतिं प्रति ।
भोगैश्वर्य प्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ।
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुनेति(८४)

प्ररोचनार्थकवचनैरुत्सुकतामात्रेण कर्मणि प्रवर्त्तमानानां जनानां कर्मयोगो न भक्तिदो न मुक्तिदः इति ।

---

(८४) शिलोञ्छवृत्तिर्मुद्गलः कुरुक्षेत्रे निवसन् पक्षेण व्रीहिद्रोणमुपार्जयत् । सपुत्रदारः पक्षान्ते स हुत्वातिथिशेषभुक् । तच्छ्रुत्वा दुर्वासाः षड्वारं भुक्तवान् । शेषेण स्वाङ्गान्यालिप्ययथौ । अन्ते देवदूता स्वर्गाद्विमानं मुद्गलं नेतुम् आनिन्युः । तान् मुद्गल उवाच । स्वर्गे के गुणादोषाश्च कथ्यन्तामिति दूता ऊचुः ।

यत्र व्रजन्ति धर्मिष्ठाः खला भूतद्रुहाः शठाः ।
मानिनः कामिनो लुब्धा एभि हीना व्रजन्ति यद् ।
(यां देवधानीम्)
न रोगो न जरा मृत्युर्न शोको न हिंसा तपौ ।
न क्षुत्पिपासा न ग्लानि र्विद्यते तस्य कर्हिचित् ।
न चात्र क्रियते भूयः सोऽत्र दोषो महान् स्मृतः ।
असंतोषश्च भवति दृष्ट्वा दीप्तां परश्रियम् ।
अतः सहसा पतनमिति । मुद्गल एवं श्रुत्वा नाहं स्वर्गं गमिष्यामीत्युक्त्वा ध्यानयोग परः सन् वैकुण्ठं जगामेति पौराणिकी कथा चात्रानुसन्धीयते इति ॥

किन्त्वाऽऽशामोदकमात्रमिति गीतावाक्याशयः।
तदुक्तम्।
धर्मः संपद्यते षड्भि रधर्म स्तद्विपर्ययः।
तस्मान्नृणां क्रियायोगाः सर्वे संसृतिहेतवइति(८५)।
फलाऽलिप्सया सम्पाद्यमानानां नित्यानां चित्त-शोधकानां भजनादीनान्तु ऋणत्रयापाकरणक-र्मापेक्षयाप्यवश्य करणीयत्वम्। तथाचोक्तम्।

देवर्षिभूतात्मनृणां पितॄणां न किङ्करो नायमृ-णी च राजन्। सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कृत्यमिति॥

श्रीमद्भागवते भगवद्भक्तस्यानृणत्वेघण्टाघोषात्।
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयादिति।
भगवदुक्तेश्च। यत्तूक्तं धर्मो भुक्तिमुक्तिहेतुःधर्मा-दर्थश्च कामश्चेत्यादि। तन्न। प्रति समाधीयते यथा—वस्तुतो न धर्मो भुक्त्याद्यर्थहेतुः श्रीमद्भा-गवते तन्निराकरणात्—तथाहि।

---

(८५) देशकालद्रव्यकारकमन्त्रकर्मभिः षड्भिः शुद्धैर्धर्मः संपद्यते। एषां यो विपर्ययः शुद्ध्यभावः स एवाधर्मः। साभि-लाषाः क्रियायोगाः सर्वे संसृति प्रदा एव शेषं सुगमम्॥

धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ।
कामस्य नेन्द्रियप्रीति र्लाभो जीवेत यावता ।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिरिति
तथा हि (८६) ।

धर्मो हि द्विविधः । परश्चापरश्चेति । तत्र व-
र्णाश्रमधर्मोऽपरः । परस्तु स एव, यतो भक्तिर-
धोक्षजे । यथाह श्रीमद्भागवतम्—
स वै पुंसां परोधर्मो यतो भक्तिरधोक्षजे ।

---

(८६) अपवर्गमभिव्याप्य वर्त्तत इत्यापवर्ग्यः । तस्य मोक्ष पर्यन्तस्य धर्मस्य अर्थाय फलत्वाय अर्थो भोगसाधनं धनं न कल्पते योग्यो न भवति। किन्तु तस्य फलं भक्तिरेव। सवै पुंसां परोधर्मो यतोभक्तिरधोक्षज इति वचनात् । धर्माव्यभिचारिणः अर्थस्य तु कामः सुखविलासः नफलम् । फलत्वेन मुनिभिर्न स्वीकृतम् कामस्येन्द्रियप्रीतिर्न लाभः किन्तु यावता जीवेत यावता कामेन जीवेत देहनिर्वाहो भवति तावानेव हि कामस्य लाभः । अयं भावः । क्षुधानिवृत्तिस्तु सामान्येनाऽप्यन्नेन भवति । दिव्यान्नेनापि भवति । तथा शीतादिनिवृत्तिः सामान्यवस्त्रेणापि दिव्याम्बरेणापि । एवं ज्ञात्वा धर्मैकान्तस्य द्रव्यस्य दिव्याम्बराद्यर्थे विषयसेवनार्थे व्ययो न कार्यः ! तस्य तु धर्मे व्ययो युक्त इति । जीवस्य जीवनस्य तत्त्वजिज्ञासैवार्थो न तु कर्मभिरिह योऽर्थः प्रसिद्ध स इति ॥

अहैतुक्यप्रतिहता ययात्मा संप्रसीदतीति (८७)।
अपरो धर्म आगन्तुकः परस्तु स्वाभाविक इति।
वर्णाश्रमधर्म आगन्तुकोऽधिकारान्तरे जन्मान्तरे
च हेयत्वात् यथा, गृहस्थै ब्रह्मचारिणां धर्मो हेयः।
गृहिणो वानप्रस्थैस्तद्धर्मो यतिभिः। तेषां धर्मः
परमहंसै र्हेयोऽत एवागन्तु कोऽनित्यत्वात्। अ-
परो धर्मोऽपि यद्यपि संसार सुखप्रदः स्वर्गप्रदश्चा-
भिमतोऽतो न निष्फलस्तथापि सोऽपि भक्त्या
यथा सुलभो न तथान्यान्यधर्मवितानैः। यथोक्तम्।
कृष्णभक्तः सकामोऽपि वरोऽन्यसेवकात् खलु।
निष्कामादपि तत्कामो यतो मोक्षाय कल्पत इति
श्रीमद्भागवते च-

यन्न सांख्येन योगेन दानव्रततपोऽध्वरैः।
व्याख्यास्वाध्याय संन्यासैः प्राप्नुयाद्यत्नवानपि।
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा।
स्वर्गापवर्गं मद्धाम कथं चिद्यदि वाञ्छतीति(८८)

---

(८७) वर्णाश्रमधर्मापेक्षया परो धर्मस्तु स एव; यतो ध-
र्मात् श्रीकृष्णे भक्तिर्भवति। कीदृशी। हेतुशून्या निष्कामा
स्वतन्त्रा। पुनर्विघ्नैरताड़िता। विघ्नास्तु सुखदुःखादयः। य-
यात्मा संप्रसीदति परमानन्दलाभादिति॥

(८८) भक्तियोगं यत्नवानपि जीवः सांख्यादिभिर्न

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषम्परमितिच(८९)।
अतोऽकामैः सकामैर्वा स सेव्यः स्त्रीनरादिभिः ।
एको यत्सोऽपि सर्वेषां भुक्तिमुक्तिप्रदःस्मृतइति९०

---

प्राप्नुयात् । सांख्येन तु प्रकृतिपुरुषविवेकः साध्यो न तु भक्तियोग इत्यर्थः । योगे नाष्टाङ्गेन चित्तवृत्तिनिरोधः । संन्यासेन सत्यलोकः स्वरूपज्ञानं वा । दानादिभिः स्वर्गः सुखं वा । न भक्तियोग इत्यर्थः । अन्यत्स्पष्टम् ॥

(८९) ब्रह्मनारद संवादे च—

अश्वमेध सहस्राणां सहस्रं यः [करोति वै]।
न तत्फलमवाप्नोति मद्भक्तैर्यदवाप्यत इति ।

बृहन्नारदीये—

यथा समस्तलोकानां जीवनं सलिलं स्मृतम् ।
तथा समस्तसिद्धीनां जीवनं भक्तिरिष्यत इति ।

भारते मोक्षधर्मे च—

या च साधनसंपत्तिः पुरुषार्थ चतुष्टये ।
तया विना तदाप्नोति नरो नारायणाश्रय इति ।

श्रीमद्भागवते—

स विधास्यति ते कामान् हरिर्दीनानुकम्पनः ।
अमोघा भगवद्भक्तिर्नेतरेति मतिर्ममेति ॥

(९०) अन्यैरपि सकामैरकामैश्च स्त्रीनरादिभिः स एव सेव्यः । यद्यतः स एकोऽपि सर्वेषां भुक्तिमुक्तिप्रदः स्मृतः । अत्रयेति शेषेणार्थः पूरणीय इति ॥

च। ननु अस्तु भक्त्यैव भुक्तिमुक्ती स्याताम्। न क्षतिः। भक्तेरुत्पत्त्यर्थन्तु वर्णाश्रमधर्मकर्मावश्य मनुष्ठेयम्। यतः तत्र ज्ञापकं प्रमाणं शास्त्रम्। उत्पादकं तु अनुष्ठानमेवेति। चेन्न। यतोभक्तेरनुत्पाद्यत्वान्न तत्र कृत्यपेक्षा। तथा च शांण्डिल सूत्रम्—नक्रिया कृत्यनपेक्षणाज्ज्ञानवदिति(९१)।

भक्तियोगस्तु भगवताप्यदेयो भवति, तस्याः स्वतन्त्रत्व (भगवदभिन्नत्व) भङ्गापत्तेः। स्वतन्त्रभगवत्प्रादुर्भाववद्भक्तेरपि स्वातन्त्र्येणैव प्रादुर्भावो ननुकर्मादिभिरितिभावः। तदुक्तन्नारदेन युधिष्ठिरम्प्रति—

---

(९१) भक्तिः क्रियात्मिका साधनसाध्या न भवति। कुतः कृत्यनपेक्षणात् प्रयत्ना नपेक्षमुत्पद्यमानत्वाद्भक्तिः स्वतन्त्रा। ज्ञानवत्। ज्ञान शब्देनात्रपरमात्मैव सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुते रुच्यते। यथा भगवान् स्वतन्त्रो न साधनसाध्यश्चिद्रूपः स्वेच्छया प्रादुर्भावात् स्तम्भान्नृसिंहरूपेणैव तथा तद्रूपा भक्तिरपि। सच्चिदानन्दैकरसो भक्तियोगइति श्रुतेः। यथोक्तम्—

ज्ञानतः सुलभामुक्ति र्भुक्तिर्यज्ञादि कर्मतः।
सेयं साधनसाहस्रैर्हरिभक्तिः सुदुर्लभेति॥

भक्ते रुदासीनानां यज्ञादिभिर्भुक्तिः। यद्वा ज्ञानवदित्यत्र भक्त्यङ्गात्मकं ज्ञानं विवक्षितम्। तदपि प्रयत्ना न पेक्षम्। न हि क्रियात्मकम्॥

राजन् पतिर्गुरुरलं भवतां यदूनां
दैवं प्रियः कुलपतिः क्व च किङ्करो वः ।
अस्त्वेवमङ्ग भगवान् भजतां मुकुन्दो
मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगमिति९२

ननु भक्तेः सर्वथा असाध्यत्वे अलं तत्साधनचर्चया ।

दानव्रततपोहोमजपस्वाध्याय संयमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णेभक्तिर्हि साध्यतइति
व्रतोपवासनियमै र्जन्मकोट्याप्यनुष्ठितैः ।
यज्ञैश्च विविधैः सम्यग् भक्ति र्भवति राघव-
इत्यगस्त्यसंहितादि प्रामाणिकवचनव्याकोपश्च स्यात् । दानादिभिः कृष्णार्पितैरितिशेषः । उच्यते, अत्र साधनत्वोत्पादनम् । अपि तु तस्याः प्रादुर्भावानुकूलत्वापादनमिति । तच्च भक्तियोगेनैव भवेत् नान्यथा । यथाह भगवानुद्धवाय-

---

(९२) हे राजन् परीक्षित् भगवान् भजतां पुंसां मुकुन्दत्वात् मुक्तिं ददाति मुक्तिन्ददातीति मुकुन्द इति तदन्वर्थनामत्वात् । भक्तियोगं कदाचिदपि न ददाति । भक्तेस्स्ववशकारित्वात् स्वतन्त्रत्वाच्च । कथंभूतो भगवान् पाण्डवानां भवतां यदूनां यादवानां गुरुर्हितोपदेष्टा । यतो दैवं कुलपूज्यो देवः । पुनः पतिः कुलपालकः । यतः प्रियः । न केवलमेतादृश एव किन्तु क्वचित वो युष्माकं किङ्करो दासोऽपीति ॥

भक्ति योगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ।
पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ।
श्रद्धामृतकथायां मे शश्वन् मदनु कीर्तनम् ॥
परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम ।
आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् ।
मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः ॥
मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ।
समर्पणं च मनसः सर्वकामविवर्जनम् ।
मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च ।
इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः ।
मज्जन्मकर्मकथनं मम पर्वानुमोदनम् ।
गीतताण्डववादित्र गोष्ठीभिर्मद्गृहोत्सवम् ।
यात्राबलि विधानं च सर्ववार्षिकपर्वसु ।
वैदिकी तान्त्रिकी दीक्षा मदीयव्रत धारणम् ।
एवं धर्मैं र्मनुष्याणामुद्धवात्मनिवेदिनाम् ।
मयि संजायते भक्तिः कोऽन्योर्थोऽस्यावशिष्यतइति

अत्र कारणं प्रादुर्भावानुकूलत्वापादकं ज्ञेयन्न तु जनकम् । संजायते प्रादुर्भवतीत्यर्थः । दानव्रतेत्यादि वाक्यस्य च इष्टमित्यादि वाक्यैक्याद्भक्तियोगात्मकदानादिकमेव भक्तिप्रादुर्भावानुकूलं मन्तव्यम् । उक्तं च प्रियादासेन ।

प्राकट्यं हृदये तस्यास्तदङ्गै रुत्तमै र्भवेत् ॥
कीर्त्तनार्चनदास्यैश्च न तु साधनकोटिभिरिति ।

चकारः समुच्चयेऽर्थे श्रवणादिभिर्नवाङ्गैरित्यर्थः।

तत्कामेनापि जीवेन नवधा भक्तिरुत्तमा ।
कर्तव्या श्रीहरावेव कायेन मनसा गिरेति च९३।

भक्तियोगानात्मकैर्दानादिभिस्तु नैवभक्ति-
प्रादुर्भावः । यथोक्तम् ।

---

( ९३ ) तत्कामेन पूर्वोक्तभक्तिकामेन जीवेन हरावेव उत्तमा नवधा भक्तिः कर्त्तव्या । कायेन श्रवणार्चनवन्दनदास्यसख्यरूपा पञ्चप्रकाराभक्तिः कर्त्तव्या । गिरा कीर्त्तनार्पणरूपा द्विधा । मनसा स्मरणसेवनात्मसमर्पणरूपा इति त्रिधा । एवन्नवप्रकारा उत्तमा भक्तिः कर्त्तव्या । उत्तमेत्युक्तेरन्यान्यभजनाद्यात्मिका नोत्तमा ज्ञेया । एवकारान्नान्यस्मिन्देवे । यद्वा भक्तिर्द्विविधा । बिहिता अविहिता चेति तत्र विहिता श्रवणकीर्त्तनादिरूपा त्रिधा । कर्ममिश्रा कर्मज्ञानमिश्रा ज्ञानमात्रमिश्रा चेति । तत्र कर्ममिश्रा त्रिधा । सात्विकी राजसी तामसी चेति तत्र सात्त्विक्यपि त्रेधा । पापनाशार्था भगवत्प्रीत्यर्था विधिसाध्या-चेति । एवं राजस्यपि त्रेधा । विषयभोगार्था यशोऽर्था ऐश्वर्यार्था चेति । तामस्यपि त्रेधा । हिंसार्था दम्भाभिसंहिता मात्सर्यमूलाचेति । राजसतामसभक्तेस्तु योग्यतयार्चनभक्तावेव निवेशो बोध्यः । एवं कर्मज्ञानमिश्रापि त्रेधा । उत्तमा मध्यमा प्राकृता चेति । तथा व्यवहारश्च तासु सत्त्वतारतम्यादिति ॥

पूजया हसते भक्तिर्जपात् त्रस्यति सुस्फुटम् ।
समाधियोगाच्च बहिः साभक्तिः केनलभ्यतइति

अनेनैव न्यायेन चाग्रे ज्ञानादि साधनसाध्यत्वं भक्तेः प्रत्याख्येयम् । भक्तेर्नवाङ्गानि यथा श्रीमद्भागवते-

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियते भगवत्यद्धा तन्मध्येऽधीतमुत्तममिति ॥

ननु भक्त्या कर्मभिश्च भुक्तिमुक्ती साक्षात्परम्परया वा उभे सिध्यत इत्यविवादम् । तत्रकर्मभिर्भक्तेर्विरोधोऽविरोधो वोपरुध्यते भवता । तदुच्यताम् । यदि विरोधस्तर्हि इष्टं दत्तमित्यादि वचनमूलकदानव्रतेत्यादि पूर्वोक्तवाक्यव्याकोपोदुर्निवारः । विरोधे विकल्पइति न्यायेन विकल्प एव वा शास्त्रार्थः स्यात् । स तु न सात्वतसंमतः ।

त्यक्त्वा स्वधर्मञ्चरणाम्बुजं हरे-
भजन्न पक्वोऽथ पतेत् ततो यदि ।
यत्र क्व वाभद्रमभूदमुष्य किं
कोवार्थ आप्तोऽभजतां स्वधर्मत इति ।

श्रीमद्भागवतोक्तेः (९४)। अविरोधे तु समुच्चय इत्यापततिं अन्यथा, अहरहः सन्ध्या मुपासीत। अथातः पञ्चयज्ञानित्युपक्रम्य तानेतान् यज्ञानहरहः कुर्वीत। ब्राह्मणेन निष्कारणः षडङ्गोवेदोऽध्येयो ज्ञेयश्च। ब्राह्मणो न सुरां पिवेत्। न कलञ्जम् भक्षयेत्। ऋतौ भार्या मुपेयादित्यादि शास्त्राणामनुशासनं व्यर्थमेव स्यात्। अत्रोच्यते

---

(९४) स्यादेतत। जातेप्रेमलक्षणाभक्तियोगे कर्मयोगज्ञानबिरागादींस्त्यक्त्वा जनः कृष्णं भजेत। कर्मत्यागेनापि भक्ति परिपाकाद्यदि कृतार्थो भवेत्तदा तु न काचिच्चिन्ता; परन्तु यदि तत्परिपाकं विनैव म्रियेत तदा तु नित्यनैमित्तिक कर्मत्यागप्रत्यवाय दोषान्महानर्थो घटेतेति चेदत्रोच्यते—स्ववर्णाश्रमाचाररूपं धर्मं त्यक्त्वा हरेश्चरणाम्बुजं भजन् पूरुषोऽपक्वो भजनपरिपाकं विना परभक्तिलाभं विनेति यावत। ततो भजनाद्यदि वा नीचयोन्यादौ पतेत् तत्रापि नीचयोनावपि अमुष्यभक्तिरसिकस्य किमभद्रमकल्याणमभूत्। माभूदेवेत्यर्थः। शवरी गजेन्द्रादीनामिवेति भावः। भगवत्पदाम्बुजमभजतां कोवार्थ आप्तो न कोऽपीत्यर्थः। अतो भजनापक्वस्यापि भगवद्भक्तस्य न क्षतिलेशोऽपि। यतः कर्मत्याग एव भक्तानां धर्म इति। यथोक्तं श्रीविल्वमङ्गलार्येण—सन्ध्यावन्दनभद्रमस्तु भवते भोः स्नानतुभ्यन्नमो भो देवाः पितरश्च तर्पणविधौ नाहं क्षमः क्षम्यताम् यत्रक्कापि निषद्य यादवकुलोत्तंसस्य कंसद्विषः स्मारं स्मारमघं हरामि तदलं मन्ये किमन्येन म इति।

रागप्राप्तानां तु परिसंख्यैव । न नियोगो न वा नियम इति । यथा श्रीमद्भागवते-

लोके व्यवायामिषमद्यसेवा
नित्यास्य जन्तो र्नहि तत्र चोदनेति ।

मनुरप्याह-

न मांस भक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्ति रेषा भूतानां निवृत्तिस्तु महाफला इति ।

तत्र शिष्यप्रवर्त्तनं च श्रीमद्भागवते निन्दित-न्नारदेन । यथा-

जुगुप्सितं धर्मकृतेऽनुशासतः
स्वभावरक्तस्य महान् व्यतिक्रम इति ।

शेषौ नियोगनियमौ विधीतयो र्विषये भक्ति सम्बन्धे विवक्षितु मुच्यते-

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथा श्रवणादौ वा श्रद्धा यावन्न जायत(९५)।

---

(९५) अनेन श्लोकेन कर्मानुष्ठानावधिमाह भगवान् । यावता कालेन न निर्विद्येत देहादौ वशीकाराख्यं वैराग्यन्न प्राप्नुयात्तावत्कर्माणि नित्यनैमित्तिककाम्यप्रायश्चित्ताख्यानि कुर्वीत । सन्ध्योपासनादि नित्यकर्म जन्ममरणचन्द्रसूर्यपर्वादिषु यत्तनैमित्तिकम् । दर्शपूर्णमासचातुर्मास्यादिकं काम्यम् । प्रायश्चित्तं कर्मच्छिद्र निवर्त्तकम् ।

प्रायः पापं विजानीयाच्चित्तं तस्य विशोधकम् ।

प्रायश्चित्तं तु तत्प्रोक्तं कर्म कर्मविदांवरैरित्युक्तेः ।

तानि कर्माणीत्यर्थः । मत्कथा श्रवणादाइत्यादिपदेन श्रवण-कीर्तनादिनवाङ्गं गृह्यते । तत्र यावच्छ्रद्धा न जायते श्रवणादि-भिर्मे परमं श्रेयो भविष्यतीति निश्चयात्मको विश्वासो याव-न्न जायते तावत्तान्यपि कर्माणि कुर्वीत । श्रद्धायामुत्पन्नायां तु स्ववर्णाश्रमकर्मत्याग एव मद्भक्तस्य धर्मस्तस्य तत्र कर्मादाव-ऽनधिकारात् ।

तत्र वर्णास्तु—मुखबाहूरुपादेभ्यः पुरुषस्याश्रमः सह । च-त्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथगिति श्रीमद्भागवते उक्ताः ब्राह्मणक्षत्रियविट् शूद्राश्चत्वारो वर्णाः । ब्रह्मणो मुखबाहूरु-पादेभ्यो जाता इत्यर्थः । ब्रह्मणाधर्मसंरक्षणार्थं साश्रमाश्च चत्वारोऽभिनिर्दिष्टाः । तत्र गुरुकुलवासमेव प्रथममाश्रममुदा-हरन्ति; यत्र शौचसंस्कारनियमव्रतविनियतात्मा उभे सन्ध्ये भास्कराग्नि दैवतान्युपस्थाय विहायतन्द्रालस्ये गुरोरभिवादन वेदाभ्यासवेदश्रवणपवित्रीकृतान्तरात्मा त्रिकालस्नानब्रह्मचर्या-ग्निपरिचरणगुरुशुश्रूषा नित्यभिक्षाभैक्षादि सर्वनिवेदितान्तरा-त्मा गुरुवचननिर्देशानुष्ठानाप्रतिकूलो गुरुप्रसादलब्धस्वाध्याय-तत्परः स्यात् ।

गुरुं यस्तु समाराध्य द्विजो वदमवाप्नुयात् ।

तस्य स्वर्गफलावाप्तिः सिध्यते चास्य मानसी ।

गार्हस्थ्यं खलुद्वितीयमाश्रममामनन्ति । धर्मार्थकामावाप्तिर्ह्यत्र त्रिवर्गसाधनमपेक्ष्य अगर्हितेन कर्मणाधनान्यर्जयित्वा स्वाध्या-योपलब्धप्रकर्षेणहव्यकव्यनियमाभ्यासदैवतोपलब्धप्रसादेन वा धनेन गृहस्थो गार्हस्थ्यं वर्त्तयेत । तद्धि सर्वाश्रमाणां मूलमुदा-हरन्ति । गुरुकुलनिवासिनः परिव्राजका ये चान्ये संकल्पितव्र-

तनियमधर्मानुष्ठायिनस्तेषामप्येतस्मादेव भिक्षाबलिसंविभागाः प्रवर्तन्ते। ये खलु एते साधवः साधुपथ्यौदनाः स्वाध्यायप्रसङ्गिनस्तीर्थाभिगमनदेशदर्शनार्थम्पृथिवीं पर्यटन्ति। तेषां प्रत्युत्थानाभिगमनाभिवादनानसूयवाक् प्रदानशक्त्यासनसुखशयनाभ्यवहारसत् क्रियाश्चेति।

अतिथिर्यस्य भग्नाशो गृहात्प्रति निवर्त्तते।
स दत्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति॥

अत्र यज्ञक्रियाभिर्देवाः प्रीयन्ते। निवापेन पितरो विद्याभ्यासश्रवणधारणेन ऋषयः। अपत्योत्पादनेन प्रजापतिरिति।

वात्सल्यात सर्वभूतेभ्यो वाच्याः श्रोत्रसुखागिरः।
परितापोपघातश्च पारुष्यं चात्रगर्हितम्।
अवज्ञानमहङ्कारो दम्भश्चैव विगर्हितः।
अहिंसा सत्यमक्रोधः सर्वाश्रमगतं तपः।

अपिचात्रमाल्याभरणवस्त्राभ्यङ्गनित्योपभोगनृत्यगीतवादित्रश्रुतिसुखनयनाभिरामदर्शनानां प्राप्तिर्भक्ष्यभोज्यलेह्यपेयचोष्याणामभ्यवहार्याणां विविधानामुपभोगः स्वदारसंतोषः कामसुखावाप्तिरिति। त्रिवर्गगुणनिर्वृत्तिर्यस्य नित्यं गृहाश्रमोक्तसुखान्यनुभूयेह शिष्टानां गतिमाप्नुयात्।

उञ्छवृत्तिर्गृहस्थोयः स्वधर्माचरणे रतः।
त्यक्तकामसुखारम्भः स्वर्गस्तस्य न दुर्लभः।

वानप्रस्था ऋषिधर्ममनुसरन्तः पुण्यानि तीर्थानि नदी प्रस्रवणानि सुविविक्तेष्वरण्येषु मृगमहिषवराहशार्दूलबनगजाकीर्णेषु तपस्यन्तोऽनुसंचरन्ति। त्यक्तग्राम्यवस्त्राभ्यवहारोपभोगावन्यौषधिफलमूलपर्णपरिमित विचित्रनियताहाराः स्थानासनिनोभूमिपाषाणसिकताशर्करावालुकाभस्मशायिनः काशकुशचर्मवल्कलसंवृताङ्गाः केशश्मश्रुनखलोमधारिणो नियतकालोपस्पर्शिन आ-

इति वचनाद् भक्तियोगलाभादूर्ध्वमेव (प्रागेव) कर्माद्रियते नार्वाक्। यथोक्तं नारद सूत्रे-भवतु निश्चयदार्ढ्यादूर्ध्वं (९६) शास्त्ररक्षणमिति।

तच्च धर्मानुष्ठानमापाततो भक्तियोगानात्मकम-पि मूलतस्तु भजनमेव भवति। भगवदाज्ञापालन

---

स्कन्दित कालबलिहोमानुष्ठायिनः समित्कुशकुसुमोपहार संमार्जनलब्धविश्रामाः शीतोष्णवर्षपवनविष्टम्भविभिन्नसर्वत्वचो विविधनियमोपभोगचर्यानुष्ठानविहितपरिशुष्कमांसशोणितत्व गस्थिभूताधृतिपराः सत्त्वयोगाच्छरीराण्युद्वहन्ते; यस्त्वेतां नियतं चर्यामृषिविहितां चरेत्। स दहेदग्निवद्दोषाञ्जयेल्लोकांश्च दुर्जयान्। परिव्राजकानां पुनराचारः। विमुच्याग्निधनकलत्रपरिबर्हणमात्मनः स्नेहपाशानवधूय परिव्रजन्ति समलोष्टाश्मकाञ्चनास्त्रिवर्गेष्वसक्तबुद्धयो ऽरिमित्रोदासीनानान्तुल्यदर्शनाः स्थावरजरायुजाण्डजस्वेदजोद्भिज्जानां भूतानां वाङ्मनःकर्मभिरनभिद्रोहिणोऽनिकेताः पर्वतपुलिनवृक्षमूलदेवता यतनान्यनुचरन्तो वासार्थमुपेयुर्नगरं वा। नगरे पञ्चरात्रिका ग्रामे चैकरात्रिका। प्रविश्य च प्राणधारणार्थं द्विजातीनां भवनान्यसंकीर्णकर्मणामुपतिष्ठेयुः। एवं याचितभैक्ष्याः कामक्रोधदर्पलोभमोहकार्पण्यदम्भपरिवादाभिमानहिंसानिवृत्ता इति॥

(९६) भगवति भक्तिदार्ढ्यं विना विहितकर्मत्यागी प्रत्यवायपात्रम्। भक्तिदार्ढ्यार्थं भक्तिसिद्धये तन्निवेदितन्निष्कामस्वधर्माचरणेनैव भगवतः सेवनीयत्वात्। अन्तरनुत्पन्नभक्तिज्ञानानां कर्मत्यागे पतनमेव हि स्यात्।

निष्ठायाः भेदस्त्विययानेव यद्वर्णाश्रमधर्मकर्माणि श्रीकृष्णार्पितानि सन्ति। भवन्ति भक्तियोगात्मकानि। नान्यथेति।

भक्तियोगोऽपरो वापि न जायेत हरावजे।
अभयादि गुणै र्युक्तः स्वधर्मस्थो भजेद् बुधः ॥
(९७) इति वचनात्।

जन्मकोटि सहस्रेषु पुण्यं यैः समुपार्जितम्।
तेषां भक्तिर्भवेच्छ्रद्धा देवदेवे जनार्दन इत्युक्तेश्च।

शास्त्रे यो वर्णाश्रमाचारो विधीयते तस्याप्यनुत्तमं फलं भक्तिरेवेति प्रस्तुतप्रबन्धतात्पर्यार्थः। अतो भक्तियोगत्वेनानभिमतकर्मयोगस्य न

---

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणमिति भगवदुक्तेः।

एवैव भगवदुक्तिर्भगवच्छिक्षितमहं करवाणि ह्यतन्द्रितइत्यत्रब्रह्मवाक्ये भगवच्छिक्षितपदेन ग्राह्याभिप्रेतेति द्रष्टव्याः।

(९७) नाधर्मस्थः। अभयादीत्यादिपदेन—
अभयं सत्त्वसंशुद्धि र्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्।
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्।
तेजः क्षमा धृतिः शौच मद्रोहो नाति मानितेत्यादिभिर्ग्राह्यं गीताया मुक्तम् ॥

भक्त्या समुच्चयः । यतो भक्तियोगे प्रवृत्तस्य लौकिकवैदिकव्यापारत्यागो न दोषावहः ।

न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह ।
वासुदेवे भगवति भक्तियोगो यतो भवेदित्युक्तेः ।

लोकव्यापारपरित्यागस्तु भगवता गोपीनां स्वयं श्रीमुखेनैवोद्गीतम् । यथा—

ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तलौकिका इति

अन्यत्र चोक्तम्—

ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहमिति

इत्थं च श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लंघ्य वर्त्तते । आज्ञोच्छेदी मम द्वेषी मद्भक्तोऽपि न मे प्रिय इति वचनमभक्तियोगानात्मकभजनपरमेव व्याख्येयम् । तस्मादनन्यभगवद्भक्तानां वैष्णवानां विक्षेपकवर्णाश्रमधर्मत्यागो गुण एव । न हि दोषः । कर्मणां विक्षेपरूपत्वात् लौकिकवैदिकव्यापारपरित्यागे निर्विक्षेपं भगवद्भजनं भवतीति भक्तियोगे तत्त्यागः ।

यदा यस्यानुगृह्णाति भगवानात्मभावितः ।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ।

इत्युक्तेः ॥

विक्षेपविलापनार्थमेव च भक्तियोगे लौकिकवैदिकव्यापारत्यागो नारदसूत्रे निरोधपदेन वाच्य उक्तः। यथा—निरोधस्तु लोकवेदव्यापारत्यागः। तस्मै अनन्यता तद्विरोधिषूदासीनता चेति। अवैष्णवानां वर्णाश्रमवतां तत्त्यागोदोषः। स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः। विपर्ययस्तु दोषः स्या दुभयो रेष निश्चयः।
श्रेयान्स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मो भयावह इति।

श्रीमुखवचनात्। धर्मकर्माणि कुर्वाणस्यापि श्रीकृष्णार्पणपराङ्मुखत्वे हेतुश्च हृदयस्य मालिन्यमेव कर्मठस्य ज्ञेयः। यथोक्तमगस्त्यसंहितायाम्
यावत्पापैस्तु मलिनं हृदयं तावदेव हि।
न शास्त्रे सत्यताबुद्धिः सद्बुद्धिः सद्गुरौ तथेति।

वर्णाश्रमाचाररूपः कर्मयोगो न मोक्षमार्गः किन्त्वन्तः करणशुद्धिमात्रसाधनविधानम्। धर्मेण पापमपनुदतीति श्रुतेः।
कर्मणां संचितादीनां जीवोऽधीनस्तथापि च।
स्वतन्त्रः क्रियमाणे वै कृतो भगवता विदेति

प्रियादासोक्तेः क्रियमाणे कर्मणि स्वतन्त्रो भगवता कृतो जीवः पापप्रणाशाय वर्णाश्रमादि स्व

स्वधर्मकर्म निर्वर्तयेदन्यथा यथेष्टचेष्टत्वे शास्त्राणां शासनमवहेलितं स्यात्। शास्त्रविधेः सहसा परित्यागश्च कथं श्रेय आवहेत् साहसिकस्य। यथाह नचिकेतसं यमः कठोपनिषदि—

न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्। अयं लोको नास्तिपर इति मानी पुनः पुनर्वशमापद्यते मे (९८) इति।

---

(९८) पुनः पुनर्वशमापद्यत इत्यनेन यामी यातना ऽभीक्ष्णमितिध्वनितम्। कथमन्यथा पौनः पुन्येन यमराजवैवश्यन्नास्तिकस्योपपद्येत। एवं चानेकजन्मपर्यन्तं यमराजदण्डभोगेन नास्तिकानामुद्गात् पापशुद्धिर्भवतीति श्रुत्याभिहितमिति। अथास्याः श्रुत्या अर्थः—

नचिकेता ऋषिः पितुः शापाद्यमलोकं गतो यमेन सत्कृतो वरान् ब्रूहीत्युक्तः सन् तम्पृष्टवान्—येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नास्मीति चैके। एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीय इति। यमउवाच—देवैरत्रापि विचिकित्सतं पुरा न हि सुविज्ञेयमणुरेषधर्मः। अन्यं वरं नचिकेतो वृणीष्व मात्रौपरोत्सीरति आ सृजैनमिति। ऋषिरुवाच—देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुविज्ञेयमात्थ। वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चिदिति। यमः—शतायुषः पुत्रपौत्रान्वृणीष्व बहून् पशून् हस्ति हिरण्यमश्वान्। भूमेर्महदायतनं वृणीष्व स्वयं च जीवशरदो यावदिच्छ। ये ये कामा दुर्लभा मर्त्यलोके सर्वान्कामांश्च्छन्दतः

भक्तियोगे अश्रद्धालुर्वैराग्याभ्यासा दैहिकामुष्मिकफलभोगपरित्यागात्मकं वशीकाराख्यं वैराग्यं यावन्नप्राप्नुयात्तावन्नित्यनैमित्तिकादीनि कर्माणि कुर्यात् । भक्तौ श्रद्धायां जातायान्तु तत्त्यागे न दोषोऽणुरपि नापि भयम् । स्पष्टमाह हि श्रीभगवान्—

आज्ञायैवं गुणान्दोषान् मयादिष्टानपि स्वकान् ।
धर्मान्संत्यज्य यः सर्वान्मां भजेत स सत्तमः इति९९

---

प्रार्थयस्व । इमा रामाः सह याः स तूर्या नहीदृशो लम्भनीया मनुष्यैः । आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीरिति । एवमुक्तेऽपि पुनः पुनस्तमेव वरं प्रार्थयमानमृषिं प्रति यमः प्रभुराह । न साम्पराय इति । हे नचिकेतः अयं सांपरायः पारलौकिकं दानादि बालं वाचालं ब्राह्मणवेदनिन्दनशीलम्प्रति न भाति । कथंभूतं बालम् । प्रमाद्यन्तं परस्त्रीपरद्रव्यापहारेण देहं लालयन्तं केवलमसावधानतया । उदरम्भरिमिति यावत । पुनः कीदृशम्—वित्तमोहेन मूढम् । वित्तस्य धनस्य मोहेन मदेन मूढं कृपणमनवस्थितचित्तं च । स च बालः परममूढः अयमेव भोगार्थं लोकोऽस्ति प्रत्यक्षत्वान्न परलोकोऽस्ति । अदृश्यत्वादिति मानी । मन्यते इत्येवं शीलो मानी । स्थूलदृष्टिरित्यर्थः । प्रत्यक्षप्रमाणवादित्वाच्चार्वाकमतानुयायी नास्तिकः पुनः पुनर्मे मम यमराजस्य नास्तिकजनदण्डदातुर्वशमधीनता मापद्यते प्राप्नोतीति ।

( ९९ ) मयादिष्टानपि श्रुतिस्मृती ममैवाज्ञे इत्यादिना

सर्वगुह्यतमं भूयः शृणु मे परमं वचः (१००)।
इष्टोऽसि मे दृढ़मतस्ततोवक्ष्यामि ते हितम्।
मन्मना भवमद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि कौन्तेय प्रतिजाने प्रियोऽसि मे।
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।
येषान्त्वन्तगतं पापं जनानां पुण्यकर्मणाम्।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढ़व्रताः।
न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया।
विभूतिभिर्वाऽभिभवेद्देवोऽपि किमुपार्थिव इति१०१

---

कथितानपि स्वधर्माचरणे सत्वशुद्धादीन् गुणान् विपक्षे प्रत्यवाय दोषांश्चाज्ञाय सम्यग् ज्ञात्वा मद्ध्यानविक्षेपहेतुतया भक्तिबाधकत्वेन भागवतधर्मबाधकान् श्राद्धाग्निहोत्रविद्धैकादशी कृष्णैकादश्युपवासानुपवासानिवेदितभक्षणसूतकानर्चनादयो येतान् संत्यज्य मां भजेत स च सत्तम इति ॥

( १०० ) गुह्यं तु धर्मरहस्यं गुह्यतरं ज्ञानरहस्यं गुह्यतमं भक्तिरहस्यम्। तद्गुह्यतमं मे वचः शृणु। यतो दृढं यथा स्यात्तथा मे भक्तोऽसि परमभक्तिरहस्याधिकार्यसि तस्मात्ते हितं वक्ष्यामि ॥

( १०१ ) अत्र उपयोगीनीति मत्वा सुबहून्यन्यान्यपि वचनानि संगृह्य लिख्यन्ते। यथा—

त्वां प्रपन्नोऽस्मि शरणं देवदेवं जनार्द्दनम्।

इति यः शरणं प्राप्तस्तं क्लेशादुद्धराम्यहमिति ।

तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ।

प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ।

मामेवमेव शरणमात्मानं सर्वदेहिनाम् ।

याहि सर्वात्मभावेन मया स्या ह्यकुतो भय इति ।

ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् ।

हित्वा मां शरणं याताः कथंतांस्त्यक्तुमुत्सह इति च ।

हरिभक्ति सुधोदये–

त्यक्तबन्धुजन स्नेहो मयि यः कुरुते रतिम् ।

एकस्तस्यास्मि स च मे न चान्योऽस्त्यावयोः सुहृदिति ॥

बाल्मीकीये श्रीरामश्च–

सकृदेव प्रपन्नाय तवास्मीति च याचते ।

अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं ममेति ।

अमृतसारोद्धारे यमश्च–

न ब्रह्मा न शिवाग्नीन्द्रा नाहमन्ये दिवौकसः ।

शक्ता नु निग्रहं कर्त्तुं वैष्णवानां महात्मनामिति ॥

स्कान्दे द्वारकामाहात्म्ये च–

मद्भक्तिं वहतां पुंसामिह लोके परत्र वा ।

नाशुभं विद्यते लोके कुलकोटिन्नयेद्दिवमिति ।

श्रीमद्भागवते च–

तथा न ते माधव तावकाः क्वचिद्
भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः ।
त्वयाभिगुप्ता विचरन्ति निर्भया
विनायकाऽनीकपमूर्द्धसु प्रभो इति ।

अस्य न ते माधवेत्यादि श्लोकस्यार्थो यथा—पूर्वं येऽन्येऽरविन्दाक्षेत्यादिना मुक्तानामपि भगवदनादरेण यः परमार्थभ्रंश उक्तः स भक्तानान्नास्तीत्यनेनाह । तथा नेति । यथा पूर्वमारूढपरमपदत्त्वावस्थातोऽपि भ्रश्यन्ति तथा तावका मार्गात साधनावस्थातोऽपि न भ्रश्यन्ति ॥ वृत्रगजेन्द्रभरतादीनां सज्जन्मतो भ्रंशेऽपि भक्तिवासनानुगतिदर्शनादिति ।

श्रीमद्भागवते कपिलदेवः—

नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात् ।
आत्मनः सर्वभूतानां भयं तीव्रं निवर्त्तत इति ।

भगवद्भक्तास्तु मृत्योः शिरः पदा क्रामन्ति । किं पुनर्वक्तव्यं ते निर्भया इति । यथा श्रुतिस्तुता उक्तम् । तवपरि ये चरन्त्यखिलसत्त्वनिकेततया त उतपदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः । परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि कृत सौहृदाः खलु पुनन्ति न ये विमुखा इति ।

तव परिय इत्यादि वेदस्तुति पद्यस्यार्थो यथा—तवेति कर्मणि षष्ठी । त्वामित्यर्थः । ये भक्ता अखिलसत्त्वनिकेततया सर्वभूतावासतया सर्वभूतसेवया परिचरन्ति त उत ते एव निर्ऋते मृत्योः शिरः पदाक्रमन्ति मृत्योर्मूर्ध्निपदं दधति मृत्युं तरन्तीत्यर्थः । तथा च श्रीधरः—

तपन्तु तापैः प्रपतन्तु पर्वता दटन्तु तीर्थानि पठन्तु चागमान् ।
यजन्तु यागै र्विवदन्तु वादै र्हरिं विना नैव मृतिं तरन्तीति ।

किं कृत्वा । तमविगणय्य मृत्युं तिरस्कृत्य । अतस्त्वयि कृतसौहृदा भक्ताः खलुनिश्चितमात्मानमन्यांश्च पुनन्ति । न ये विमुखाः । ते तु नात्मानमपि । कुतो ऽन्यान् । तांस्तु विबुधानपि गिरा परिवयसे परितो बध्नासि पशूनिव । तस्य तु वा

कृतन्ति नामानि दामानि। तदस्येदं वाचा तन्त्या नामभि दीमभिः सर्वं सितमिति श्रुतेः। एतस्यास्तस्यत्वित्यादि श्रुतेरर्थस्तु तन्ती रज्जुः। वागेव तन्तिस्तत्संयुतानि नामानि दामानि एव तन्तिः। अस्येश्वरस्य वाचा तन्त्या नामभिर्दामस्थानीयैः सर्वमिदं सितं बद्धमिति। श्रीमद्भागवते च यथा-

भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः। तन्माययातो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मेति।

भयं द्वितीयाभिनिवेशत इत्यादि पद्यार्थो यथा-ईशादपेतस्येश्वर विमुखस्य भयं भवति कुतः। तस्येश्वरस्य मायया स्वस्वरूपाऽस्मृतिः स्वरूपस्य जीवस्याणोरीश्वराधीनस्य तदंशस्यानन्दमयस्याक्षरस्य ज्ञानगुणस्य ज्ञानस्वरूपस्यास्मृतिरस्फूर्तिस्ततो विपर्ययः देहादावात्मबुद्धिः देहोऽहमस्मीति बुद्धिस्ततो द्वितीयाभिनिवेशः स्वपररूपो नानाभिनिवेशः जड़चैतनविग्रहस्य भगवतोऽस्फुरणात्॥ ततो द्वितीयाभिनिवेशाद्भयं भवतीत्यर्थः अतो बुधस्तु तमेवेश्वरमाभजेत आसमन्तात् भूतानुकूल्येनेति भावः। कथं भूतो बुधः गुरुरेव पूज्या देवता गुरुरेव च आत्मा प्रियो यस्य सः। अतो भगवद्भजनं विना न कदापि कालभयं निवर्त्तत इति। अत्र भक्त्यैकया भजेतेत्यनेन कर्मज्ञानादिकन्नाद्दलं किन्तु साक्षाद् भक्त्या श्रवणकीर्तनादिलक्षणयैव भजेतेत्युक्तम्। ज्ञानादीनामन्यत्रानासक्तिहेतुत्वादि द्वारा भक्तिसाचिव्येनैव विधानात्। न तु स्वातन्त्र्याद्भक्तिनैरपेक्ष्येण अत एवोक्तम्-

तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया।
पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतयेति।

भक्त्या तत्कथादिरुचेरेव पराकाष्ठा। ज्ञानवैराग्ययुक्तया स्वात्मजाभ्यां ज्ञानवैराग्याभ्यां सेवितया भक्त्या। तस्माद् भक्तिरन्य-

निरपेक्षा । ज्ञानवैराग्यं तु तत्सापेक्षे इति लभ्यते ।

युधिष्ठिरं प्रति नारदः—

शारीरा मानसा दिव्या वैयासे ये च मानुषाः ।

भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयमिति ॥ गारुडे च

न च दुर्वाससः शापो वज्रं चापि शचीपतेः ।

हन्तुं समर्थः पुरुषं हृदिस्थे मधुसूदने इति ॥

बृहन्नारदीयेऽपि ॥

यत्र पूजापरो विष्णोस्तत्र विघ्नो न बाधते ।

राजा च तस्करश्चापि व्याधयश्च न सन्ति हि ।

प्रेताः पिशाचाः कूष्माण्डा ग्रहा बालग्रहास्तथा ।

डाकिन्यो राक्षसाश्चैव न बाधन्तेऽच्युतार्चकमिति ।

प्रह्लादोऽसुरबालकान् प्रति-

देवोऽसुरो मनुष्यो वा रक्षो गन्धर्व एव वा ।

भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा वयमिति ।

देवोऽसुर इत्यादि श्लोकस्यार्थश्चायम्—ननु कथं निश्चीयते स्वस्तिमान्स्यादिति तत्राह प्रामाणिकन्निदर्शनम् । यथा वयमिति । भूतभविष्यद्दृष्टान्ताभ्यां बालानान्नः न सन्देहनिवृत्तिरितिशङ्कायामनुभवात्मकन्निदर्शनमेतद्धि । अयं भावः ।

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।

न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ।

इत्यादिना आत्मा त्वच्छेद्यादि गुणकस्तथापि मुकुन्दचरणभजनादस्माकं देहोऽप्यात्मगुणकोजातश्छेदनाद्यभावात् । तदुक्तं शुकेन—

दिग्गजै र्दन्दशूकेन्द्रै रभिचारावपातनैः ।

मायाभिः सन्निरोधैश्च गरदानै रभोजनैः ॥

हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि।

न शशाक यदाहन्तुमपापमसुरः सुतम्।

चिन्तां दीर्घतमां प्राप्तस्तत्कर्त्तुं नाभ्य पद्यतेति। अन्यत्र च

क्षिप्तोऽगाध ह्रदे सितश्च सततं पाशै र्विषं भक्षितः

शैलादे रवपातितः पुनरयं नीतः करीन्द्रान्तिकम्।

खड्गैर्हन्तु मयच्छदात्मतनयं त्राता तव क्वास्तिकः

सर्वत्रास्ति प्रभु र्द्रुतन्नरहरेः कारुण्यपात्रं बभाविति

अत्र दन्तागजानांकुलिशाग्रनिष्ठुरा इत्यादिकं च वचनमनुसन्धेयम्।

तावद्भयं द्रविणदेह सुहृन्निमित्तं शोकः स्पृहा परिभवो विपुलश्च लोभः। तावन्ममेत्यसदवग्रह आर्तिमूलं यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोक इति।

यल्लब्ध्वा पुमान् सिद्धो भवत्यमृतोभवति तृप्तो भवति। यत्प्राप्य न किञ्चिद्वाञ्छति न शोचति न द्वेष्टि न रमते नोत्साही भवतीति नारदसूत्रे प्रोक्तम्।

अस्य श्लोकस्यार्थः—यल्लब्ध्वेत्यादि नारदसूत्रस्यार्थो यथा। यद्यां भक्तिं लब्ध्वा जन्तुः सिद्धो भवति साधनान्तरनिरपेक्षो भवति। अमृतो भवति मृत्युभयाभावात्स्वयमानन्दरूपो भवति। तृप्तो भवति सर्वविषयसुखेभ्य उपरतो भवति। मत्तो भवति विक्षिप्तो भवति। स्तब्धो भवति जड़ोन्मत्तपिशाचवत्। यश्च प्रेमरसरूपं मद्यं पिबति स किं किन्न करोति। गायति हसति रोदितीति। आत्मनि आरामो यस्य स एतादृशो भवतीति। सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यै रिह। न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृता इति। स्वयं यमोऽप्याह-

एवं विमृश्य सुधियो भगवत्यनन्ते सर्वात्मना विदधते खलु भाव योगम् । ते मे न दण्डमर्हन्त्यपि यद्यमीषां स्यात्पातकं तदपि हन्त्युरुगायवादः । जिह्वा न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविन्दम् । कृष्णाय नो नमति यच्छिर एकदापि तानानयध्वमसतो ऽकृतविष्णुकृत्यान् ॥ तानानयध्वमसतो विमुखान् मुकुन्दपादारविन्दमकरन्दरसादजस्रम् । निष्किञ्चनैः परमहंसकुलैरसङ्गैर्जुष्टान् गृहे निरयवर्त्मनि बद्धतृष्णानिति ॥

अत्रभक्तानामानयनेन भक्तानामनानयनमेव विधीयते ।
अहममरगणार्चितेन धात्रा यम इति लोकहिताहिते नियुक्तः ।
हरिगुरुविमुखान्प्रशास्मि मर्त्यान् हरिचरणप्रणतान्नमस्करोमि ।
कमलनयनवासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे ।
भवशरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान् ।
विमलमतिरमत्सरः सुशान्तः शुभचरितोऽखिलसत्त्वमित्र भूतः ।
प्रियहितवचनोऽस्तमानमायो वसतिसदा हृदि तस्य वासुदेवः॥
यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् ।
अपगतमदमानमत्सराणां व्रज भट दूरतरेण पावनानाम् ।
स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ।
परिहरमधुसूदनप्रपन्नान् प्रभुरहमन्यनृणान्न वैष्णवानाम् ।

सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतो भयः ।
सुशीलाः साधवो यत्र नारायणपरायणाः ।
अभावे सर्ववस्तूनां सलिलेनापि येऽर्चिताः ।
प्रागेव दिशति स्थानं स त्वया किन्न पूजितः ।
एकतो धावते चक्र मेकतो हरिवाहनम् ।
एकतो विष्णु दूताश्च वैष्णवे चार्दिते मयेति ।

ननु भगवन्तं भजमानस्य जनस्य लौकिकव्यापारपरित्यागे योगक्षेमः कथं सिध्येदिति चेच्छृणु, स्वयं श्रीभगवान् श्रीमुखेनाह ।

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ।
तेषामहं समुद्धर्त्ता मृत्युसंसार सागरात् ।

---

पाद्मे यमदूत वाक्यम् ।

प्राहास्मान् यमुना भ्राता सादरं हि पुनः पुनः ।
भवद्भिर्वैष्णवास्त्याज्या विष्णुं चेद्भजते नर इति ।

श्रीमद्भागवे पुरञ्जनश्च-पश्ये न वीतभयमुन्मुदितं त्रिलोक्या
मन्यत्र वै मुररिपोरितरत्र दासादिति ।

अस्य पश्ये न वीतेति पद्यार्द्धस्यार्थो यथा—मुररिपोः श्रीकृष्णस्य दासादन्यत्रवीतभयं निर्भीकं,उन्मुदितं महामोदयुक्तं कमपि जीवं त्रिलोक्यां तोऽन्यत्र स्वर्गादिषु लोकेषु न पश्येपश्याम्यहम्। ईश्वरदासादन्ये ये भक्त्यभावन्तस्तएव भयवन्त इति। श्रीमद्भागवतेच।

तत्पादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः ।
विकर्म यच्चोत्पतितं कथंचिद् धुनोति सर्वं हृदि सन्निविष्ट इति।

अननुष्ठानतो दोषो भक्त्यङ्गानां प्रजायते ।
न कर्मणामकरणादेष भक्त्यधिकारिणाम् ।
निषिद्धाचारतो दैवात् प्रायश्चित्तं तु नोचितम् ।
इति वैष्णवशास्त्राणां रहस्यं तद्विदांमतमिति ।

जैमिनिश्च—

हृदि भावयतां भक्त्या भगवन्तमधोक्षजम् ।
यः कोऽपि दैहिको दोषो जातमात्रो विनश्यतीति चेति ।

भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ।
अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ।
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहमिति ।

ननु भक्तस्य भगवदेकनिर्वाह्यत्वे ।

सत्यं शतेन विघ्नानां सहस्रेण तथा तपः ।
विघ्नायुतेन गोविन्दे नृणां भक्तिर्निवार्यत इति ।
विघ्ननिर्देशवाक्यस्य कागतिरिति चेत् तत्रापि श्रूयताम्—भक्तियोगनिष्ठायाः प्रागेव बहिर्मुखानां विक्षिप्तचित्तानां पक्षे तत्प्रारब्धादिकर्म जनितविघातापाते तद्वचनतात्पर्यम् इति ज्ञेयम्। न तु भक्तिनिष्ठभजनपक्षे भक्तिनिष्ठाविरहितजन पक्ष एव च श्रीमद्भागवते उक्तम्।

धर्मः स्वनुष्ठितः पुंसां विष्वक्सेन कथासु यः ।
[नोत्पादयेद्यदि रतिं श्रम एव हि केवलमिति१०२।

(१०२)देशकालाद्यानुकूल्येनानुष्ठितेऽपि पुंसां धर्मो यदि विष्वगासमन्तात् सेना यस्य तस्य भगवतः कथासु रतिं भक्तिं नोत्पादयेत स श्रम एव केवलम् । दुःखप्रदत्वात् । ननु तथापि स्वर्गफलात्तस्मात् स्वर्गः फलन्त्वस्त्येवेत्याशङ्कायामुच्यते। क्षयिष्णुत्वात् स्वर्गस सोऽपि हेय एव। साधनफलकाल एव दुःखप्र-

स्कान्दे च-

विष्णुभक्तिविहीनानां श्रौतास्मार्ताश्च याः क्रियाः
कायक्लेशफलं तासां स्वैरिणीव्यभिचारवदिति ।

न केवलं मोघः श्रम एव; अपि तु भयाया अनिवृत्तिरपि । यथा वेदस्तुतौ-नृषु तव माययाभ्रमममीष्ववगत्य भृशं त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् । कथमनुवर्त्ततां भयं तव यद् भृकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयमिति (१०३) ।

विक्षिप्तचित्तान् विमुखानेव लक्ष्यीकृत्य च गीतायामुक्तम् ।

---

दानां भजनविरुद्धानां कर्मणां हेयत्वं श्रुतिसंमतमितिभावः । उक्तं च विष्णु पुराणे—

मीनाः स्नानपराः फणीपवनभुङ् मेषश्च पर्णाशनो नीराशः खलुचातको हि नितरां शेते बिले मूषकः । भस्मोद्धूलन तत्परश्च हि खरो ध्यानानुरक्तोवकस्ते सर्वे न हि यान्ति मोक्ष पदवीं भक्तिं विना श्रीहरेरिति ।

एतावानेव लोकेऽस्मिन्पुंसां धर्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिरिति ॥

(१०३) अमीषु नृषु तव मायया भ्रमं भ्रमणं संसारचक्रमवगत्य ज्ञात्वा सुधियः परमया मुदा त्वयि भावं भावाङ्गं भक्ति-

योगं भृशमत्यर्थं दधति विदधति कुर्वन्ति। कथंभूते त्वयि। अभवे भव निवर्त्तके। कथंभूतं भावम्। अनुप्रभवं अनुभावादिलक्षणः प्रभवो जन्म यस्य तम्। स च भावः पञ्चविधः प्रपञ्चितः। शान्तदास्यसख्यवात्सल्योज्ज्वल भेदात्। अतएव भक्तिरसानां मध्ये पञ्चरसा एव मुख्याः। विभावानुभावसात्त्विकसंचारिभिः स्थायिभावाख्यो भक्तिरसो भवति। रसविषयस्तु रसस्वरूपो भगवान् कृष्णो वेदितव्यः। रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवतीति श्रुतेः। यद्विषयात्मकोभावस्तद्विषयावलम्बनो विभाव इत्युच्यते। स च द्विविधः। विषयालम्बनात्मक आश्रयालम्बनात्मकश्चेति। ये स्मारका वस्त्रालङ्कारायुधवेणवादय एते तूद्दीपनविभावा इत्युच्यन्ते। ये भावज्ञापकाः सेवनहास्यनृत्यगीतादयस्तेऽनुभावाः। ये चित्तक्षोभकास्ते सात्त्विकाः। ते चाष्टौ यथा स्तम्भस्वेदरोमाञ्चाश्रुकम्पस्वरभङ्गवैवर्ण्य प्रलया इति। निर्वेदहर्षगर्वमदवितर्कमोहादयो व्यभिचारिणः।

तत्र शान्तरसे जगत्कारणं परब्रह्मपरमात्मा नराकृतिः श्रीकृष्णो रामचन्द्रो नारायणो विषयालम्बनः। सनकादय ऋषयः शिवादयो देवा आश्रयालम्बनाः। उपनिषद्विचारादय उद्दीपनविभावाः। नासाग्रदृष्ट्यादयोऽनुभावाः। प्रलयवर्जिता अश्रुपुलकादयः सात्त्विकाः। निर्वेदस्मृत्यादयः संचारिणः। शान्तिः स्थायी भाव इति।

दास्यरसे सर्वेश्वरः सर्वोपास्यः सर्वशक्तिः समस्तकल्याणगुणगणार्णवो दासवत्सलः सेवकसेवानपेक्षोऽपि दासप्रियः परमेश्वरः सच्चिदानन्दविग्रहो विषयालम्बनः। गोपकुमारोद्धवश्रुतिदेवाम्बरीषविष्वक्सेन हनूमदादय आश्रयालम्बनाः।

वृन्दा यमुना गङ्गा सरयू भक्तपादचिन्ह गुण वर्णनगोपीचन्दनोच्छिष्ट गन्धमाल्यवस्त्रालङ्कारायुधादय उद्दीपनविभावाः । श्रीभगवत परिचर्यादयोऽनुभावाः । स्तम्भादयः सात्त्विकाः । हर्षादयः संचारिणः । स्नेहादिर्भावः स्थायी । कृष्णवियोगे तु दशदशाः । यथा—तापः कृशता उद्वेगः शून्यताऽधृति जंड़ता व्याधि रुन्मादो मूर्च्छा मृति रिति ।

सख्यरसे प्रवीणोत्तमस्त्रैलोक्य सुन्दरो मेधावी सुवेशो मित्र वत्सलो विश्वासास्पदम् । भगवान् श्रीकृष्णः विषयालम्बनः । श्री- दामार्जुनसुदामसुग्रीवादय आश्रयालम्बनाः । एकशय्याशना- शनविविधविचित्रपरिहासादयोऽनुभावाः । स्तम्भादयोऽष्टौ सात्त्विकाः । हर्षादयः संचारिणः । सख्यं स्थायि भावः । वि- योगे तु पूर्ववद्दश दशाः ।

वात्सल्ये तु कोमलाङ्गः परमचञ्चलः सर्वसुलक्षणसंपन्नः परम सुन्दरो भगवान् विषयालम्बनः । नन्दोपनन्द यशोदा रोहिणी वसुदेवदेवकी दशरथ कौसल्या कश्यपाऽदित्यादय आश्रयालम्ब- नाः । स्मितजल्पितचापल्यादय उद्दीपनविभावाः । अङ्गाभि- मार्जनाशीर्वादनिदेशलालनपालनादयोऽनुभावाः । स्तम्भादयः सात्त्विकाः । हर्षशङ्कादयोव्यभिचारिणः । वात्सल्यं स्थायिभावः वियोगे तु सर्वेषां पूर्ववद्दश दशाः ।

उज्ज्वल (शृङ्गार) रसे तु सर्वमाधुर्य समुद्रः परमकमनी- योत्तमः सर्वसौन्दर्य संग्रहः सर्वमनोनयनाह्लादकारको नित्य- किशोरः श्रीकृष्णो विषयालम्बनः । तत्प्रिया आश्रयालम्बनाः। वेणुरववाद्यादय उद्दीपनविभावाः। कटाक्षादयोऽनुभावाः । स्त- म्भादयः सात्त्विकाः । आलस्य निर्वेदादयः संचारिणः । प्रिय- ता रतिः स्थायी भावः । वियोगे तु दश दशाः पूर्ववत् ।

प्रकृते गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्नविचालयेदिति
अन्यथा एतेन वचनेन भक्तिनिष्ठाधिकृतेभ्योऽ-
प्यनुपदेशशासने सहोवाच याज्ञवल्क्य इत्यादि
विधिश्रुतेः, तस्मात् पुमानात्महिताय प्रेम्णा हरिं
भजेत ।

पुत्रांश्च शिष्यांश्च नृपो गुरु र्वा
मल्लोक कामो मदनुग्रहार्थः ।
एवं विमन्युरनुशिक्षेदतज्ज्ञान्
न योजयेत् कर्मसु कर्ममूढा-

नित्यादि वाक्यानां च विरोधापत्तिः । याज्ञव-
ल्क्यवचनमनुसृत्य व्यवहरन्तो गुर्वादयश्च नि-
न्दिता ऋषभदेवेन । यथा-

गुरु र्न स स्यात् स्वजनो न स स्यात्
पिता न स स्याज्जननी न सा स्यात्

---

सुधियो भावं विदधतीत्युक्तम् । किन्तत इत्यत आह । अनुवर्त्ततां त्वयि भावं विदधतां शरणं गतानां पुंसां कथं भवभयं संसारभयं भवेत् । न कथञ्चिदपीत्यर्थः । कुतो यद्यस्मात्तव भृकुटिः भ्रूभङ्गरूपस्त्रिणेमिः कालः अभगवच्छरणेषु भयं जन्ममरणलक्षणं मुहु र्वारं वारं सृजति न भवाच्छरणं रक्षिता येषां तेषु विमुखेषु न तु त्वच्छरणागतेषु प्रियत्वात् । त्रिणेमिरिति-तिस्रो नेमयोऽवच्छेदाः शीतोष्णवर्षाकाला यस्य स त्रिणेमिरिति

दैवं न तत् स्यान्न पतिश्च स स्यान्
न मोचयेद् यः समुपेतमृत्युमिति)(१०४)।

नारदपञ्चरात्रे भक्तिप्रदा गुर्वादयः स्तुताः । यथा
स गुरुः स पिता वन्द्यः सा माता स पतिः सुतः।
यो ददाति हरौ भक्तिं कर्ममूलनिकृन्तनीमिति ।

एतेन हितेच्छूनामुपदेशपात्राणि भक्ताः प्रति-
भक्तेमुपदेशावश्यकत्वं च द्योतितम् । तथाहि ।
उपदेशं विना व्यासो नाज्ञासीत् पूर्वमीश्वरि ।
तस्मात् प्रयत्नतः कार्य उपदेशः सतां मुखादिति।

ब्रह्मापि नारायणादुपदेशं प्राप्य सृष्टिं रचित
वान् । जीवैश्च ततो हितोपदेशः संप्रदायपरं
परा प्राप्तो यथा—

---

(१०४) समुपेतः सम्यगुपतो मृत्युः समुपेतमृत्युस्तं तत्स॰
काशादिति भावः । शिष्यादिकं भक्तिमार्गोपदेशेन यो न मोच-
येत् स गुरुर्न स्यात् केवलं शिष्यद्रव्यापहारको वञ्चकः प्रतिष्ठा
प्रिय एव वा । स पितापि न स्यात पुत्ररक्षणाभावात् । सा
जनन्यपि न स्यात् पुत्र भक्षणात् सर्पिणीव स पतिरपि न स्यात्
रक्षणा भावात । तद्दैवमपि न स्यात् । सेवकहिताहितज्ञाना-
भावात् सामर्थ्याभावात् । स स्वजनोऽपि न स्यात् । यमकिङ्क-
रप्रियत्वात् । तेषां गुर्वादिर्न स्यात् । तथा गुर्वादीनां भक्त्युप-
देशेऽपि विपरीतभावना संभावनाभ्यां भगवति भक्तिं न कु-
र्वन्ति ये ते शिष्यादयोऽपि किन्त्वात्मवञ्चका एवेति भावः ।

भगवान् ब्रह्मकात्स्न्र्येन त्रिरन्वीक्ष्य मनीषया ।
तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेदिति१०५

अतएव महान्तः प्रणोद्यन्ते-यथा-

दूरे हरिकथाः केचिद्‌ दूरे चाच्युतकीर्तनाः ।
स्त्रियो वैश्यादयो मूढा स्तेऽनुकम्प्या भवादृशाम्

---

तत एव स्वमुखेन स्वान्निनन्दन्ति याज्ञिकाः । यथा-

धिग् जन्म न स्त्रिवृद्विद्यां धिग् व्रतं धिग् बहुज्ञताम् ।
धिक् कुलं धिक् क्रिया दाक्ष्यं विमुखा ये त्वधोक्षज इति।

(१०५) वाल्मीकिरपि नारदोपदेशाद्रामायणं रचितवान् ।

सुमित्रा च लक्ष्मणमुपदिदेश । यथा—

रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ।
अयोध्यामटवीं विद्धि गच्छ तात यथासुख मिति ।

मदालसा स्वपुत्रम्प्रति-

शुद्धोऽसि बुद्धोऽसि निरञ्जनोऽसि संसारमाया परिवर्द्धितोऽसि ।
संसारस्वप्नं त्यज मोहनिद्रां मदालसा वाक्यमुवाचपुत्रमिति ॥

सुनीति ध्रुवं यथा-

तमेव वत्साश्रयभृत्यवत्सलं मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् ।
अनन्यभावे निजधर्मभाविते मनस्यवस्थाप्यभजस्वपूरुषम् ॥
नान्यं ततः पद्मपलाशलोचनाद्‌ दुःखच्छिदन्ते मृगयामि कञ्चन ।
यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्गविमृग्यमाणयेति ।

तस्मात्त्वं सर्वभावेन भजस्व परमेष्ठिनम् ।
तद्गुणाश्रयया भक्त्या भजनीयपदाम्बुजमिति ।

तस्मात्त्वमिति पद्यस्यार्थो यथा—तस्माद् हे वत्सत्वमपि ज्ञानस्वरूपमनावृतज्ञानगुणमपहतपाप्मानं शुद्धमणुं श्रीकृष्णाधीनं तदंशं जन्ममरणातीतं स्थूलदेहादिभ्यो भिन्नं विलक्षणं स्वस्वरूपं ज्ञात्वा सर्वभावेन सर्वान्तर्यामिदृष्ट्या सर्वभूतानुकूल्येन भजनीयपदाम्बुजं प्रीत्याश्रयणीय चरणकमलम् श्रीराधिकानाथं सच्चिदानन्दविग्रहं परमेष्ठिनं परमात्मानं परं ब्रह्म तद्गुणाश्रयया नान्यगुणास्पदया भक्त्या भजस्वेति।

> तस्मात्त्वं सर्वभावेन सच्चिदानन्दविग्रहम्।
> भजस्व राधिकानाथं भगवन्तमधोक्षजमिति।

अस्य पद्यस्यार्थो यथा—तस्मात्सर्ववेदप्रतिपादितत्वात्सर्वकारणत्वाच्च हे वत्सप्रिय स त्वमपि सच्चिदानन्द विग्रहं राधिकानाथमधोक्षजं मधुसूदनम् भगवन्तं सर्वभावेन सर्वान्तर्यामिदृष्ट्या भजस्वेति। तस्माद्भारतसर्वात्मा भगवान् हरिरीश्वरः श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयमिति। तस्माद्भारतेत्यादि पद्यास्यार्थो यथा—यतोऽन्ये देवान सर्वत्र सर्वदा श्रोतव्याः कीर्तयितव्याश्च। यथाऽशुभकालेषु मरणादिषु गणेशादीनाम् अधिकाशुभप्रदत्वात। वैराग्ये कामादीनामपि मनः संक्षोभकगुणत्वात। अभयमिच्छता पुरुषेण सर्वात्मा श्रीकृष्णः श्रोतव्यः कीर्तितव्यः कीर्तयितव्यः स्मर्त्तव्यश्च। स एव ध्येयः पूज्यो वन्द्यः सेव्यः। सर्वात्मत्वात् सुलभः प्रीतिविषयः सुखदश्च। तत्कुतः। यतो हरिः स्वभक्तानां पापं दुःखानि हरतीति हरिः। तत्कुतः। यत ईश्वरः कर्त्तमकर्त्तुमन्यथाकर्त्तुं समर्थः। पुनर्भगवान् अचिन्त्यैश्वर्यगुण इति।

> तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्वदा।
> श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणामिति

इत्यादय उपदेशवाचोऽत्रानुसंधेयाः ।

सर्वदा सर्वभावेन भजनीयो व्रजाधिपः ।
स्वस्यायमेव धर्मो हि नान्यः क्वापि कथञ्चन ।
एवं सर्वैः स्वकर्त्तव्यं स्वयमेव करिष्यति ।
प्रभुः सर्वसमर्थो हि ततो निश्चिन्ततां व्रजेत ।
यदि श्रीगोकुलाधीशो धृतः सर्वात्मना हृदि ।
ततः किमपरं ब्रूहि लौकिकैर्वैदिकैरपि ।
तस्मात्सर्वात्मना नित्यं गोकुलेश्वरपादयोः ।
स्मरणं कीर्त्तनं चास्य न त्याज्यमिति मे मतिरिति

श्रीवल्लभाचार्यश्चेति ।

तस्मात्वं सर्वभावेन देहेन मनसा गिरा ।
भजस्व परमोत्कृष्टं भजनीय पदाम्बुजमिति ।

अस्य श्लोकस्यार्थो यथा तस्मात्सर्ववेदप्रतिपादितत्वात् सर्वकारणत्वाच्च हे प्रिय त्वमपि भजनीयपदाम्बुजन्तं परमोत्कृष्टं भगवन्तं सर्वभावेनान्तर्यामि दृष्ट्या सर्वभूतानुकूल्येन देहेन तस्य भगवतो जड़चेतनयोर्विग्रहयोर्यथोचिता परिचर्या मनसा तस्य नामधामलीलारूपगुणानां ध्यानं निरन्तरम् । तद्यथा बर्हापीड़ मेघश्याम मन्दहास्य विराजितवदन चतुर्भुज शङ्खचक्रगदापद्माद्यायुध पीताम्बरधर वनमालाविभूषितकन्धर सुन्दरनयनभ्रूलताकर्णनासिकाकटितट वक्षः स्थल श्रीवत्सं श्रीनिकेतन प्रोल्लसत्कौस्तुभमणि हारोद्दामकाञ्चीकङ्कणाङ्गदाऽङ्गुलीयस्फुरन्मकरकुण्डलकान्तिमण्डितगण्डयुगल वै दूर्यनद्धकिरीटोल्लसित भूषणभूषित कुङ्कुमागरुकस्तूरीश्रीखण्डघन-

चर्चित कल्पद्रुमकुसुमतुलसीदलमंजुलमञ्जर्यामोदपुण्यपुञ्जपूजित सुहृत्सामश्रवणोत्सुक सनकसनन्दनसनातनसनत्कुमार ऋषभकपिलबादरायणप्रह्लादसुनीतिध्रुवाम्बरीष शुकशौनकनारदादिवन्दितपादारविन्द सूर्यकोटिप्रतीकाश चन्द्रामृतधार प्रकृत्या रमणाय रमारमण रङ्गधाम लीलाविग्रहानेकस्फुरत्स्वशक्त्याभिराम कमलनाभ अनन्तकोटिब्रह्माण्डाधीश श्रीकृष्ण कृपासिन्धो दीनबन्धो त्वां ध्यायामि पाहि पाहि दीनं स्वचरणशरणं पालयपालयमाम्प्रभो इति।

भो भगवन् अखण्डब्रह्माण्डमण्डलाखण्डल श्रीमन्महा महाराजाधिराज द्वारकाधीश परमहंसपथाधिगम्यचरणकमल कमलअशितिकण्ठाभरणीभूतगुणगण गणनातीत लोकोत्तरप्रभाव भो वरदआश्रितवर्गवर्द्धन गोवर्द्धनधारिन् भक्तवत्सल दीनबन्धो दयासिन्धो स्वयं त्वमेव भक्तानां भवदनुस्मृतिविधिविरोधिनो विषयवासनावल्लरीः (मञ्जरीः) समन्तादपनीय परमसुखास्पदनिजपादारविन्दैक निष्ठामेव निष्कपटं स्रष्टुमर्हसीति वारं वारं त्वां ध्यायतो मे विज्ञप्ति रिति। भो भगवंश्चकोरचञ्चलविलोचन मधुरवचन कुटिलकचविलसद्वदन वदनविधूतमदन सुरदन बहुललितविहार हारविलसद्धृदयभवन अतिमृदुलतनो विविधप्रेमभाजनसुहृज्जनरुचिकर सरसरसभोजन मनोज्ञताम्बूल वीटिकाचुम्बनपरिहसन महाधनवसन कोमलकशिपुशयन शोभा भवन घनकनकमणिगणरणदाभरण गोवारण तुरगरथ राज्यादिषु विषयविषोपभोगमलीमसमनसामविवेकिनामभक्तानां प्रतीयमानमपि सुखमुत्तरकालदुःखजालजनकमत्यनादेयमेव विवेकिभिर्हरिभक्तैः। आराममस्य पश्यन्ति न तं पश्यति कश्चनेत्यादिश्रुतिकदम्बप्रतिपाद्यमानोत्तमोत्तमसुखरूपैका भगवद्भक्तिः।

सा च भगवत्प्रसादैकसमधिगम्या ध्यायतो मम यथा संपत्स्यते तथैव भवता विधेयम् । हे नाथ नाथयानो मनोरथं यथा भवदीयचरणारविन्दे एव रति मुद्वहन्तो हन्त चित्तेन प्रारब्धकर्मफलमुपभुञ्जानाः समयं गमयामहे इति च । यथोक्तं ब्रह्मणा तत्तेऽनुकम्पां सुसमीक्षमाणो भुञ्जान एवात्मकृतं विपाकम् ।
हृद् वाग् वपुर्भि र्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभागिति

गिरा तु—भो भगवन् परमेश्वर पुरुषोत्तम सर्वेश्वर सर्वज्ञ सर्वान्तर्यामिन् सर्वोपास्य सर्वगुणाश्रय परमसुन्दर सर्वजननयनाऽऽनन्दकर समस्तकल्याणगुणगणाकर परममङ्गल श्रीनारायण श्रीपते जानकीनाथ त्रिविक्रम श्रीराधावल्लभ मामुद्धराऽधमाधमं परमाऽपराधिनं, हे करुणासमुद्र मयि कृपां कुरु अशरणशरण रक्ष रक्ष मां संसारसागरादिति ।

जय जय जगज्जनक जगत्पालक जगदाधार सत्यसंकल्प देवदेव सर्वान्तर्यामिन् परममङ्गल महाप्रभो परमानन्दविधायक शुभदायक मुनिमनोरञ्जन भवभयभञ्जन भक्तानन्दविवर्धन कलिमलमर्द्दन प्रियजनपरितोषक विश्वपरिपोषक मय्यधमे कृपां कुरु त्वां सुधापारावारमनादृत्य विषयगरलपल्वलोदके मग्नं क्लेशभागिनं दीनं मामुद्धर भो अशरणशरण रक्ष मां संसारसागरादिति च ।

जय जय सच्चिदानन्दघन घनघटाश्याम दुरवगाहलील लीलया कृतधरणितलावतरण ललितविलास व्रजपुरमङ्गलावतार तारकेशक्लेशकरवदन बिम्बबन्धूकरुचिरमधुराधर काश्मीरपिञ्जर चीर ललितविहार हारविलसद्वक्षःस्थल स्थलकमलविमलपदयुग युगचतुष्ककृतांशावतार तारकावदगणनीयनामरूप अखिललोकनाथ नाथ नमस्ते नमस्ते जगति समस्ते समस्ति कोऽपरः । यं

तव कुहकं कुह कं न मोहयति। दुर्घटघटनचातुरी चाऽऽतुरी करोति कस्य न मनो हे मनोरम मूर्त्तानन्द नन्दनन्दन नन्दनवन विहारिणां मुकुटमहामरकत कतमो भवन्तमुत्तमश्लोकमुपश्लोकयितु मर्हतीति च।

इन्द्रियवृत्तिभि र्यथा—मनोवृत्तिर्भगवन्नाम रूपलीलाधामगुणेषु। न कदाप्यन्यत्र। बुद्धिवृत्तिस्तत्सगुणा ऽगुणयोः स्वरूपयो र्भेदाभावे निश्चयात्मिकैव। अहंकारस्य द्वे वृत्ती । अहन्ता ममता चेति। अहं प्रभो र्भगवतो जनः सेवकः। सेव्यो मे भगवान् स परिकरः कृपापारावारः सर्वेश्वर इत्येवं पार्षदरूपे स्वविग्रहे ऽहन्ता। श्रीभगवद्विग्रहे ममता। एतेन—सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्। सामुद्रो हि तरङ्गः क्व च न समुद्रो न तारङ्ग इति शङ्करोक्तमात्मनो जीवस्य भगवति निर्ममत्वख्यापन मनादेयम्। चित्तवृत्तिस्तु तद्रूपादिचिन्तने। नेत्रयो र्वृत्ति स्तद्रूपावलोकने। श्रवणवृत्ति स्तद्गुणनामश्रवणे। करयो र्वृत्ति र्हरिपरिचर्यायाम्। वाग्वृत्ति स्तद्गुणनाम कथने। पादवृत्ति स्तत्क्षेत्रानुसर्पणे । एवं सर्वेन्द्रियाणां वृत्तिरभ्यासेन स्वाभाविकी भक्ति र्भगवति विधेयेति। भगवद्भक्तिविमुखानामिन्द्रियाणामिन्द्रियत्वमेव नास्तीत्याह। शौनकः—

बिले बतोरुक्रमविक्रमान् ये न शृण्वतः कर्णपुटे नरस्य।
जिह्वा सती दार्दुरिकेव सूत नचोपगायत्युरुगायगाथाः।
भारः परं पट्टकिरीटजुष्टमप्युत्तमाङ्गन्न नमेन् मुकुन्दम्।
शावौ करौ नो कुरुतः सपर्यां हरे र्लसत्काञ्चन कङ्कणौ वा।
बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये।
पादौ नृणां तौ द्रुमजन्मभाजौ क्षेत्राणि नानुव्रजतो हरे र्यौ।
तदश्मसारं हृदयं बतेदं यद्गृह्यमाणै र्हरिनामधेयैः।

इति उपदेशप्रदानेनेति शेषः । उपदेशाभावे हि प्रायशो गृहव्रतानां रुचि र्न जायेतैव । यथोक्तं श्रीमद्भागवते—

मति र्न कृष्णे परतः स्वतो वा
मिथो ऽभिपद्येत गृहव्रतानाम् ।
अदान्तगोभि र्विशतां तमिस्रं
पुनः पुन श्चर्वितचर्वणानामिति १०६

---

न विक्रियेताथ यदा विकारो नेत्रेजलं गात्ररुहेषु हर्षः । अस्यार्थो यथा बिले विषयवार्त्ता युतावतः सर्पालयौ । दार्दुरिकेव दर्दुरीभेक स्तदीया असती स्वमरणोत्पादिकैवेति भावः । पट्टकिरीटजुष्टमपि पट्टवस्त्रोष्णीषेण किरीटेन जुष्टमपि । भार एव । शवः प्रेतस्तदीयौ शावौ करौ तत्करतुल्यावित्यर्थः । ननु तर्हि कानीन्द्रियाणि इति जिज्ञासायामेवाह नृपेन्द्रवाक्येन—

सा वाग्यया तस्य गुणान् गृणीते करौ च तत्कर्मकरौ मनश्च ।
स्मरेद्वसन्तं स्थिरजङ्गमेषु शृणोति तत्पुण्यकथां स कर्णः ।
शिरस्तु तस्यो भयलिङ्गमा ऽऽनमेत् तदेव यत्पश्यति तद्धि चक्षुः ।
अङ्गानि विष्णो रथतज्जनानां पादोदकं यानि भजन्ति नित्यमिति

(१०६) गृहव्रतानां गृहसुखसाधनप्राप्ति पराणां कृष्णे सच्चिदानन्दे प्रीति र्नाभिपद्यते । प्राचीनेन संस्कारेण केषाञ्चित् पुरुषोत्तमानां स्वतो भवति । यथोद्धवादीनां जाता ।

यः पञ्चहायनो मात्रा प्रातराशाय याचितः ।
तन्नैच्छद् रचयन्यस्य सपर्यां बाललीलयेति—उक्तत्वात्

यत्तु क्वचिद् बहुश उपदेशे क्रियमाणेऽपि न जनो बुध्यते तत्र तस्य पृथग्जनतैव हेतुः। यथोक्तं शिशुपालवधकाव्ये विविनक्ति न बुद्धिदुर्विधः स्वयमेव स्वहितम्पृथग्जनः । यदुदीरितमप्यदः परै र्न विजानाति तदद्भुतम् महदिति ॥ पृथग्जनत्वे मूलन्तु विमुखाना मन्तर्यामितया स्वसन्निहितेऽपि भगवति तद्भजने येन पापोदयेन तेषां रुचि र्न जायते तेनैव यद् देहात्मबुद्ध्या मलिनचेतस्त्वम् तथा च सांख्यसूत्रम्-

न मलिनचेतस्युपदेशबीजप्ररोहोऽजवदिति १०७।

---

पुरुषमध्यमानां तु परतः श्रीगुरोरुपदेशात । यथा भरतादीनामृषभदेवाद्युपदेशात । पुरुषकनिष्ठानां मिथः स्त्रीपुरुषादि व्यवहारवतामपि । ऐल ययाति प्रभृतीनां यथा जाता । पुरुषाधमानां स्त्रीपुत्रधनपराणां तु स्वतो मतिः कृष्णे नाभिपद्येत । वैराग्याऽभावात । न परतः असंभावना विपरीतभावनाभ्याम् । न मिथः पुत्रस्त्री देहादि मोहात । कथंभूतानाम् । अदान्तैरस्वाधीनै रिन्द्रियै र्निमित्तभूतै र्यमदूतै स्तमिस्त्रन्नरकं विशताम् । पुनः कथंभूतानाम् । पुनः पुनश्चर्वितस्यैव चर्वणं भुक्तभोगस्यैव भोग्यं येषाम् अहो उच्छिष्टभोजिनामित्यर्थः ॥

(१०७) यथा असंस्कृते क्षेत्रे न बीजप्ररोहः तथा रागादि दूषिते मलिने चेतसि नोपदेशबीजप्ररोहः । अजवदिति । अजनाम्नि नृपे भार्याशोकार्त्ते यथा वशिष्ठेनोपदेशो दत्तो न स्थि

यथोक्तं श्रीमद्भागवते-

यत्सानुबन्धे ऽसति देह गेहे
ममाहमित्यूढदुराग्रहाणाम् ।
पुंसां सुदूरे वसतो ऽपि पुर्यां
भजेम तत्ते भगवन् पदाम्बुज-

मिति ॥ (१०८) श्रुतिश्च भवति-

पराञ्चि खानि व्यतृणत् स्वयम्भू-
स्तस्मात् पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्ष
दावृतचक्षुस्तमसः परस्तादिति ।

भगवदनर्पितमपि धर्मकर्म कयाचिद्विधया भगवदाज्ञापालनादि रूपया ) भजनात्मक मेवेति

---

रीबभूवेति । रघुवंश काव्येऽष्टमसर्गे पञ्चसप्ततितमात श्लोकादारभ्य यावत् समाप्तिं द्रष्टव्यः ।

(१०८) पुंसां जीवानां पुर्यामन्तः करणे वसतोऽपि तव यत्पदाब्जं सुदूरमतिदूरन्दुष्प्रापमित्यर्थः हे भगवंस्ते तत्पदद्वयम्भजेम । कथंभूतानाम् । असति देहगेहे मदीयमिदं गेहं मदीयोऽयं देह इति तयो रूढो दुराग्रहो येषाम् । कथंभूते देह गेहे । सानुबन्धे सोपकरणे । अतस्तेषां सन्निहितोऽपि भगवाननतिदूरः । यथा भाग्यविहीनानामन्धबधिराणां गृहे स्थितोऽपि चिन्तामणिर्दूर एव । तेन देहगेहावेशेन कृष्णविमुखानां भयं भवतीति ॥

पूर्वमुक्तम् । तादृशमपि भजनमन्तरेणानुष्ठीयमानो धर्मोऽस्यानुष्ठातु र्न सम्यक् पावनः । यथोक्तं श्रीमद्भागवते ।

धर्मः सत्यदयोपेतो विद्या वा तपसान्विना ।
मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनातिहि
(१०९) इति ।

देवानां शुद्धसत्वानां मुनीना म ऽमलात्मनाम् ।
भक्तिर्मुकुन्द चरणे न प्रायेणोपजायत इति तु भक्तियोगानात्मक वर्णाश्रमधर्मकर्मात्मना भजनेन चित्तशुद्धि परम् । भक्तिश्च भक्तियोगः प्रायेणेतिवचनान्न सर्वथा न जायते इति श्लिष्यति सत्कर्मभि श्चित्तशोधनबोधकवाक्यानामन्यथाऽनुपपत्तेः ।

ननु य एवायमसौ श्रीरामो भगवान् भक्तैर्भजनीयः । स एवाश्वमेधवाजपेयपौण्डरीकाग्निष्टोमादि धर्मान् पुराऽनुतष्ठौ । तदनुष्ठाने त-

---

(१०९) कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाशय इति ।
अतो वै कवयो नित्यं भक्तिं परमया मुदा ।
वासुदेवे भगवति कुर्वन्त्यात्म प्रसादिनी मिति ।

स्याधिकफललाभो नास्तिपूर्ण कामत्वात् । तदन-नुष्ठाने च न काचित्तस्य हानिः । एव मपि स य-दा लोकमर्यादापालनशिक्षार्थं वर्णाश्रमधर्मकर्मा ण्यकार्षीत् तदा भगवद्भक्तेन तानि त्याज्यानीति रिक्तं वचः । गीतायां चोक्तम् ।

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषत इति । लोकसंग्रहमेवापि संपश्यन् कर्त्तुमर्हसीति चेति-चेन्न । भक्तियोगनिष्ठानां भक्तानां वर्णाश्रमध-र्मकर्मत्यागोत्तरं ततः प्राप्तप्रत्यवायस्य परिक्षाल-नार्थं पूर्वमेव श्रीरामस्तथा कर्माण्यन्वष्ठात् । न तु स्वार्थ स्तस्य तत्र कश्चनेति ॥ जातेष्टि प्रभृति कर्मादिकर्मणां पित्रादिकृतानां पुत्रादिगामिफल समवायोपलम्भाच्च न कर्मफलभोगवैयधिकर-ण्यन्दोषः परिचोद्यः । अयंभावः । देवर्षिभूता-त्मनृणामित्यादि पद्योक्तार्थप्रमाणयबलादुत्तमर्णे-भ्यो देवर्षिनृपितृभ्योऽधमर्णानां स्वाश्रितानां प्रागेव भीतिनिवृत्तिकामः स्वानुष्ठितधर्म-लेशं देवादिभ्यो दत्त्वा तदृणेभ्यः श्रीरामः स्वाश्रितान् भक्तान् मोचयामास । अन्यथा उत्तम-र्णेभ्यो देवादिभ्यऋण निर्यातनमऽकृत्वैवमेव कथ मपि तदृणमोचने वर्णाश्रमधर्मकर्मत्यागानुमतौ

चाधमर्णानां भजताम् भगवता बलादिव देवादीनां पक्षे अन्याय एव कृतः स्याद् भक्तानां पक्षपातश्च । तच्च वैषम्यम्प्रभुत्वदूषणन्न तु तत्तस्य भूषणम्भवितुमर्हति आनृशंस्येतरत्वात् । ऋणाऽनिर्यातने तु भक्तानां वर्णाश्रमधर्मकर्मभि र्गलग्रहे अपरिहार्यै भक्तियोगे विक्षेपोऽप्यवर्ज्य एवाऽऽपद्येतेति । किंच-स्वाचरितानि भगवतेऽनर्पयतामपि भगवदाज्ञापालनरूपेण भजतां वर्णाश्रमधर्मकर्मानुष्ठानात् ऋणां देशकालावस्थादि वैगुण्याद् येन केनापि वा साधारणहेतुना स्नानसंध्यावन्दनब्रह्मयज्ञवैश्वदेवादीनां वर्णाश्रमधर्मकर्मणां लोपाद्भगवता स्वानुष्ठित धर्मलेशैः पूरयित्वा स्वाश्रितान् रक्षतीति भगवतो यागाद्यनुष्ठानन्न वृथेति । एतन्न्यायमूलकमेव धर्मकर्मणां समाप्तौ तत्साङ्गता सिद्ध्यर्थं भगवत् स्मरणादिक मनुशिष्टं धर्मशास्त्रेषु । यथा ।

प्रमादात् कुर्वतां कर्म प्रच्यवेता ऽध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति ।
मन्त्रत स्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ।

सर्वं करोति निश्छिद्रं नामसंकीर्त्तनं तवेति(११०)। कर्मानुष्ठातुः प्रच्युतकर्मांशानां श्रीरामकृतकर्म भि स्तदौदार्य स्मरणानुसंधानादिना प्रपूरणात्। (१११) श्रीरामस्य ह्येतद् गुणानुसंधानस्य कथा-

---

(११०) मन्त्रतः स्वरभ्रंशादिना। तन्त्रतो व्युत्क्रमादिना। देशतः कीकटादिना। कालतः वसन्ताद्यऽभावरूपात्। अर्हव-स्तुतः अदक्षिणादिनेति। अपरञ्च-

मन्त्रहीनं क्रियाहीनं यत्कृतं पूजनं हरे।
परिपूर्णं भवेत् सर्वं तव नाम्नः सुकीर्त्तनादिति।
विधिहीनाऽपि श्रेष्ठा पूजा श्रीकमलापतेः।
यः कुर्याद् भक्तिभावेन सोऽपि स्यात् केशवप्रिय इति।
मूर्खो वदति विष्णाय विद्वो वदति विष्णवे।
द्वयोरपि समं पुण्यं भावग्राही जनार्दन इति।

भजनात्मककाम्यादिकर्मसु तु यथेन्द्रशत्रुः स्वरतोऽपराधादिति श्रुत्युक्तदोषावकाशोऽस्त एवेति निर्णयः।

(१११) श्रीरामस्यौदार्ये प्रमाणं यथा भगवद् गुण दर्पणे-
दित्साकुलमना रामः कीर्त्त्याऽऽकृष्टसदन्तरः।
सर्वाञ्जीवान् भवाम्भोधे स्तारयेयमिति प्रभुः।
चिन्तयन्नवतारस्य कार्यं तस्थौ महीतले॥
ततो वेदैः पुराणैश्च सेतिहासैः सहेश्वरैः।
आगत्य याचितो रामः पूर्वां वार्त्तां रिरक्षुभिः।
धर्माऽधर्मादि वैयर्थ्यं कर्त्तुं ते नोचितं प्रभो।
सनातनीं च मर्यादां स्वकृतां रक्ष राघव।

चिद्विधया तदुपासनात्मकस्य स्वभजनप्रयोजकेषु भगवद्वचनेषु महाविश्वासलाभस्ततो ऽत्यर्थप्रिय-भगवद्भजनादौ प्रवृत्ति स्ततो ऽनर्थनिवृत्तिश्च फ-लम् । न केवलं श्रीरामचन्द्रकृतकर्मभिरेव अपि तु जीवन्मुक्तजनकृत यथा स्ववर्णाश्रमधर्मानुष्ठा-नैरपि भक्तियोगप्रसक्तभक्तजनकृत यथायथनित्य नैमित्तिककर्मत्यागात्मकत्रुटिप्रसूतप्रत्यवायप्रक्षा लनमपि स्मर्यते वायुपुराणीये माघमाहात्म्ये । यथा । द्वितीये ऽध्याये–

कथानिमित्तं यदि कर्मलोपो
भवेज्जने भागवते नृलोके ।
स कर्म लोपो न भवेन् मदीये
जने विचार्यैव मनिन्द्यकर्मा ।

अस्मिन् पद्ये स्यादितिशेषः । कथेत्युपलक्षणं न-वधा भजनलक्षणस्य भक्तियोगस्येति । भक्तियोग प्रसक्ते ज्ञानपूर्वकं यदि निन्द्यं कर्म कुर्वीत तर्हि स्ववर्णाश्रमधर्मत्यागप्रत्यवायं प्राप्नुयादेवेति भावः । ननु जीवन्मुक्तास्तु आत्मारामाश्च मुनय इत्यादि वचनानुसारेण शुकनारदादिवद हैतुकीं भक्तिमेव कुर्युः । कुतस्तेषां धर्मानुष्ठानप्रसक्ति-रिति । एवं पृष्टे व्यवस्थया विवेक इति ब्रूमः । तथाहि–भक्तियोगप्राधान्याप्राधान्ये तत्र हेतुः ।

ये जीवन् मुक्ता भक्तियोगप्रधानास्ते भजनमेव कुर्वते; ये तु भक्तिं गौणीकृत्य यथास्ववर्णधर्मानुष्ठानं प्रधानं मन्वानास्तद्वितन्वाना आत्मज्ञानिनो जीवन् मुक्ता स्तान् प्रति तदनुष्ठाने ब्रह्मा ऽनुशासनञ्चोक्तं तत्रैव वायुपुराणे माघमाहात्म्ये । यथा-

कोटीस्तु तिस्रः कृपया मुनीनां
समादिदेशात्मभवोद्भवानाम् ।
यूयं मदीयस्य जनस्य कर्म
कृत्वानिशं पूरयताशु कल्पम् ।

इत्यादिष्टा भगवता ऋषयः संशितव्रताः ।
सदाविष्णुकथा ऽसक्तचेतसां भावितात्मनाम् ।
कर्मलोपं पूरयन्ति कृत्वा कृत्वाप्यहर्निशमिति ॥

आत्मभव उद्भवानामितिच्छेदः । सन्धिरार्षः । उद्भवानां पुत्राणामित्यर्थः । ये तु भक्तियोगगन्धशून्याः सन्तो मुक्त्यर्थं प्रयतन्ते ते जीवन्मुक्तिपुष्कलकर्मभिर्जीवन् मुक्त्यधिकारिणोऽपि तान्न लभन्ते । यथोक्तम्-

जीवन् मुक्ता अपि पुनर्बन्धनं यान्ति कर्मभिः ।
यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिन इति ।

जीवन् मुक्ता इत्यत्र शैघ्र्यविवक्षया भविष्यति

भूतवदुपचारः । यदि भक्तियोगेन सह तादृशानि कर्माण्यनवष्ठास्यं स्तर्हि जीवन्मुक्ता अभविष्यन्निति भावः । पुनरितिवाक्यालङ्कारे । भगवत्यपराधिन इति भक्तियोगत्यागात्मकोऽपराधो ज्ञेयः । कर्मभिरिति भक्तियोगगन्धशून्यैः कर्मभिरित्यर्थः ।

अन्येषां भगवद्भजनं करिष्यमाणानां कर्मत्यागप्रत्यवायनिवृत्त्यर्थमेव च ।

यस्त्वात्मरतिरेव स्या दात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यन्न विद्यत इत्युक्तेः

सकृद् भजनेन कृतार्थानामपि भजमानानां भक्तानां यावज्जीवनं भगवद्भजनानुशासनं शाण्डिल्यसूत्रे समुपसंहृतम् । यथा-भूयसामननुष्ठितिरिति चेदाप्रयाणमुपसंहारान् महत् स्वपीति (११२)

---

नैर्घृण्यं विषमत्वं च रागद्वेषाभिधे उभे ।
न स्यातां ते यथा कुर्यास्तथा देवेति राघव ।
तव भक्ति प्रपत्तिभ्यां ये ये सेत्स्यन्ति राघव ।
कृतार्थी कुरु तांस्तांश्च लीला नैवं विनश्यति इति ॥

(११२) सांकेत्यं परिहास्यं वा स्तोभं हेलन मेव वा ।
वैकुण्ठनामग्रहणमशेषा ऽघहरं विदुः-

इत्यादि वचनानां प्रामाणिकत्वेदुश्चराणां प्रायश्चित्तानां स्मृत्यन्तरेष्वाम्नातानामननुष्ठानलक्षणमप्रामाण्यमिति चेन्न । तेषा

न तादृशं महाभाग पापं लोकेषु विद्यते ।
यादृशं धरणी नाथ हरिनाम्ना न दह्यते ॥
इत्यादिवचनजातात् (११३) ।

सकृदेव भगवन्नामोच्चारणात् सकलपापध्वंस-संवलितामुक्तिरिति निश्चिते पुनर्यावज्जीवनं भजनोपसंहारक आशयः शास्त्रस्येति जिज्ञासायां परोपकृति रेव तेन क्रियत इति तत् तात्पर्यम् अन्यथा अन्येषामुपकारोपेक्षायां देवपितृगुर्वादि

---

नामरणमुपसंहारस्मरणात् क्लेशाधिक्यात् । यथा विष्णु पुराणे—

तस्मादहर्निशं विष्णुं संस्मरन् पुरुषो मुने ।
न याति नरके शुद्धः संक्षीणाखिल कल्मष-

इत्यनेन सातत्योपसंहारादिति । सांकेत्यमित्यादि श्रीमद्भागवतीयपद्ये संकेतस्य भावः सांकेत्यम् पुत्रादीनां नाम्ना भगवन्नामोच्चारणम् । परिहास्यं छलतो नाम ग्रहणम् । स्तोभमनादरपूर्वकम् । गानादिषु अनुबन्ध सातत्य साधनं वा । हेलन मवज्ञापूर्वकमित्यर्थः । सांकेत्यमित्याद्यर्थवाद एवेति तु न वाच्यम्

अर्थवादं हरे र्नाम्नि संभावयति यो नरः ।
स पापिष्ठो मनुष्याणां निरये पतति स्फुटमिति दोषोक्तेः

(११३) श्वपचोऽपि न शक्नोति कर्त्तुं पापानि यत्नतः ।
तावन्ति यावती शक्तिर्विष्णु नाम्नोऽशुभक्षये ॥
मुक्तेर्हेतुद्वयं तात हरिश्च हरिनाम च ।
हरिस्तु भक्तिं वाञ्छेत हरिनाम न किञ्चन-

इत्यादि प्रमाणानि अत्र आदिपदसंग्राह्याणीति ।

ऋणानपायात् कृतघ्नतादोषापातान्नरकप्राप्तिरेव पर्यवस्येत् । यस्त्वात्मरतिरेवेत्यादि पद्ये आत्मरतिरात्मक्रीड इत्यादि श्रुत्युक्तो भगवद्भक्त एवात्मरतिशब्देन विवक्षितः । आत्मा हि विष्णुः । भक्तियोगेन भजमानैस्त्यक्तेऽपि वर्णाश्रमधर्मकर्मणि भगवत् तद्भक्तजनकृतसुकृतौघैस्तृप्यन्तश्च देवपित्रादयो भक्तियोगन्नैव विघ्नन्ति । ततोऽन्यत्र प्रत्यवायिनान्तु ते व्याहन्युरेव । तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवत्यथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानां यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेव मेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियम्भवति किमु बहुषु तस्मादेषान्तन्न प्रियं यदेतन्मनुष्या विदुरितिश्रुतेः । अत एव च बालयतीनां शालावृकेभ्यो दानमिन्द्रकर्तृकमाम्नायते कौशीतकी श्रुतौ प्राप्त मोक्षपदजनकृतभजनस्यर्ण निर्यातनरूपेणान्यदीयहितसाधनत्वे प्रमाणं च—कृष्णः कृष्णः कृष्ण इत्यन्तकाले जलपञ्जन्तु जीवितं यो

जहाति। एकः कृष्णः कल्पते तत्र मुक्त्यै क्रीडा-नस्रौतिष्ठतोऽन्यावृणस्थावित्यादि वचनमनुसन्धे-यम्। यथोत्तमर्णे पित्रादौ मृते तद्दायादेभ्योदत्त्वा ऽधमर्णा ऋणं निर्यातयन्ति तद्वद् भगवान् भक्त-जनबन्धुभ्यो ऽदो निर्यातयतीत्याशयः। सकृद्भज-नेन कृतार्थो जनो यदि शेषायुषा भजनमेव न कुर्यान्न च क्वचिल्लौकिकवैदिक व्यापारे व्याप्रि-येत तर्हि नहि कश्चित् क्षणमपि जातु तिष्ठत्य-कर्मकृदिति भगवदुक्तेः कायेन मनसा वाचा च बलात् शश्वत्पापमेव कर्म कुर्यात्। तथा सति प्रत्यवायात्मकेन तेन कर्मणा लिप्तः पतेदेव भज-नादि कुर्वतस्तु न तत्। स्वयं कृतार्थोऽपि परार्थं कर्म कुर्वन् स सर्वथा कृती एवेति निर्हेतुवादः सिद्धान्तः।

ननु उत्तमर्णेभ्य ऋणनिर्यातने जाते सति भज-मानस्यजनस्य भवभयमोचने कृते भगवती न्याय-परतैव निष्पद्येत, का तत्र प्रभुतावार्त्तेति चेन्न। साधनान्तरसापेक्षत्वनिरपेक्षत्वाभ्यां मिश्रशुद्ध-भजनभेदेनापि मुक्तिदानव्यसनिनो नारायणस्य फलव्यतिभेदव्यतिकरात्। साधनान्तरसापेक्षा-श्चिरं भजने प्रयतमाना अपि हि केचित् क्वचि-

न्न मुच्यन्ते ऽन्ये तु तन्निरपेक्षा एव अनायासा-न्नामोच्चारणमात्रेण मुच्यन्त इति भगवदौदार्या-विष्कारकारिणी प्रस्तुतैव तत्र तन्त्रमिति ।

पञ्चभूतेषु स्थूलेभ्यः सूक्ष्माणां तत्त्वानां बलव-त्त्वमिव भगवदभिन्नेभ्योऽपि भगवद्रूपादिभ्यः स्थूलेभ्यः सूक्ष्मस्य शब्दात्मकस्य ।

नाम चिन्तामणिः कृष्णश्चैतन्यरस विग्रहः ।
पूर्णः शुद्धो नित्यमुक्तो ऽभिन्नत्वान्नामनामिनो-रित्युक्तेः तादात्म्येन भगवदभिन्नस्य भगवन्नाम्नो जनतारणे पुष्कला शक्तिश्च न दुरुपपादा । नाम-चिन्तामणिरित्यत्र नामैव चिन्तामणि रिति विग्रहादभेद एव । (क) ।

---

(क) वर्णतयैव नित्यत्वमस्य वेदसारवर्णात्मकनाम्नः सिध्यति । भगवत् स्वरूपमेव नाम स्पष्टं चोक्तं गोपालतापन्या-मष्टादशाक्षरमन्त्रप्रसङ्गे ब्रह्मवाक्येन—

तेऽष्वक्षरेषु भविष्यज्ज् जगद् रूपं प्रकाशय इति ।

अवरकालजातशब्दादिमय जगत्कारणत्वेन तद्वै लक्षयति ।
स्वतः सिद्धनारदपञ्चरात्रे चाष्टाक्षरमुद्दिश्योक्तम्—

व्यक्तं हि भगवानेष साक्षान्नारायणः स्वयम् ।
अष्टाक्षरस्वरूपेण मुखेषु परिवर्त्तत इति ॥

अवतारान्तरवद्भगवन्नाम्नो भगवद् भेद इति भावः । परमेश्वर-स्यैव वर्णरूपेणावतारोऽयमित्यस्मिन्नर्थे तेनैव श्रुतिबलेनाङ्गी-

भगवन्नाम्न औदार्यं च भगवद्रूपाद्यौदार्यादप्यु-
दग्रं विदितम् । सर्वजीवतारणसन्नहने श्रीराम-
स्य देवादि प्रार्थनैर्विरतेः । प्रागुक्तत्वात् । श्री-
रामनाम्नस्तु कथमपि मुक्तिदानात् क्वाप्यविर-
तेरिति सुधीभिः साधु साधनीयं भगवन्नामबल
शंबलम्भवप्रस्थान मार्गे इति । केचित्तु भगवतो
भक्तपक्षपातमपि प्रभुत्वख्यापकमाहुः । यथा
बालिनि कृतघ्नस्य सुग्रीवस्य स्ववंशकूटस्थसूर्य-
सम्बन्धाद्विभीषणस्य च रावणे तादृशस्य ( कृत-
घ्नस्य)स्वचरणं शरणमागत्य दैन्यक्रन्दनात् तयो
राघवस्य पक्षपातः । श्रीकृष्णस्य च सत्यभामायाः
प्रियात्वात् पारिजात हरणमुपपादयन्ति च
भागवता भगवतो भक्तवात्सल्येनेति सर्वं चतु-
रस्रम् यथा व्यालादीन् छलेनापि व्यापाद्य स्व-
पुत्रादीन् परिरक्षतामाप्तानान्न दोष उद्घोष्यते
तद्वदिति । अत्राशङ्कन्ते-नन्वसमर्थाः पित्रादय-
स्तथा कुर्युर्न पुनः सर्वशक्तिमान् भगवानिति ।
नैषदोषः । कार्यत्वावच्छेदकावच्छिन्नकार्यमा-
त्रस्य कारणत्वावच्छेदकावच्छिन्नकारणत्वेन प-

---

क्रियते । तदभेदेन तत्संभवात् । तस्मान्नामनामिनोरभेद एवेति
विवेचनं चात्र नाऽप्रा सङ्गिकमिति ।

रिसमाप्यमाना कार्यजनिका शक्तिरेव सामर्थ्यम् । नान्यत् । तथा च यत्कार्यमेवालीकमाकाशकुसुमादि तज्जननासमर्थस्य परमेश्वरस्य न सर्वसमर्थत्वव्याघातः । अन्यथात्मान्येश्वरनिर्माणस्वविनाशाद्यसामर्थ्यादपि भगवतो भगवत्वक्षति र्युष्मान् प्रतिपर्यनुयुक्ता भवेत् । न च तादृशसामर्थ्यसत्त्वस्वीकारेऽपि यतः कुतश्चित्तदकरणेनेष्टापत्तिः । वदतो व्याघातात् । सृज्यो नाश्यश्चेश्वरश्चेति तत्र महत्या विप्रतिपत्तेः । ईश्वरस्यामोघशक्तित्वात्तच्छक्तिस्स्वकार्यं मारभेतैवचेति विनश्वरेश्वरत्वानेकेश्वरत्वयोः प्रसङ्गः । पक्षपातमन्तरेणानन्यगतेः पापिनः पापात् परित्राणसमाधानस्य भक्तपक्षपातीप्रभुरिति सिद्धम् । नन्वेवं गतानुगतिको लोक इति न्यायेन सर्व एव पक्षपाती प्रभुर्निर्दूषणः स्यादिति चेन्न । रागद्वेषाभ्यां वैषम्यात् तस्य । भगवान्न हि रागद्वेषाभ्यां प्रवर्त्तते क्वचित् निवर्त्तते वा कुतश्चित् किन्तु कारुण्येनैव । ननुभक्तवात्सल्यमीश्वरस्यापि राग एवेति चेन्न । मृषोद्यत्वात्त्वदुक्तेः । स्वार्थसम्बन्धगन्धेनैव रागद्वेषयो र्दोषावहत्त्वात् । न तु विशुद्धसत्त्वसंभूतस्य भक्त-

वात्सल्यस्य भगवतस्तथात्वम् । आप्तकामस्य का स्पृहेत्युक्तेः उक्तं हि स्वप्नेश्वरेण—तस्माद् दृष्टतया रोषतोषाभ्यां परमेशितुः। हिताहितफल प्राप्तिः फलोद्देश्यगता भवेदिति । एतेन अश्व-त्थामा हतो नरो वा कुञ्जरो वेत्यादिना युधि-ष्ठिरादिभि र्मिथ्या भाषणादिकारित्वं पुनस्तद्द-ण्डविधायित्वादिकं दूषणजातं समाहितं वेदि-तव्यम् । निरङ्कुशप्रभुत्वादभक्तवात्सल्याद्यादयथा भिप्रेतं विवेकिना भगवता तदाचरणात् । इतर-थाशरणागतरक्षणोपेक्षणे भक्तपक्षो यदिव्यापत्स्य तर्हिस्त्यजत्यपि श्रीपतिरङ्घ्रिमाश्रितं हरेतवा-ख्यातिरियं भविष्यतीत्युक्त्यनुसारेण भगवतः कलङ्क उत दुरपोह आपत्स्यतेति न स्मर्त्तव्यम्। ननु मैवास्त्वीश्वरस्तादृशः कृष्णरामादिः कि-न्तुजीवविशेष एव स इति चेन्न । तत्र तत्त्वे शास्त्रप्रामाण्यात् । न च तथा विधेश्वरप्रतिपा-दकस्य शास्त्रस्याशास्त्रत्वमेव साधिवति वक्तव्यम्। तद्विहितानुष्ठानेन जीवद्भिरेव साक्षाद् दृष्टादृष्ट फललाभदर्शनात् तच्छास्त्रमाप्तवाक्यमेव ।अन्येषां च प्रस्थानानां हिंसादि दोषदर्शनान्न तथात्वम्११४

( ११४ ) ननु वेदेऽपि बलिपशुहिंसाया धर्मत्वव्यवस्थेति चेन्न

बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः ।
अजसंज्ञानि बीजानि छागं नो हन्तु मर्हथे-

त्यादिना महाभारते शान्तिपर्वणि ऋषिभिरहिंसाया एव धर्मत्वस्थापनात् । तथा च श्रुतिः-तस्मादेष एतेषां पशूनां प्रयुक्ततमो यदजस्तेऽजमालभन्त । सोऽजादालब्धादुदक्रामत्स इमां प्राविशत्तस्मादियं मेध्याभवत्तमस्यामन्ववायन् । सोऽनुगतो व्रीहिरभवदिति । यज्ञो मेधताख्यः । इमां पृथिवीं प्रविष्टः । अन्ववायन् अन्वेषितवन्त इति । मुग्धा देवा उतशुना यजन्तो त गोरङ्गैः पुरुधायजन्त । य इमं यज्ञं मनसा चिकेत प्रणोवोचस्तमिहेह ब्रव इत्याथर्वणी च श्रुतिः । कृष्णयजुर्वेदे हिंसाबाहुल्येन अश्वमेधनिन्दाश्रुतिश्चात्र द्रष्टव्या तथा हि पर्यग्निकृतं पुरुषं चारण्यांश्चोत् सृजन्त्यहिंसायै । आवा एष पशुभ्यो वृश्च्यते योऽश्वमेधेन यजते । पर्यग्निकृतमुत्सृजन्त्यनवस्कायेति अत्र सायणभाष्यम्-अश्वमेधयाजी बहुपशुमारणात् पशुभ्यो विच्छिद्यते । तत्परिहाराय पर्यग्निकरणानन्तरमुत् सृजेत । अनवस्कायअविच्छेदायेत्यर्थ इति । सार्वभौमिकीमहिंसां धर्मत्वेनाभिप्रेत्यैव श्रीमद्भागवते पशुघ्न उपालभ्यते । यथा-

निवृत्ततर्षैरुपगीयमानाद् भवौषधाच्छ्रोत्र मनोऽभिरामात् ।
क उत्तमश्लोकगुणानुवादात् पुमान् विरज्येत विना पशुघ्नादिति

ननु वेदादिशास्त्रेषु प्रत्यक्षादि प्रमाणविरुद्धघटनानामुल्लेखैस्तद प्रमाणिकत्वतादवस्थ्यमितिचेन्न । प्रामाणिकविचित्रघटनानां मायाकृतत्वान् ना प्रामाणिकत्वमेव । क्वचित्तु अप्रमाणिकत्वेऽप्यर्थ वादत्वेनैव निर्वाहः । भिन्न भिन्न रुचिकशिष्य रुचिपोषानुकूलया तादृशशैलया शास्त्रवाचोयुक्तय इति न दोषः कश्चित ॥

अवैदिकानां बौद्धादीनामहिंसाधर्मेऽभिमतेऽपि तेषां क्षणिकसत्त्वादि वादानान्नैयायिकादिभिः प्रागेव तत्र तत्र खण्डनात् । स्यादेतत् । तादृश-तच्छास्त्रप्रतिपाद्ये श्रीकृष्णे अनियतचित्तव्यव-स्थे कास्थास्थेया । प्रेक्षावद्भिः शरणागतपरि-त्राणम्प्रतिज्ञायापि हि तेन विष्णुना अम्बरीषं शप्तवतो दुर्वाससो भक्तापराद्धस्य शरणागत-स्यापि अहो अपरित्राणात् । भारतयुद्धे शस्त्रन्न ग्रहीष्यामीति प्रतिश्रुत्यापि भीष्माय पुनः शस्त्र-ग्रहणाच्चेति चेन्न । दुर्वाससादौ तु भक्तापराधा-मर्षो हेतुः । न तेन प्रतिज्ञाभङ्गः ।

अहं भक्त पराधीनो ह्यस्वतन्त्र इव द्विज ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रिय इति (११५) ।

---

(११५) हे द्विजेत्यनादरे संबोधनम् । तस्य अयं भावः । विद्याध्ययनतात्पर्याभावेन भक्तापराधान्न भक्तोऽसि । तथा मम भक्ताधीनत्वमज्ञात्वा मल्लोकागमनान्न ब्राह्मणस्त्वं केवलं द्विजोऽसीति । अहन्तु भक्तपराधीनः । मद्भक्ता एव पराउत्कृष्टाः सेवनीया येषान्तें भक्तपरास्तेषामधीनस्तव रक्षणे न समर्थः तेषामादेशाभावादितिभावः । भक्त परत्वे स्वयमेव स्वं दृष्टा-न्तीकृत्याह । यथा—

निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शिनम् ।
अनुव्रजाम्यहं नित्यं पूये येत्यङ्घ्रिरेणुभि रिति ।

स्वान्तःस्थ ब्रह्माण्डपावनमेव अत्रस्वस्य पवनं वेदितव्यम् । ननु मम रक्षणे स्वधाम्नो वैकुण्ठस्य माहात्म्यरक्षणरूपो लाभस्तेस्यात् तस्मान् मे रक्षणं कुर्विति चेत्तत्राह । कीदृशोऽहम् । अस्वतन्त्र इव । तदनुरागे आत्मविक्रयित्वात् । ननु ततः पलायनं कृत्वा स्वाधीनः सन् मे रक्षणं कुर्विति चेत्तत्राह । साधुभिर्भक्तैर्ग्रस्तहृदयः देहादिभिः परोपकारप्रियैर्मद्भक्तैर्ग्रस्तं हृदयं यस्य सोऽहम् बन्धनच्छेदनेऽप्यसमर्थः । बहिर्बन्धनाभावात । ननु त्वमपि दुःख ग्रस्तोऽसि । पराधीनत्वाद् बन्धनस्य दुःखाकरत्वाच्चेति चेत्तत्राह । कीदृशोऽहम् । भक्तजनप्रियः । भक्तजना मे बन्धनोपाय विज्ञाः प्रिया यस्य सः । तस्माद् बन्धनाभावे उत मे दुःखानुभवः स्याद् बन्धने तु परमानन्दः । स्वस्य तद्व्यसनत्वात् ननु ते दया कुत्रस्थिता । तेन हृदासह ग्रस्तेति भावः । अतएवोक्तमभियुक्तैः—अतः श्रीशपदाम्भोज समर्पितमनोधियः । वयमेते निरातङ्का नृत्यामो मधुपा इवेति । अजित जितः सममतिभिः साधुभिर्भवान् जितात्मभिर्भवता । विजितास्तेऽपि च भजतामकामात्मनां य आत्मदोऽतिकरुण इति चात्रानुसन्धेयम् अस्य अजितेत्यादि श्लोकस्यार्थो यथा—हे अजित अन्यैरजितोऽपि भवान् साधुभिर्भक्तैर्जितः स्वाधीन एव कृतः । यतो भवानतिकरुणः । तेऽपि च निष्कामा अपि भवतापि जिताः यो भवानकामात्मनोमात्मानमपि ददातीति ।

हरिभक्ति सुधोदये प्रह्लादं प्रति श्रीमुखवाक्यम्—

सदा मुक्तोऽपि बद्धोऽस्मि भक्तेषु स्नेहरज्जुभिः ।
अजितोऽपि जितोऽहं तैरवशोऽपि वशीकृत इति ।

ब्रह्मणाप्युक्तम्—

ज्ञानेप्रयासमुदपास्य नमन्त एव जीवन्ति सन्मुखरितां भवदीय वार्त्ताम् । स्थाने स्थिताः श्रतिगतां तनुवाङ्मनोभि र्यें प्रायशो

श्रीमुखेनैवोद्गीतेः। न हि पराधीनस्यास्वतन्त्रस्येव सतः स्वातन्त्र्येण प्रतिज्ञाहानिः साऽदोषः स्वतन्त्रस्यैव प्रतिज्ञाहानेर्दोषात् । भीष्मे तु भक्तेभ्यो जगति गौरवदानसंकल्प एव प्रतिज्ञाहानिहेतुः। यथा स्वयमुपदेशदानेऽपि युधिष्ठिरस्याज्ञानापहारे भीष्मोपदेशादेव तद्व्यापगमे भीष्मायादरदानसंकल्पो हेतुः। उक्तं ह्यभियुक्तैः स्वशिष्यस्य च भीष्मस्य साहाय्यमानदानार्थं युद्धं मोहं पराजयं च स्वीकृतवानिति अन्यथा त्वनोश्वरापत्तेः । तदुक्तं हरिवंशे—

---

ऽजित जितोऽप्यसितैस्त्रिलोक्यामिति। अस्य ज्ञाने प्रयासमित्यादि पद्यस्यार्थः। यथा—ज्ञाने प्रयासं ज्ञानार्जनार्थं श्रमं त्यक्त्वा भवदीयवार्त्तां तनुवाङ्मनोभिर्नमन्त एव सत्कुर्वन्त एव ये जीवन्ति सत्काराभावे तज्जीवनाभाव इति भावः। तन्वा तु त्वत्कथा पुस्तकस्य त्वत्स्थानस्य त्वत्कथावक्तुश्च परिचर्यया गिरा त्वत्कथावक्तुः कथाऽनुमोदनेन। मनसा त्वत्कथार्थानां मननेन। एवं सत्कुर्वन्त एव जीवन्तीत्यनेन श्रवणलक्षणमप्युक्तं भवति। कीदृशीं वार्त्ताम्। सन्मुखरितां सद्भिः कथितामनेन सन्मुखरितैव कथा तादृशफलदा भवति नान्येत्यपि सुमतं भवति। कथंभूता ये स्थाने स्थिताः तीर्थादि पर्यटनक्लेश रहिताः । पुनः श्रुतिगतां स्वेच्छयैवागतैर्भागवतैः कथितामेतादृशीं वार्त्तां सत्कुर्वन्तो ये जीवन्ति हे अजित त्रिलोक्यां त्वमजितोऽपि तैर्जितोऽसि। ते त्वां वशे कुर्वन्तीत्यर्थः ॥

नूनमात्मेच्छया ब्रह्मन् कृतवान् हरिरीश्वरः ।
को हि मोहयितुं शक्तो रणे नारायणं प्रभुमिति ।
न चैतत्काव्यमित्येव वक्तव्यम् । भक्तेः पञ्चमपुरुषार्थत्वात् । सर्वथा अप्रतिज्ञाने तु कथं शरणागतपरित्राणाज्ञाने प्रपत्तौ भक्तप्रवृत्तिर्घटेतेति ना समञ्जसं किञ्चिदिति । एतत्सर्वं च स्पष्टम् महा भारते । तत्रैवद्रष्टव्यम् ।

इत्थं च परमभक्तवत्सले भगवति न कस्यचिद नास्था युक्तेति । अयं चात्रभाव निष्कर्षः । अनेकेश्वरत्वासंभावनाया ईश्वरजन्या सृष्टिरीश्वरा दहीनकक्षैव संप्रसिध्यति । व्यापकत्वाद् व्याप्या नामिति शाण्डिल्यसूत्रमनुसृत्य कारणात् कार्यलघीयस्त्वादपि तत् । न्यायप्रदेशपरिरक्षार्थं जीवानां यथा स्वकर्मफलभोगदानेऽपि भजनस्थले कृपाक्षमादि गुणान् प्रदर्श्य प्रभुत्वख्यापनार्थं भजत्सु जीवेषु वत्सलत्वादीनि अवर्जनीये वात्सल्यादि प्रदर्शनं च भगवतो नानुपपन्नम् । भजतां संकटादि निपातमन्तरेण च वात्सल्यादि प्रकाशानान्यथा नुपपत्तेस्तेषां संकटादिनिपातश्च नान्तरीयकतया सोढव्य एव । अन्यथा । पूर्णानन्देषु तेषु हि तदनवकाशात् ।

एतामेव च दृष्टिमवष्टभ्य श्रीमद्भागवत टीकायां श्रीधरस्वामिनोक्तम्। इदमत्रतत्वम् यद्यपि सनकादीनां क्रोधो न संभवति। न च भगवत् पार्षदयो ब्रह्मणप्रातिकूल्यम्। न च भगवतः स्वभक्तोपेक्षा। न च वैकुण्ठगतानां पुनर्जन्म। तथापि भगवतः सिसृक्षादिवत् कदाचिद्युयुत्सा समजनि। तदान्येषामल्पबलत्वात् स्वपार्षदानां तुल्यबलत्वेऽपि प्रातिपक्ष्यानुपपत्तेरेतावेव ब्राह्मणनिवारणे प्रवर्त्य तेषु च क्रोधमुद्दीप्य तच्छापव्याजेन प्रतिपक्षौ विधाय युद्धकौतुकं संपादनीयमिति भगवतैव व्यवसितमतः सर्वं संगच्छत इति

क्वचिज्जीवकर्मभिरेव क्वचित्तु स्वतन्त्रेच्छस्येश्वरस्य प्रभुताविलासादेव भजत्सु संकटादिनिपात इत्यन्यदेतत्। क्वचित्तु संकटोपनिपातनिवृत्तिरेव नितान्तम्। यथा हनूमति। तथा च बाल्मीकीये–

एकैकस्योपकारस्य प्राणान् दास्यामि ते कपे।
शेषस्येहोपकाराणां भवाम ऋणिनो वयम्।

मदङ्गे जीर्णतां यातु यत्त्वयोपकृतं कपे।
नरः प्रत्युपकाराणामापत्स्वायाति पात्रतामिति

ननु इत्थमपि वैषम्यदोषतादवस्थ्यमेवेति च न वाच्यम्।

लाड़ने ताड़ने मातु र्न वैषम्यं यथार्भके।
तद्वदेव महेशस्य नियन्तु र्गुणदोषयोरिति-

तत्समाधानात्। अथ सर्वस्यैव भोगमात्रस्य भगवतः प्रभुत्वादेव तदुत्थत्व स्वीकारे किं तस्य अर्धजरतीन्यायेन। क्वचित् प्राणिकर्मापेक्षयेति चेन्न। न्यायस्यापि प्रभुत्वकुक्षिम्भरित्वात्। न्यायोचितस्थले न्याय एव हि न्याय्य इति सर्वं चतुरस्रम्। न च भक्तपक्षपातादे र्मोहामायत्वादनुपपद्यमानत्वे ऽप्यनिर्वचनीयत्वात् मिथ्यात्वान्न तत्र ग्रह इति वाच्यम्। मायया मिथ्यात्वे अमोघशक्तेर्भगवतः सत्यसंकल्पत्वश्रुतिविरोधात्। यथोक्तं स्वप्नेश्वरेण-

तन्मायात्वं तु कार्याणां वैचित्र्यान्नाऽनृतत्वतः।
कार्यसत्त्वोपपत्त्यर्थं ब्रह्मसत्ताश्रुतेरिति।

मिथ्यात्वस्यानुपपत्तेश्च तन्मिथ्यात्वन्न सांप्रतमिति यत्तु तस्याः क्वचिदनृतत्वाद्युक्तिर्न सा मिथ्यात्वाभिप्राया अपि तु क्षणभंगुरकार्यत्वलक्ष्येण वैराग्योद्दीपनार्थेति मन्तव्यम्।

ननुभक्तिप्रवृत्तेरुत्तरं वर्णाश्रमधर्मकर्मत्यागे मा-

भूत् प्रत्यवायः। पूर्वार्जितानि कर्माणि तु भक्तैरपि भोक्तव्यान्येव।

नाभुक्तं क्षीयते कर्म कल्पकोटि शतैरपि।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभमित्युक्तेः

एवं सति शुभमशुभं वा कर्मोपभुञ्जानस्य भगवन्तं भजमानस्य भक्षितेऽपि लशुने न गतो व्याधिरिति न्यायापात् इति चेद् अत्रोच्यते-

न कर्मबन्धनं जन्म वैष्णवानां च विद्यत इति।

पाद्मोक्तेः संचितादिकर्मबन्धनं वैष्णवानां न विद्यत एवेति। ननु प्रारब्धकर्मभोगाभावे वैष्णवानामपि प्रियाप्रियस्पर्शः साक्षाद् दृश्यमानः प्रत्यक्षेण। न हि सशरीरस्य सतो वाव प्रियाप्रिययोरपहतिरस्तीति श्रुत्या च विरुध्यते इति चेन्न। नियोगपर्यनुयोगाऽनर्हं स्वतन्त्रेच्छभगवदुत्थत्वाद्वैष्णवभोगानाम्। यथा श्रुतिस्तुतौ-त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयानिति। किन्निष्प्रयोजनमेव स्वतन्त्रेच्छ ईश्वरः। स्यादस्तु। अथवा मास्तु स तथा। भक्तानां स्वस्मिन् भाववर्धनार्थं तथा तेन विधानात् यथोक्तं श्रीमद्भागवते।

यत्त्वहं भवतीनां वै दूरे वर्त्ते प्रियो दृशाम्।

मनसः सन्निकर्षार्थं मदनुध्यान काम्यया ॥
यथा दूरचरे प्रेष्ठे मन आविश्य वर्त्तते ।
स्त्रीणां च न तथा चेतः संनिकृष्टेऽक्षगोचरे ।
मय्यावेश्यमनः कृत्स्नं विमुक्ताशेषवृत्ति यत् ।
अनुस्मरन्त्यो मां नित्य मचिरान् मामुपैष्यथेति (११६) । ननु भक्ताः प्रारब्धन्नोपभुञ्जते इति तु न साधु । कुतः ।

---

(११६) रसामृत सिन्धौ च–

न विना विप्रलम्भेन संयोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्द्धत इति ।

एतन्मूलक एव साहित्यशास्त्र प्रवादो यथा–

न वाच्यं दुःखरूपत्त्वाद्विप्रलम्भो, नोच्यतामिति ।

संयोगपोषकत्वादिति । अन्यत्र च–सङ्गमविरहविकल्पे वरमिह विरहो न सङ्गमस्तस्य । एकः स एव सङ्गे त्रिभुवनमपि तन्मयं विरहे इति । तथा च श्रीवल्लभाचार्योऽपि–गोप गोपीनां विरहानुभवं प्रार्थितवान् ।

यच्च दुःखं यशोदाया नन्दादीनां च गोकुले ।
गोपिकानां तु यद्दुःखं तद् दुःखं स्यान्मम क्वचित ।
उद्धवागमने जात उत्सवः सुमहान्यथा ।
वृन्दावने गोकुले वा तथा मे मनसि क्वचिदिति ।

पद्यावल्यां चोक्तम्–

वियोगिनीनामपि पद्धतिं वो न योगिनो गन्तु मपि क्षमन्ते । यद् ध्येयरूपस्य परस्य पुंसो यूयंगता ध्येयपदं दुरापमिति । इह विरहफलप्रदर्शनं दिग् दर्शनमात्रम् ।

अनेनैव न्यायेन प्रिया प्रियावुभौ परिणामे शुभायैवेति पर्यालोच्यौ ।

ननु कामादि दूषितं चित्तं नास्पदं मधुसूदन इति वचन विरोधात् गोपीनां कृष्णकामुकीनां कथं भगवद्भक्तत्वम् । तासां कामुकीत्वे प्रमाणं च गोप्यः कामादित्यादिवाक्यमेवेति चेत् । अत्रोच्यते—गोप्यः कामादिति लोकदृष्ट्यनुवादः । तासां कामोऽपि हि भिन्नो न तु लौकिको मदनः । स तु श्रीकृष्णसुखकामस्तासां मधुरागमनाश्रवणात्तास्तु स्वरूपतः पराभक्ति रूपा एवावतीर्णाः । भक्तिः प्रवर्त्तितेत्याद्युक्तेः ।

गुणमाहात्म्यासक्ति रूपासक्ति पूजासक्ति स्मरणासक्ति दास्यासक्ति सख्यासक्तिकान्तासक्ति वात्सल्यासक्ति आत्मनिवेदनासक्ति तन्मयतासक्ति परमविरहासक्तिरूपा एकधाप्येकादशधा भवतीति नारदसूत्रोक्तैकादशधासक्तीनां निर्वाहाद् गोपीनां प्रेमलक्षणायां भक्तौ मुख्यत्वमेव । तथा उद्धवं प्रति श्रीकृष्णोप्याह—

मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ।
स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः ।
धारयन्त्यति कृच्छ्रेण प्रायः प्राणान् कथञ्चन ।
प्रत्यागमन संदेशै र्बल्लव्यो मे मदात्मिका इति । अन्यच्च
गोपीनां परमानन्द आसीद् गोविन्ददर्शने ।
क्षणं युगशतमिव यासां येन विना भवदिति ॥

अन्यत्रापि—अर्जुन उवाच ।

त्रैलोक्ये भगवद्भक्ताः के त्वां जानन्ति मर्मणि ।
केषु वा त्वं सदा तुष्टः केषु प्रेम तवातुलम् ।

श्रीभगवानुवाच ।

न तथा मे प्रियतमो ब्रह्मा रुद्रश्च पार्थिव ।
न च लक्ष्मी र्न चात्मा च यथा गोपीजनो मम ।
भक्ता ममानुरक्ताश्च कति सन्ति न भूतले ।
किन्तु गोपी जनः प्राणाधिकः प्रियतमो मम ।
न मां जानन्ति मुनयो योगिनश्च परन्तप ।
न च रुद्रादयो देवा यथा गोप्यो विदन्ति माम् ।
न तपोभिर्न वेदैश्च नाचारैर्न च विद्यया ।
वश्योऽस्मि केवलं प्रेम्णा प्रमाणं तत्र गोपिकाः ।
मन्माहात्म्यं मत्सपर्यां मच्छ्रद्धां मन्मनोगतम् ।
जानन्ति गोपिकाः पार्थ नान्ये जानन्ति सर्वशः ।
तत्रापि सर्वगोपीनां राधिका ऽतिवरीयसी ।
सर्वाधिक्येन कथिता यत् पुराणा ऽऽगमादिष्विति ।

उद्धवश्च गोपीः प्रति—

अहो यूयं स्म पूर्णार्था भवत्यो लोक पूजिताः ।
वासुदेवे भगवति यासामित्यर्पितं मनः ।
भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ।
भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा ।
दिष्ट्या पुत्रान् पतीन् देहान् स्वजनान् भवनानि च ।
हित्वा वृणीयु र्यूयं यत कृष्णाख्यं परमं पदम् ।
सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे ।
विरहेण महाभागा महान् मे ऽनुग्रहः कृत इति ।

उक्तं चाभियुक्तैः—धन्या गोकुल कन्या वयमिह मन्यामहे जगति । यासान्नयनसरोजे निरञ्जनो ह्यञ्जनः साक्षादिति । इत्थं सति क्वेमाः स्त्रियो वनचरी र्व्यभिचारदुष्टाः कृष्णे क्व चैष परमात्मनि रूढभावाः । नन्वीश्वरोऽनुभजतो ऽविदुषोऽपि साक्षा-

च्छेयस्तनोत्यगदराजइवोपयुक्त इत्यादिवचनेषु गोपीनां व्यभि-
चारिणीत्वाद्युक्तिर्लोकदृष्ट्यैव व्याख्येया; न तु वस्तु दृष्ट्येति।
श्रीमद्भागवते—

संस्थापनाय धर्मस्य प्रशमाये तरस्य च।
अवतीर्णो हि भगवानंशेन जगदीश्वरः।
स कथं धर्म सेतूनां वक्ता कर्त्ताभिरक्षिता।
प्रतीपमाचरद् ब्रह्मन् परदाराभि मर्शनम्।
आप्तकामो यदुपतिः कृतवान् वै जुगुप्सितम्।
किमभिप्राय एतन्नः संशयं छिन्धि सुव्रत·

इति राजप्रश्ने।

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्।
तेजीयसां न दोषाय वन्हेः सर्वभुजो यथा-

इत्यादि शुकसमाधानं च लोकदृष्ट्यनुवादेनैव नेयम्। अन्यथा
गोपीनां माहात्म्यवचनैर्विरोधस्य दुरपनेयत्वमेवापतेत्। उक्तं
च श्रीधर स्वामिना-परदारत्वं गोपीनामङ्गीकृत्यपरिहृत मिति
वस्तुतस्तु ब्रह्मणा वत्सहरणे श्रीकृष्णेनैव पाणिग्रहणात् सर्वा-
सामपि तत् प्रेयसीनां स्वकीयात्वमेवेति श्रीधरस्याशयः। तानि
माहात्म्य वचनानि च यथा-

षष्टिवर्षसहस्राणि मया तप्तं तपः पुरा।
नन्दगोप व्रजस्त्रीणां पादरेणूपलब्धये।
तथापि न मया प्राप्तास्तासां वै पादरेणव इति।

बृहद्वामने। श्रीमद्भागवते च-

वन्दे नन्दव्रजस्त्रीणां पादरेणु मभीक्ष्णशः।
यासां हरिकथोद्गीतं पुनाति भुवनत्रयम्।

हरिकथोद्गीतं वेणुगीतगोपीगीतयुगलगीतभ्रमरगीतादिकम्।

आसामहो चरणरेणु जुषामहं स्यां वृन्दावने किमपि गुल्म-लतौषधीनाम् । या दुस्त्यजं स्वजनमार्यपदं च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्यामिति च ।

अस्य आसामित्यादि श्लोकस्यायं भावः । मम तु स्त्रीपुरुषोत्तममध्यमेषु न दृष्टिः किन्तु भगवद्भक्तिमत्स्वेव । श्रुतिभिर्या अद्यापि विमृग्या तां मुकुन्दपदवीम्भेजुरिति । अन्यच्च ।

तद् भूरि भाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेषु कत-मङ्घ्रि रजोऽभिषेकम् । येनाह मेकोऽपि भवज्जनानां भूत्वानिषेवे तव पादपल्लवमिति ।

नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः स्वर्योषितान्नलि-नगन्धरुचां कुतोऽन्याः । रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठल-ब्धाशिषां य उद्गाद् व्रजसुन्दरीणामिति ।

गोपिकानां सुखं रमादिभिरप्यलभ्यमिति भावः ।
भगवतापि स्वमुखेनैवोक्तम् ।

न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः ।
यामाभजन्दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुनेति ।
अस्य न पारयेऽहमित्यादि श्लोकस्यार्थः । निरवद्या संयुक् संयोगो यासां तासां वः विबुधानामायुषापि चिरकालेनापि स्वीयं साधुकृत्यं प्रत्युपकारं कर्त्तुं न पारये न शक्नोमि । कथंभूतानाम् । या भवत्यो दुर्जरा या गृहशृङ्खलास्ताः संवृश्च्य निःशेषं छित्वा मामाभजन् तासाम् । तस्माद्वो युष्माकमेव साधुना साधुकृत्येन तद्युष्मत् साधुकृत्यं प्रतियातु प्रतिकृतं भवतु । युष्मत्सौशील्येनैव समानृण्यम् । न तु मत्कृतप्रत्युपकारेणेति ॥

गोपिकादिभिः सह क्रीडादिकमपि प्रेमवैवश्येनैव भगवतः ननु तत्रासक्त्या । अच्युतत्त्वात्तस्य । गोपालतापनीये व्याख्यायते–एकदा हि व्रजस्त्रियः सकामाः शर्वरीमुषित्वा सर्वेश्वरं

कृष्णमूचिरे। भो भगवन् कस्मै ब्राह्मणाय भक्ष्यं दातव्यं भवतीति। कृष्णउवाच—दुर्वासस इति। कथं यास्याम स्तीर्त्वा जलं यमुनाया यतः श्रेयो भवतीति गोपीभिः पृष्टे कृष्णेनोक्तम्। कृष्णो ब्रह्मचारीत्युक्ते, यमुना वो मार्गन्दास्यतीति। तद्वाक्येन च सौर्यान्तीर्त्वा पुण्यतमसमाश्रमं गत्वा श्रेष्ठतरं मुनिं रुद्रांशं दुर्वाससं नत्वा तस्मै ब्राह्मणाय क्षीरमयं घृतमयमन्नन्निवेदितवत्यस्ताः। सोऽपीष्टतमं भुक्त्वा आशिषः प्रयुज्य गन्तुमनुज्ञां दत्तवान्। गोप्यस्तमूचुः। कथं यास्यामस्तीर्त्वा सौर्यामिति। दुर्वासा उवाच—दूर्वाशिनं मां स्मृत्वा वो दास्यति मार्गं सेति (दूर्वैवाशनमस्यास्तीति दुर्वासः। तं निराहारं दूर्वाशिनं मां स्मृत्वा वो मार्गं दास्यतीत्यर्थः)। तासां मध्ये श्रेष्ठेति (ब्रह्मणामाम्) उवाच—कथं चानेकाङ्गनासंभोगशीलो ब्रह्मचारी कथं वा दूर्वाशनो मुनिरिति। स मुनिरुवाच—भूतभौतिकाद्यन्तर्यामिण आत्मनोऽक्रियत्वात् कृष्णो ब्रह्मचारीत्यादिकं युज्यत एव मुनिरात्मानं प्रति यत्र सर्वमात्मैवाभूत्तत्र वा कुत्र मनुते क्व वा गच्छतीति। स ह्यात्मा कथं भोक्ता भवामीति।

अत्र सम्बन्धे श्रीधरस्वामी चाह—

> ब्रह्मादिजयसंरूढ़ मूढ़ कन्दर्पदर्पहा।
> जयति श्रीपतिर्गोपी रासमण्डल मध्यगः।

ननु विपरीतमिदं—परदारविनोदेन कन्दर्पविजेतृत्वप्रतीतिः। नैवम्। योगमायामुपाश्रितः। आत्मारामोऽप्यरीरमत्। साक्षान्मन्मथमन्मथ आत्मन्यवरुद्धसौरत इत्यादिषु स्वातन्त्र्याभिधानादिति। आत्मन्येवावरुद्धः सौरतश्च रसधातुः न तु स्खलितो यस्येति कामजयोक्ति रिति च।

नन्वलौकिकलीलारहस्यस्य लौकिकान् प्रति वर्णने क्व

उपकार इति अत्र चोदिते। अनुग्रहाय भूतानां मानुषं देहमा- श्रितः। भजते तादृशीः क्रीड़ा याः श्रुत्वा तत्परो भवेदिति श्रीमद्भागवतीयपद्येनोत्तरं ब्रूमहे। तत्र अनुग्रहायेति पदं व्या- ख्यातं च स्वामिना—शृङ्गाररसाकृष्टचेतसोऽतिबहिर्मुखानपि स्वपरान् कर्त्तुमिति भाव इति। अतएव तत्रैव बहिर्मुखाना मेवै तत्कर्मकाण्डोक्तं धर्मार्थकाममात्रसाधनभूतं कर्मानान्तर्मुखा- नाम्। तेषान्तु तुच्छसर्वपरित्यागन भगवच्छरणतैवकृतार्थताहेतुः आसन्नतमसोत्तस्य भगवद् गुणश्रवणकीर्त्तनादि भोगेन जन्म- समाप्तिः। इतरस्येत्तरेण व्यवधानेन जन्मसमाप्तिः। शास्त्र तात्पर्यपर्यालोचनेन तथैवावगमात्। न केवल मेतावदेव प्र- योजनम्। अपि तु निन्दकानां खलानां कीटानां कटुमुख्यास्त्र- युष्या मधुरात् फलादिव श्रीमद्भागवतामृतात् सकाशाद् बञ्चन मपि तदुल्लेखे प्रयोजनमिति ज्ञेयम्। द्विधा हि गोपनम्भवति ततोऽन्यत्र नयनात्तत्रागमनवारणाच्चेति।

ततोऽन्यत्र नयनप्रकारो यथा पाद्मे वायवीय लक्ष्मीसं- हितासूक्तम्। त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय। अत- थ्यानि च शास्त्राणि दर्शयस्व महाभुजेत्यादि द्वापरादौ युगे भूत्वा कलया मानवादिषु स्वागमैः कल्पितैस्त्वं वै जनान् मद्विमुखान् कुर्विति च। भगवदाज्ञया रुद्रः असुरमोहनाय मोहशास्त्राणि कथयत्विति भावः। एवं तदाज्ञया सदेवस्तानि कृत्वा करुणया पार्वतीम्प्रति कथयति पाद्मे—

शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम्।
येषां श्रवणमात्रेण पापित्वं ज्ञानिनामपि।
प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम्।
मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम्।
कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत्।

गौतमेन तथा न्यायं सांख्यन्तु कपिलेन वै ।
द्विजन्मना जैमिनिना पूर्वं वेदमपार्थताम् ।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ।
धिषणेन तथा प्रोक्तं चार्वाकमति गर्हितम् ।
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ।
बौद्धशास्त्रमसत् प्रोक्तं नग्ननीलपटादिकम् ।
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च ।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ।
अपार्थं श्रुतिवाक्यानां दर्शयंल्लोकगर्हितम् ।
कर्मस्वरूपत्याज्यत्व मत्र च प्रतिपाद्यते ।
ब्रह्मणोऽस्य परं रूपं निर्गुणं दर्शितं मया ।
सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र चोच्यते ।
सर्वस्य जगतोऽप्यस्य नाशनार्थं कलौ युगे ।
वेदार्थवन् महाशास्त्रं मायावादमवैदिकम् ।
मयैव कथितं देवि जगतान्नाशकारणादिति ।

एव मुक्ता पुनः करुणया स एवाह—

ये मे मतमवष्टभ्य चरन्ति पृथिवी तले ।
सर्वे धर्मैश्च रहिता यास्यन्ति निरयेऽशुचौ ।

एवं विष्णोराज्ञया शिवेन पापिनां दैत्यानां मोहनार्थं पाख-ण्डमार्गाः प्रवर्त्तिताः । कणादगौतमशक्तिजैमिन्युपम युकपिल-दुर्वासोमृकण्ड वृहस्पतिभार्गवा दशैते शिवशक्तिसमाविष्टस्ता-मसधर्मान् जगदुः । तच्चोक्तं श्रीशिवेन—

घोरे कलियुगे प्राप्ते दैतेया म्लेच्छरूपिणः ।
गोब्राह्मणस्य द्वेष्टारो देवार्चा नाशकारकाः ।
मयैव दर्शितास्तेषां मोहनार्थं कलौ युग इति

तत्रागमनवारणप्रकारो यथोक्त ऐतरेयोपनिषदि—तस्मादिन्द्रो नामेदन्द्रो ह वैनाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवा इति। रासक्रीड़ासम्बन्धे श्रीधरस्वामिना चोक्तम्—रासक्रीड़ाविड्म्बन कामविजयख्यापनायेत्येव तत्त्वम्। शृङ्गारकथोपदेशेन विशेषतो निवृतिपरेयं पञ्चाध्यायीति व्यक्तीकरिष्याम इति। अतस्तदाशये व्यक्ते श्रीमद्भागवते स परोक्षवाद इति त्वर्थापन्नः।

कुब्जाया भगवत् सङ्गः। पूर्वजन्मनि च नारदसङ्ग इति माथुरहरिवंशप्रसिद्धे यद्यपि कुब्जापि भगवदसङ्गिनी तथापि श्रीमद्भागवते

सैवं कैवल्यनाथं तं प्राप्य दुष्प्राप्य मीश्वरम्।
अङ्गरागार्पणो नाहो दुर्भगेद मयाचत।

अहोष्यतामित्याद्युक्त्वा, दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम्। यो वृणीते मनोग्राह्यमसत्त्वात् कुमनीष्यसाविति कुब्जाया निन्दनान्न गोपीसमकक्षता तस्याः। सा हि लौकिकेनैव कामेन कृष्णं चकमे। अथापि,

न मय्यावेशित धियां कामः कामाय कल्पते।
भर्जिताः क्वथिता धानाः प्रायो बीजाय नेष्यत इत्युक्तेः।

कुब्जापि कृतार्थव इति मन्तव्यम्। अन्यथा—

सत्सङ्गेन हि दैतेया यातुधानाः खगा मृगाः।
गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः।
विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः।
रजस्तमः प्रकृतयस्तस्मिंस्तस्मिन् युगे युगे।
बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः।
वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः।

सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः ।
व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथा परे ।
तेनाधीतश्रुतिगणा नोपासितमहत्तमाः ।
अव्रताऽतप्ततपसः सत्सङ्गान् मा मुपागता इति

भगवदुक्तेरनुपपत्तेः ।

न मय्यावेशितधियामिति पद्ये प्राय इत्यनेन पदेन तेष

कामिनामिच्छया तु पुनः प्ररोहोऽपि प्रोक्तः ।

यथा सौमित्रिभरतौ यथा संकर्षणादयः ।
तथा तेनैव जायन्ते निजलोकाद्यदृच्छया ।
पुनस्ते नैव गच्छन्ति तत्पदं शाश्वतम्परमिति पाद्मोक्तेः ।

त्वाष्ट्रकायाधवादय इत्यादे विवरणं यथा—त्वाष्ट्रो वृत्रासुरः । अस्य पूर्वजन्मनि श्रीनारदाङ्गिरसोः सङ्गः । श्रीसङ्कर्षणसङ्गश्च प्रसिद्धः ॥ कायाधवः कयाधुपुत्रः श्रीप्रह्लादः । अस्य गर्भे नारदसङ्गः वृषपर्वा दानवः । अयं जातमात्र एव मातृपरित्यक्तो मुनिपालितो विष्णुभक्तो बभूवेति पुराणान्तरप्रसिद्धिः॥ बलेः श्रीप्रह्लादसङ्गः । वामनदेवसङ्गश्च । तदनन्तरमेव भक्त्युद्बोधदर्शनात् ॥ बाणस्य बलिमहेशयो भगवतः सङ्गश्च अस्य भजकर्त्तनानन्तरं ज्ञातविष्णु महिम्नो महाभागवतमहेशप्राप्तिरेव स्वप्राप्तिरित्युच्यते ॥ मयो दानवः । अस्य सभा निर्माणादौ पाण्डवानां सङ्गो भगवत् सङ्गश्च । अन्ते तत्पदप्राप्तिस्तु ज्ञेया॥ विभीषणो यातुधानः । अस्य हनुमत् सङ्गो भगवत् सङ्गश्च ॥ सुग्रीवादीनां त्रयाणां भगवत् सङ्गः ॥ गजो गजेन्द्रः । अस्य पूर्वजन्मनि सत्सङ्ग उन्नेयः । उत्तरजन्मान्ते भगवत्सङ्गः ॥ गृध्रो जटायुर्नामा खगः । अस्य गरुडदशरथादि सङ्गः । अनन्तरं श्रीसीतादर्शनं श्रीभगवद्दर्शनं च ॥ वणिक्पथ स्तुलाधारः । अस्य

कृतानां कर्मणान्नाशो जायते मम भक्तितः ।
प्रारब्धस्य न नाशोऽस्ति सर्वथा युज्यते हित-

र्दितिवाराहपुराणवचनविरोधादिति । न कि-
ञ्चिदेतत् । भगवद्भक्तिं गौणीकृत्य भगवन्तं मुक्त
ये भजतोजनान् लक्ष्यी कृत्यास्य वचनस्य प्रवृत्तेः ।

---

भारते आर्जालमुनिगर्वप्रसङ्गे प्रोक्तमहिम्नः सत्सङ्गोऽन्वेषणीयः ॥
व्याधो धर्मव्याधः शूद्रोऽन्त्यजः हिंसातिशयविमुखः पर्यवसाने
दृष्टनीलाद्रिनाथस्तं च स्तुतवान् प्राप्तदालिङ्गनस्तत्सायुज्य-
मवाप्तवानित्यादि वाराहे कथा । कुब्जाया उक्तपूर्वः । गोप्यो-
ऽत्रसाधारणाः श्रीकृष्णाव्रजे तदा विवाहादिना समागता । आ-
सान्तु नित्यप्रेयसी वृन्दा तस्यासङ्गः श्रीकृष्णादर्शनादिरूपो भगवत्
सङ्गश्च । यज्ञपत्नीनां श्रीकृष्णगुणकथाकृतिलोकसङ्गस्तत्सङ्गश्च ।
सत्सङ्गशब्देनात्र भगवता मम सङ्गो मदीयानां सङ्गश्चेत्यभि-
धाप्यते इति ।

कुब्जायाश्चित्तस्य हरिविषयकरतिरागरक्तत्वादादौ तु
दोष एव स रागो न भवति । उत्तमास्पदत्वात् । रागादयः स-
न्तु कामं न तद्भावोऽपराध्यति । उत्खातदन्तोरगवदविद्या किं
करिष्यतीत्युक्तेः । रागादि दूषितं चित्तमित्यादि वचनं तु भग-
वद्धर्मविरुद्धविषयविषयकरागादि परम् । अथवा स्वीकृतेऽपि
तस्य तादृशरागस्य दोषत्वे कूपखानकवदेतद्भविष्यति । तद्यथा
कूपखानकः कूपं खनन् यद्यपि मृदा पांसुभिश्चावकीर्णो भवति
सोऽप्सु संजातासु तत एव तं गुणमासादयति येन स च दोषो
निर्हण्यते भूयसा चाभ्युदयेन योगी भवति, एवमिहापि कामेन
भजन्त्यपि कुब्जा भजनपुण्येन संजातेन पूता बभूवेति ॥

भक्तिमेव प्रधानं मन्यमानान् भक्तांस्तु नैतद्वचनं कक्ष्यो करोतीति व्यवस्थया वाराहवचनोपपत्तेः अन्यथा प्रारब्धकर्मापरिहारे–

नूनं बतैतन् मम दुर्भगस्य
शश्वद्दरिद्रस्य समृद्धि हेतुः ।
महाविभूते रवलोकतोऽन्यो
नैवोपपद्येत यदूत्तमस्य । (११७) ।

नन्वब्रुवाणो दिशते समक्षं
याचिष्णवे भूर्यपि भूरिभोगः ।
पर्जन्यवत् तत् स्वयमीक्षमाणो
दाशार्हकाणा मृषभः सखा म इति ।

श्रीदामविप्रवचनस्यानुपपत्तेः (११८) ।

---

(११७) महाविभूतेः कर्त्तुमकर्त्तुमन्यथाकर्त्तुं च समर्थस्य परमेश्वरस्येत्यर्थः । मम प्रारब्धमन्यथा कर्त्तुं स एव समर्थो नून निश्चितमिदम्मयेति भावः ॥

(११८) ननु तेन भगवता तु स्वयं किमपि नोक्तम् । तत्राह नन्विति । स मे सखा याचिष्णवे याचकाय भूर्य्यप्यब्रुवाण एव दिशते । यतो भूरिभोगः अनन्तब्रह्माण्डाधिपति. । अतः स्वभोगापेक्षया परमेष्ठिपदमपि तुच्छं मन्वानो लज्जया समक्षमब्रुवाण एव दिशते ददाति । तस्य ह्ययन्निसर्गः । स्वभक्तार्पित मत्यल्पं बहू कृत्य मनुते स्वदत्तं तु कैवल्यमपि न किमपि मन्यते । यथोक्तं विष्णुधर्मे–

एतावेव व्यवस्थितौ पक्षौ पृथगुरीकृत्य प्रिया दासेन चोक्तम्। यथा—

दुःखादावच्युतस्यापि कृपाभावेन चाथवा।
कर्मपाकविचारेण भजनीयः सदा हरिरिति ११९।

---

कृतानि तिलशो भक्तैः कर्माणि कमलापतिः।
मेरुशो मन्यते प्रीत आत्मनोऽतीव गौरवा दिति।

धान्यमसि धिनुहि देवानिति कृष्णयजुर्वेदमन्त्रोपरि सायण भाष्यं चात्र द्रष्टव्यम्। अतस्तद्दानं पर्जन्यवत्। यथा समुद्रपूरको मेघो तमो निद्राधीने जने रात्रौ गर्जनरहितोऽपि कर्षकाणां वप्रे क्षेत्रे वर्षति। तत्स्ववृष्टि जलं स स्वयमेव पश्यति। तथा श्रीकृष्णोऽपीति॥

(११९) कर्मपाकविचारस्तेन तद्विचारपूर्वक शान्त्येति भावः

करोति कृतवा न् कर्त्ता स्वरूपैर्मयि यद्धरिः।
तत्सर्वं मे सुखायैव इति मे निश्चिता मतिः।
प्रतिज्ञा तव गोविन्द न मे भक्तः प्रणश्यति।
इति संस्मृत्य संस्मृत्य प्राणान् संधारयाम्यहमित्याद्युक्तेः॥

यस्मिन्यस्मिन् काले यद्यन् मयि भगवान् करोति तत्तन्मयि हितायैवेति दृढविश्वासेन दुःखसुखमानापमान जयाऽजयमिन्दास्तुति लाभालाभरोगारोग्यजीवनाजीवनेषु तस्य भगवतः कृपाभावेन मया निर्भयेन भगवान् सेव्यः। अथवा कर्मपाकविचारेण।

कर्मणा जायते जन्तुः कर्मणैव विलीयते।
सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते इति।
अवश्यं भावि भावानां प्रतीकारो भवेद्यदि।
तदा दुःखैर्न लिप्येरन् नलराम युधिष्ठिराः।

अथ ननु तादृशव्यवस्थास्थापने कोऽभिसन्धिः परमेश्वरस्येति पृच्छन्तं प्रत्युच्यते-ये पूर्वं भक्त निन्दापराधाद्युत् कटा (१२०) पराधिनस्ते घुणा क्षरन्यायेन यदि दैवात् सुकृतैर्भजनोन्मुखाः स्यु-स्ते तर्हि भक्तिं गौणीकृत्य भगवद्भक्तौ नियुज्य-न्ते इति। कर्मणां च स्थूलसूक्ष्मार्द्रशुष्कादिभेद भिन्नानां गहना गतिः प्रसिद्धैव। यथा महाभा-रते उक्तम्।

न कल्माषो न कपिलो न कृष्णो न च लोहितः।
अणीयान् क्षुरधारायाः को धर्मं वक्तुमर्हतीति।

---

भवितव्यं भवत्येव कर्मणो गतिरीदृशी।
विपत्तौ किं विषादेन संपत्तौ हर्षणेन किमिति।

(१२०) यथा स्कान्दे-

निन्दां कुर्वन्ति ये मूढा वैष्णवानां महात्मनाम्।
पतन्ति पितृभिः सार्द्धं महारौरवसंज्ञके इत्यादि।

अन्येऽपि अपराधा भक्तिप्रतिबन्धका ग्रन्थान्तरेषु लिखिताः सन्त्येव। यथा यथार्थ एव भजनमाहात्म्ये सत्यपि सम्प्रति तत्तद्भजनफलोदयो न दृश्यते तत्र नाम्न्यर्थवादकल्पना विप्र वै-ष्णवानादरादयो दुरन्तापराधा एव हरिपदप्राप्तिप्रतिबन्धका-इति वक्तव्यम्। पुरातनानां धर्मशीलानामप्यपराधादधो गतिः श्रूयते। यथा नृगस्य। हरिनाम्न्यर्थवादकल्पनादोषवचो यथा-

अर्थवादं हरे र्नाम्नि संभावयति यो नरः।
स पापिष्ठो मनुष्याणां निरये पतति स्फुटमिति॥

न च पूर्वं प्रारब्धजनिते ऽनन्यस्मिन्नेव भजज्जनदेहे संप्रत्यप्यवतिष्ठमाने स एवायमिति स एवायमिति प्रत्यभिज्ञायमाने च, नायं तस्य स देहइत्युच्यमाने साक्षात्प्रत्यक्षविरोधो दुष्परिहरः। प्रमाणान्तरं च तस्य तथाविधत्वे नास्त्येवेति वाच्यम्। अस्त्येवाप्तवाक्यं प्रमाणम्। तथा हि—यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेति। नृसिंहतापनीयश्रुतौ भाष्ये श्रीशङ्कराचार्यैर्भगवत्पादैरुक्तम्। मुक्ता अपि लीला विग्रहं कृत्वा परमेश्वरं भजन्त इति (१२१)। अत्र भाष्ये मुक्ता इति पदेन भक्तियोगिन एवाभिप्रेताः।

निश्चला त्वयि या भक्तिः सैव मुक्तिर्जनार्दन।
न कर्मबन्धनं जन्म वैष्णवानां च विद्यते।
मुक्ता एव हि भक्तास्ते न संदेहो हरेः क्वचित्।

---

(१२१) सर्वे देवा यं परमेश्वरं नमन्ति तथा मुमुक्षवो ब्रह्मवादिनश्च नमन्ति। अत्र देवाः पृथिव्यन्तरिक्षनाकब्रह्मलोकनिवासिनो ये भगवद्भक्तास्ते सर्वे देवाः। संसारविजिगीषुत्वान्मोदशालित्वाच्चेति ॥ ननु नृसिंहतापनीश्रुतिभाष्यकारोऽन्य एव शङ्कराचार्य इति चेद् अस्तु। श्रीमद्भगवद्गीता भाष्यकारस्तु मायावाद गुरुरेव शङ्कराचार्यः। सोऽपि गीता भाष्ये मुमुक्षां परित्यज्य भृत्यभावेन भगवद्भजनायानुमोदते भक्तिमिति।

इति पाद्मोक्तेः । ननु प्रत्यक्षेणान्यप्रमाणवि-
रोधे प्रत्यक्षप्राबल्यम् । यथोक्तम्—

युक्तियुक्तमुपादेयं वचनं बालकादपि ।
अन्यत् तृणमिवत्याज्य मप्युक्तं पद्मजन्मनेतिचेत् ।

नेत्युच्यते । का नामवराकी युक्तिः प्रत्यक्षीकृत
धर्मणामाप्तानां वाक्यप्रामाण्यस्याग्रे प्रत्यवस्था
तुम् । यथोक्तं काशीखण्डटीकायां रामानन्देन-
तर्हि युक्तिविरोधस्य का गतिरिति चेत् । यैव
गतिः सैवगतिरिति ब्रूमः । न हि श्रुतिस्मृतीति
हासपुराणात्मा भगवान् वराकेण युक्तिविरोधे-
नास्माभिरनुयोक्तव्यः । तथा च श्रुतिः । नैषा म-
तिस्तर्केणापनेयेति (१२२) ।

युक्तियुक्तमित्यादि वचनन्तु लौकिकन्याया-
भिप्रायं ज्ञेयम् । स्वतन्त्रेच्छभगवदुत्थशरीरं ली-
लाविग्रहः । तदन्यत् प्रारब्धारब्धदेहमिति
विवेकः ।

---

(१२२) एषा भगवद्विषया मतिर्भक्तिः तर्केण अमुकदे-
वता सेविता आशुतोषत्वादाशु तुष्यतीत्येव मेवार्थाननायासेन
ददातीत्यादि तुच्छतरनश्वरकामलिप्सया आ ईषदपि न अ-
पनेया भगवद्भक्तेरन्यत्र न चालनीयेति ॥

ननु स्वतन्त्रेच्छभगवदुत्थसुखदुःखभोगित्वस्यैव मुक्तित्वे तस्याः पुरुषार्थत्वव्याघातः ।

सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।

इति विद्यात् समासेन लक्षणं सुखदुःखयोरिति ।

मनुना सुखस्य स्ववशत्वलक्षणत्वस्य स्मरणात् ।

स्वातन्त्र्यं परमं मुक्तिः पारतन्त्र्यं च बन्धनमिति वचनात् ।

यावदस्या स्वतन्त्रत्वं तावदीश्वरतो भयमिति भगवदुक्तेश्चेति चेन्न । यत्र कुत्रापि मते येन केनाप्युपायेन यादृशतादृशस्याभिमतस्य मोक्षलाभस्य स्वीकारेऽपि आस्तिकानां मुक्तेरुत्तरमपि जीवस्य भगवत् पारतन्त्र्यस्यानपगमात् । तदुक्तम्–

न दास्यं वै परेशस्य बन्धनं परिकीर्त्तितमिति ।

यावदस्यास्वतन्त्रत्वमित्यादि भगवदुक्तिस्तु गुणवैषम्यकृतपारतन्त्र्यपरा न तु भगवतो लीलाभावकृतजीवपारतन्त्र्यप्रतिषेधपरा । यथोक्तन्तत्रैव भगवता–

यावत् स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः ।

नानात्वमात्मनो यावत् पारतन्त्र्यन्तदेवहीति ।

एतेन एष ह्येवैनं साधुकर्म कारयति तं यमेभ्यो

लोकेभ्य उन्निमनीषत एष उ एवैनमसाधुकर्म कारयति तं यमधो निनीषत इति श्रुतिः ।

अज्ञो जन्तुरनीशान आत्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गन्नरकमेव वा ।
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि माययेति ।
गीता च व्याख्याता ।

ननु भगवत् पारतन्त्र्यस्य सर्वथाऽनपगमनीयत्वे कृतं तद्भजनेन । सर्वतितिक्षोः सर्वतोवैराग्यमेववरीयः । यथोक्तम् ।

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारतेति

ननूक्तं मुक्तिरेव परमः पुरुषार्थ इति । नो । न हि वयं मुक्तेः पुरुषार्थत्वे विप्रतिपद्यामहे । क्व तर्हि ? मुक्तिसाधने इति ब्रूमहे । वैराग्येणापि हि मुक्ति सिद्धिः ।

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवतीति श्रुतेः (१२३) ।

---

(१२३) अन्यान्यपि वैराग्योपोद्बलकानि वाक्यानि यथा—भगवन्नस्थिचर्म स्नायुमज्जामांस शुक्रशोणितश्लेष्माश्रुदूषिते विस्मूत्रवातपित्तसंघाते दुर्गन्धे निःसारेऽस्मिन् शरीरे

किं कामोपभोगैः । येनाहं नामृता स्यां किमहं तेन कुर्यामिति मैत्रायणीयशाखाश्रुतिः ।

सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते ।

क्रोधाद्भवति संमोहः संमोहात स्मृतिविभ्रमः ।

स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात प्रणश्यतीति

गीता च । अत्र कामपदेन इन्द्रियानुकूलविषयाभिलाषोद्भवः स्त्री पुत्रधनाभिलाषात्मकः कामो ग्राह्यः । तद्विघातासहनशीलत्वं क्रोधः । प्राप्तविषयाभिमानो मदः । धर्माधर्मविवेकानादरेण विषयप्राप्तिसाधनप्रियो भावो लोभः । तद् व्यपबाधकत्वात । विषयत्यागासहनशीलत्वमेव मोह इत्येते षडरयः प्रसिद्धास्तेषां त्यागेनैव निर्विक्षेपं भजनं भवतीति सङ्गात संजायत इत्यादि गीता श्लोकस्य भावार्थः ।

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।

आत्मन्येव च संतुष्टस्तस्य कार्यन्न विद्यत इति ।

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।

प्रसक्ताः काम भोगेषु पतन्ति नरकेऽशुचाविति च गीता ।

रायः कलत्रं पशवः सुतादयो गृहा मही कुञ्जरकोशभूतयः ।

सर्वेऽर्थकामाः क्षणभंगुरायुषः कुर्वन्ति मर्त्यस्य कियतप्रियं चला-इति ।

यतस्ते चलाः अतः शोक मोहाया सभयप्रदाः ।

धनं हि पुरुषो लोके पुरुषं धन मेव वा ।

अवश्यमेकं त्यजति तस्मात् किं धनतृष्णयेत्युक्तेः ।

अल्पसुखव्याजेन भूरिजन्मदुःखमेव स्वरक्षणनाशाभ्यां धनं जनयति हि । कलत्रं स्त्री अपि बलपौरुषविवेकादीनाच्छिद्यपुरुषस्य दुःखमेव प्रयच्छति । एवं सर्वेऽर्थकामा यद्यपि स्वल्पं विषयसुखं कुर्वन्ति पुरुषस्य क्षणभंगुरायुषः तथापि ते तदायुर्वृथा

नाशयितुं समर्था इत्यतो वस्तुतः परमक्लेशदा एव। पञ्चदशानर्थमूलत्वाच्च। तस्माद्दारायाद्यासक्ताः पुरुषाः शोकसमुद्रे मज्जन्तीति।

नित्यार्त्तिदेन वित्तेन दुर्लभेनात्ममृत्युना।

गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैरिति।

नित्यार्त्तिदेनेत्यादि पद्यस्यार्थो यथा—का प्रीतिः सुखाप्तिः। आत्ममृत्युना वणिक् सेवकचौराणामिवोपार्जनादावात्ममृत्युरूपेण। तत्रापि दुर्लभेन साधना साध्येनप्रारब्धाधीनेन स्वलाभेऽपि नित्यार्त्तिदेन तद्रक्षणे विनाशे चार्त्तिं पीडा ददाति हि। कथंभूतैः साधितैरतश्चलैरनित्यैः। ते सर्वे दुःखाऽनला एव प्राणोपतापका इत्यर्थः।

काम जानामि ते मूलं सङ्कल्पात् किल जायसे।

न त्वा संकल्पयिष्यामि समूलस्त्वं विनङ्क्ष्यसीति।

यदि वर्षसहस्राणि तपश्चरसि दारुणम्।

तथापि ते न सिद्धिः स्यात् संकल्पोपशमादृते।

हरो यद्युपदेष्टा स्याद्धरिः कमलयोनि वा।

तथापि तेनैव मुक्तिः संकल्पो पशमादृते।

कमलयोनीत्यत्र सुब्लोप आर्षः।

धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु।

अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति चेति॥

आशायाः खलु ये दासास्ते दासा जगतामपि।

आशावशीकृता येन तेनदासीकृतं जगदिति।

आशा नामनदीमनोरथजला तृष्णातरङ्गाकुला

रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी।

मोहावर्त्तं सुदुस्तरातिगहना प्रोत्तुङ्ग चिन्ता तटी

तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वरा इति ।

मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थि संहतौ ।
देहे वै प्रीतिमान् मूढो भविता नरकेऽपि सः ।
स्वदेहाशुचि गन्धेन न विरज्येत वै पुमान् ।
वैराग्यकारणं तस्य किमन्यदुपदिश्यत इति ।
सर्वाशुचि निधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते नराः पापानि कुर्वते इति ।
यदि नामास्य देहस्य यदन्तस्तद् बहिर्भवेत् ।
दण्डमादाय हि जनः शुनः काकांश्च वारयेदिति ।
यत्सुखं नरकेऽपि स्याच्छब्दस्पर्शादिकं चलम् ।
तत्को वाञ्छेत सारज्ञो भयदं पापकृत् प्रिय मिति ।

अस्य यत सुखमित्यादि पद्यस्यार्थो यथा—आदि पदेन रूप-रसादिगृह्यते । यच्छब्दस्पर्शरूपरसगन्धात्मकं सुखं नरकेऽपि स्यात्तत सारज्ञः को वाञ्छेतेति । कीदृशं सुखं भयदं परिणामे भयदन्नरकप्रदं पापजन्यत्वात् । भयदत्वं यथा गारुडे

कुरङ्गमातङ्गपतङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च ।
एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्चेति ।

श्रीमद्भागवते च—

जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा
शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित ।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्ति
र्बह्व्यः सपत्न्य इव गेहपतिं लुठन्तीति ।

पुनः पापकृत्प्रियं पापकृतां पाप शीलानां प्रियम् । पुनश्च चलमनित्यम् । कर्मकार्यत्वात् । तदुक्तं वेदान्ते—

एतायाः प्रेक्षतें लक्ष्मीश्छत्रचामर चञ्चलाः ।

स्वप्न एव महाबुद्धे दिनानि त्रीणि पञ्चवेति ।

चेतोहरा युवतयः सुहृदो ऽनुकूलाः
सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः ।
वल्गन्ति दन्तिनिवहा स्तरला स्तुरङ्गा
उन्मीलने नयनयो र्न हि किञ्चिदस्तीति ।

पुत्रमित्रकलत्रेषु सक्ताः सीदन्ति जन्तवः ।
सरः पङ्कार्णवे मग्ना जीर्णा वनगजा इवेति ।

तामात्मनो विजानीयात् पत्यऽपत्यगृहादिकम् ।
दैवोपसादितं मृत्युं मृगयो र्गायनं यथेति ।

विषयेषु प्रसक्तो हि नरः श्रेयो न विन्दति ।
तस्मात् सर्वात्मना पुत्र विषयान् विषवत् त्यजेति ।

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं मन इति ।

सहस्राङ्कुरशाखाग्र फलपल्लवशालिनः ।
अस्य संसारवृक्षस्य मनोमूलमितिस्थितम् ।
संकल्पमेव तन्मन्ये संकल्पोपशमे न तत् ।
शोषयामि यथा शोषमेति संसारपादयः ।
प्रबुद्धोऽस्मि प्रबुद्धोऽस्मि दुष्टश्चौरो मयात्मनः ।
मनो नाम निहन्म्येनं मनसास्मि चिरं हतः ।

मनो यस्य वशे तस्य भवेत सर्वं जगद्वशे ।
मनसस्तु वशे योऽस्ति स सर्वजगतो वशे इति ।

अस्य संसारवृक्षस्य नानोपद्रवदायिनः ।
उपाय एक एवास्ति मनसः स्वस्य निग्रहः ।
मनसोऽभ्युदये नाशो मनो नाशे महोदय इति ।

आदित्यस्य गतागतै रहरहः संक्षीयते जीवनम्

व्यापारै र्बहुकार्यभारगुरुभिः कालोऽपि न ज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरा मुन्मत्तभूतं जगदिति ।
निद्रया ह्रियते नक्तं व्यवायेन च वा वयः ।
दिवा चार्थेहया राजन् कुटुम्बभरणेन वा ।
देहापत्यकलत्रादिष्वात्मसैन्येष्व ऽसत्स्वपि ।
तेषां प्रमत्तो निधनं पश्यन्नपि न पश्यतीति ।
अस्यास्ति मम नास्तीति चेतः किम्परिखिद्यसे ।
प्रतीक्ष्य दिवसान् कांश्चिन्नायं न त्वं न सम्पदः ।
लब्धास्त्यक्ताश्च संसारे यावन्तो बान्धवा स्त्वया ।
न सन्ति खलु तावत्यो गङ्गाया अपि वालुकाः ।
एकसार्थप्रवृत्तानां सर्वेषां तत्र गामिनाम् ।
यद्येकस्त्वरितो याति तत्र का परिदेवना ।
पुरन्दरसहस्राणि चक्रवर्ति शतानि च ।
निर्वापितानि कालेन प्रदीपा इव वायुना ।
अद्यैव हसितं गीतं पठितं यैः शरीरिभिः ।
अद्यैव ते न दृश्यन्ते कष्टं कालस्य चेष्टितमिति ।
देवसंज्ञितमप्यन्ते क्रिमिविड्भस्मसंज्ञितम् ।
भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ।
देहः किमन्नदातुः स्वं निषेक्तु र्मातु रेव वा ।
मातुः पितु र्वा बलिनः क्रेतु रग्नेः शुनोऽपि वा ।
एवं साधारणं देहमव्यक्तप्रभवाप्ययम् ।
को विद्वानात्मसात्कृत्वा हन्ति जन्तूनृतेऽसत इति ।

अस्यास्तीत्यादि पद्यानामयं भावः—असारेऽस्मिन् संसारे सारं-वस्तुभूतं सुखं किमपि कदापि कुत्रापि केनापि नानुभूतम् ।

न च स्वार्थमननुसन्धाय परोपकारार्थङ्कर्माण्यनुतिष्ठतः का क्षतिः। परोपकारः कर्त्तव्यः प्राणैरपि धनैरपीत्युक्तेः (१२४)।

---

कोऽहं कुत आयातः को मे बन्धुः कस्याहं कुत्र गमिष्यामीत्याद्युपेक्षितहितचिन्तां स्वप्नेऽप्यस्पृशन् एवं कृते एवं स्यादेवं कुर्यामेवं स्यान्नयमहमिमे मामका मदीयमिदमित्यादि दुर्वासनाशतसंहति महोरगी सरोषफूत्कारनिर्गतगरलसंसर्गविघूर्णमान उन्मत्तचेष्टया जन्म क्षिपन् सर्वोऽपि जनो दुरतिक्रमातिप्रचण्डकालरंहसा कुटिलमालोकितोऽकृतार्थ एव मुखं व्यादाय प्रेताकृतिर्म्रियते। किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम्। इति कर्त्तव्यतामूढः कृच्छ्राद्देहस्त्यजत्यसूनिति। किंच इह जन्मनि स्वीयत्वेन प्रतीयमानः पितृमातृस्त्रीपुत्रादिरूपो जनोऽपि स्वप्रयोजनमुद्दिश्यैव स्नेहं दर्शयति। न तु विपत्तौ कश्चिदनुवर्त्तते। अतोऽसौ धूर्त एव। नात्मीयः। अत एव तत्र साधूक्तम्—कुर्वन्ति मर्त्यस्य कियत् प्रियं चला इति।

कल्पान्तपवना वान्तु यान्तु चैकत्वमर्णवाः।
तपन्तु द्वादशादित्या नास्ति निर्मनसः क्षतिरिति ॥

(१२४) जीविते यस्य जीवन्ति विप्रा मित्राणि बान्धवाः।
सफलं जीवितं तस्य आत्मार्थे को न जीवति।
यस्मिञ्जीवति जीवन्ति बहवः स तु जीवत।
काकोऽपि किन्न कुरुते चञ्च्वा स्वोदरपूरणम्।
अलब्धमीहेद्धर्मेण लब्धं यत्नेन पालयेत।
पालितं वर्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेत्।

शुद्धे विषयोपभोगे च को दोषः ।
भयं प्रमत्तस्य वनेष्वपि स्याद्
यतः स आस्ते सह षट् सपत्नः ।
जितेन्द्रियस्यात्मरतेर्बुधस्य
गृहाश्रमः किन्नु करोत्यवद्यमित्युक्तेः१२५

---

दानाय लक्ष्मीः सुकृताय विद्या चिन्ता परब्रह्मविचारणाय ।
परोपकाराय वचांसि यस्य वन्द्यस्त्रिलोकी तिलकः स एवेति ।
श्रीकृष्णवाक्यम् ।
अहो एषां वरं जन्म सर्वप्राण्युपजीवनम् ।
सुजनस्येव येषां वै विमुखा यान्ति नार्थिनः ।
पत्रपुष्पफलच्छाया मूलवल्कलदारुभिः ।
गन्धनिर्यासभस्मास्थितोक्मैः कामान् वितन्वते इति ।
कर्णस्त्वचं शिविर्मांसं जीवं जीमूतवाहनः ।
ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ।
हरिश्चन्द्रोरन्तिदेव उञ्छवृत्तिः शिवि र्बलिः ।
व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गता इति ।
असुभिर्वसुभिः सुललितवाग्भिः परोपकारः क्रियते सद्भिः ।
परोपकारी सुकृती सरलः कोटिषु कोटिषु कोटिषु विरलइति ।
परोपकारार्थं फलाहि वृक्षाः परोपकारार्थं वहा हि नद्यः ।
परोपकारार्थंदुधाहि गावः परोपकारार्थ मिदं शरीरमिति ।
परोपकारजं पुण्यं न स्यात् क्रतुशतैरपि ।
अष्टादशपुराणानां व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनमिति ।
परोपकारप्रशंसापराणि वाक्यान्यत्रानुसंधेयानि ॥

( १२५ ) वर्णाश्रमकुलाचारप्राप्त कर्माणि तु परमेश्वरा-

लोकसंग्रहमेवापि संपश्यन् कर्त्तु मर्हसीति ।
गीतायाश्चेति वाच्यम् ।
स्वयं मृत्पिण्डभूतस्य परतन्त्रस्य देहिनः ।
स्वरक्षणेऽप्यशक्तस्य को हेतुः पररक्षण इति ॥

ऽऽश्रमपरिपालनायैवमेव करोमीति कर्तृत्वाभिनिवेशं फलाभिस-न्धिं च परित्यज्य विहितकर्माचरणैस्तदेकपरतया भगवन्तं भजते यस्तस्य गृहाश्रमः किमवद्यं करोति । न किमपीत्यर्थः । अवद्यरागादि दोषपारवश्यं न करोत्येवेति भावः ।

न चायं संन्यासिविषयक एवाक्षेपो न तु विरक्तविषयक इति भ्रमितव्यम् । मुमुक्षावतां सर्वेषामपीष्टसाधनत्वेन जिते-न्द्रियत्वादेरावश्यकत्वात् । यतेः कृत्यन्तराभावादिदमेवैकम-नियं कृत्यम् । अन्यस्य तु समयविभागेनेत्येतावानेव विशेषः । व्यवहारप्राप्तमानाव्यापारव्यापृतस्य तत्रासारदर्शिनो विवे-किनो गृहस्थस्यापि सतः षष्टिदण्डात्मके ऽहोरात्रे कालनियमेन प्रहरं प्रहरार्धं मुहूर्त्तं मुहूर्त्तार्द्धं वापि वृत्तिनिरोधेन परमेश्वर-चिन्तनमवश्यमेव कार्यम् कालनियमेन घटिकामात्रमप्यनुदिन-मेवं भगवन्त माश्रितवतो वर्षमध्ये षष्ट्युत्तरत्रिशतघटिकात्म-को भूयान् योगकालः संचीयते । किम्पुनर्मुहूर्त्तं मुहूर्त्तद्वयं प्रहरं प्रहरार्द्धं वा एवं कुर्वतो वक्तव्यम् । नूनमसौ साक्षाज्जीवन्मुक्त ऋषिः । किं च गृहस्थस्य षष्टिदण्डात्मकेऽहोरात्रे कालनियमेन प्रहरं प्रहरार्द्धं मुहूर्त्तं मुहूर्त्तार्द्धं वापि यथा कथंचित् चित्तवृत्ति-निरोधेन भगवन्नाम संकीर्त्तने को नामाति प्रसङ्गः । को वा प्रयासः । कश्च वित्तव्ययः । का वा हानिरिति भ्रान्ता एव प्रष्टव्याः । तथा च नानुचितोऽसौ वैराग्यमात्रपक्षपातिन प्रत्यपि आक्षेप इति ॥

विरक्तम्प्रति परोपकारस्याप्यतन्त्रत्वात् । भगवद्गीतावचनं तु अविरक्तविद्वत्परं ज्ञेयम् ।
ननु एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानिच
कर्तव्यानीति मे पार्थ निश्चितं मत मुत्तमम् ।
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी सत्यागीत्यभिधीयत इति ।

गीतासु सङ्गत्यागिनो विरागिणोऽपि पक्षे कर्मानुष्ठानौचित्यमनुशिष्टमिति चेन्न । सर्वतो विरक्तेनानुष्ठातुमशक्यत्वात् कर्मणाम् । गीतावचनन्त्वविरक्तस्याप्यालस्यादिना त्यक्तु मिच्छतो वर्जनपरं न तु विरक्तस्यापि प्रवर्त्तनाभिप्रायं तद् । न हि देहभृतेत्यादिना च न विरक्तः कर्मसु प्रवर्त्त्यते । अननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात् अनुरक्तो हि शृङ्गग्राहिकया प्रवर्त्त्यते । न विरक्तः । विरक्तस्यक्वाप्यनधिकारात् । एतेन प्रत्यवायप्राप्ति चोद्यं च परिहृतं वेदितव्यम् ।

नन्वशक्यमित्युक्त्वाकर्म परिहरन् भवांस्ततोऽप्यशक्ये व्यापारे प्रवृत्त इव लक्ष्यते हन्त कुतः । उच्यते—मनसो वशेसर्वमिदं बभूव । नान्यस्य मनो वशमन्वियाय ।

भीष्मो हि देवः सहसः सहीयानिति (१२६)।
श्रुते मनो न जेतुं शक्यम्। अतएवक्षय्यजय्यौ
शक्यार्थे इति पाणिनीय सूत्रोदाहरणे जेतुं योग्यं
जेयं मन इति प्रत्युदाहृतन्न तु जय्यम्मन इत्यु-
दाहृतन्तदशक्यत्वात्। भवांश्चाहो मनो जेतुं
शक्यं ब्रवीतीति चित्रम्। अत्राह।

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करमिति ॥

अर्जुनेन पृष्टः श्रीकृष्ण उत्तरयाञ्चकार गीतासु।
यथा-

असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते इति।

अत्र वैराग्येण मनो जेतुं शक्यमिति व्यक्तम्।
अभ्यासस्य मनोजये माहात्म्यञ्चान्यत्रापि श्रू-
यते। यथा

सर्वेषां तु पदार्थानामभ्यासः कारणं परम्।
अनभ्यासेन मर्त्यस्य प्राप्तो योगोऽपि नश्यति।
अभ्यासेन स्थिरं चित्त मभ्यासेनानिलोवश इति
प्राणायामेनानिलवशीकारश्च मनोजय उपाय

---

(१२६) देवो मनो रूपो हि यतो भयानकस्ततो बलिनो-
ऽपि बलीयानित्यर्थः ॥

उक्तो येन कामादि जयो नितरांनाशक्यः । अन्यथा तद्विधानानुपपत्तेः । अतो यत्र कुत्र वा स्थले यस्मिन् कस्मिंश्चित् समये च कामाद्या ऽऽवेशो मनसि भवेत् तत्रैव तदैव मन्त्रहीनमपि प्राणायामं कुर्यात्तेन कामादीनां निवृत्तिर्ध्रुवं भविष्यति । विषयप्रत्यनीकचिन्तनं च तदुपायः । दोषदर्शनादुभयो रिति सांख्यसूत्रात् (१२७) ।

अन्यथा असाधनानुचिन्तने बन्धो दुष्परिहरः । यथोक्तं सांख्यसूत्रे-

असाधनानुचिन्तनं बन्धाय भरतवदिति (१२८) ।

वासिष्ठे चोक्तम्-

हस्तं हस्तेन संपीड्य दन्तैर्दन्तान् विचूर्ण्य च ।
अङ्गानङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ।
अध्यात्मविद्याधिगमः साधु सङ्गम एव च ॥
वासनानां परित्यागः प्राणस्पन्दनिरोधनम् ।
एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किलेति ।

---

(१२७) उभयोरात्मानात्मनोर्दोषदर्शनात् । आत्मनोदोषः सङ्गान्नरकपातो गर्भवासादिश्च । विषयदोषः परिणतिविरसत्वादिः तयोर्दोषयोर्दर्शनात् कामादयस्त्याज्या इत्यर्थः ॥

(१२८) भरतो नामनृपः प्रत्यासन्नमोक्षोऽपि तरसा प्रसूतां हरिणीं दृष्ट्वा हरिणशावकं पुपोष । तं विहाय नान्यमना

बभूव। मरणसमयेऽपि तद्गतमनाः प्राणांस्तत्याज। यस्मिन् यस्मिन् पदार्थे सदैवानुरागोऽस्ति तस्यैव देहान्ते स्मरणं भवति। अन्ते या मतिः सागतिरिति न्यायात।

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।

तं तमेवैति कौन्तेय सदा तद्भावभावित इति

भगवदुक्तेश्च। भरतो मृगदेहमेवाप। नावाप मुक्तिम्। अतः असाधनानुचिन्तनं मुमुक्षुणा न कार्यमित्यर्थः। यं यं वापि स्मरन्नित्यादि पद्यस्यार्थो यथा—यं यं भावं पदार्थं देवासुरकीटपतङ्गादिकं स्मरन् देहान्ते कलेवरं यस्त्यजति स तं तमेवैति प्राप्नोति। एवकारान्नान्यमित्यर्थः। ननु तर्ह्ययं जीवस्तत्तत् काले देवोत्तमान् कथं न स्मरेत् तत्राह—सदा तद्भावभावित इति, यस्मिन्यस्मिन् पदार्थे सदैवानुरागोऽस्ति तस्यैव देहान्ते स्मरणं भवति तस्मात्तं तमेति। देहान्ते तत स्मरणात्तत प्राप्तेरात्मपातो यतस्तस्मादात्मोद्धारार्थं मामेव भगवन्तं सेवेतेति। श्रीमद्भागवते—

तामेव मनसा गृह्णन् बभूव प्रमदोत्तमा।

सुता विदर्भ राजस्य राजसिंहस्य वेश्मनीति।

अस्य तामेवेत्यादि पद्यस्यार्थो यथा—स पुरञ्जनस्तां पुरञ्जनीं मनसा गृह्णन् संचिन्तयन् सन् देहान्तानन्तरं प्रमदोत्तमा बभूव। यतो यस्मिन्यस्मिन् पदार्थे सदैवानुरागोऽस्ति तस्यैव देहान्ते स्मरणं भवति। एतस्लक्ष्येणैव। तस्मात् सर्वेषु कालेष मामनुस्मर युद्धय चेत्युक्तं भगवता। अतः स्त्रीपुत्रादिप्रीतेः स्त्रीपुत्रत्वादि स्याद् मद्भक्तेस्तु मद्रूपप्राप्तिरिति। भवाभवयोरनुराग एव हि कारणम्। ब्रह्मज्ञानिनामपि भरतादीनां मृगानुरागान् मृगदेहत्वदर्शनात्तज्ज्ञानविधुराणां व्रजगवादीनां तदनुरागिणां

अर्के चेन् मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संप्राप्तौ को विद्वान् यत्नमाचरेदिति न्यायेन कालवशाद् विषयभोगादेवालं प्रत्ययात्मिकामास्तृप्तेरन्ते वैराग्योदय संभवात् किमिति कृच्छ्रेण वैराग्यार्थं मनः संयमः स्वीकरणीय इति च न वाच्यम् । न भोगाद्रागशान्तिर्मुनिवदिति सांख्यसूत्रात् (१२९) ।

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धत इति
श्रीमद्भागवताच्च ।

ननु विरक्तोऽपि भवान् मोक्षमिच्छति न वा । ओमिच्छामि । वस्तुतस्तु किमपि नेच्छामि । सर्वथेच्छात्यागायोगे तु मोक्षमिच्छामीत्यभिसन्धिः कुतः ।

कामः सर्वात्मना हेयो यदि हातुन्न शक्यते ।
मोक्षे कामः प्रकर्त्तव्यो मोक्षः कामस्य भेषजमित्युक्तानुसारात् ।

---

तद्भावप्राप्तेरपि । अत एव तदभावाद्बल्लवीनामिति शाण्डिल्य सूत्रोक्तेः ॥

(१२९) न मुनेरपि भोगाद्रागशान्तिः किम्पुनरन्यस्य । यथा कण्वसौभरि प्रभृतीनामिति ।

ननु वैराग्यमात्रेण कथं मोक्षलाभः सिद्ध्ये-दिति चेच्छृणु। हेयं दुःखमनागतमित्युक्तेर्वैराग्येण कर्मत्यागे आगामिकर्मणां तत्फलभोगस्य चासंभवात् कृतपूर्वकर्मणां च फलभोगे यथाकथंचित् संजाते एकविंशति दुःखात्यन्तप्रध्वंस १३० लक्षणस्य मोक्षस्य लाभसंभवात्।

सर्वे गुणमया भावाः पुरुषाव्यक्ताधिष्ठिताः।
एताः संसृतयः पुंसो गुणकर्मनिबन्धना इत्युक्तेः (१३१)।

अथ नित्यं दुःखसंभिन्नतया सुखस्य पुरुषार्थत्वमेव नास्तीति मतन्न समीचीनम्। सुखस्यानुकूलवेदनीयत्वात्। तस्माद् दुःखाभिनिवेशान्न सुखं त्यक्तुमुचितम्। न हि मृगाः सन्तीति शालयो नोप्यन्ते। न हि भिक्षुकाः सन्तीति स्थाल-

---

(१३०) सुखदुःखरागद्वेषभयाभिमान प्रमादोन्मादशोकमोहलोभमात्सर्येर्ष्यावमानक्षुत्पिपासाधि व्याधि जन्म जरामरणानीत्येकविंशति दुःखानीति ॥

(१३१) पुरुषो जीवः। अव्यक्तं प्रकृतिः। तयोर्धिष्ठिता अधिष्ठिता ये भावास्ते सर्वे गुणमयाः तद्रूपा एताः पुंसः संसृतयः संसारावलयः! कथंभूताः। गुणकर्मनिबन्धनाः। गुणानां लये भवविनाशः स्यादिति भावः ॥

त्यो नाधिश्रीयन्ते इति च न्यायात् । तदुक्तम्-

त्याज्यं सुखं विषयसङ्गमजन्मपुंसां
दुःखोपसृष्टमिति मूर्खविचारणैषा ।
व्रीहीञ्जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहितान् हितार्थीति ॥

इत्थं च यदा विषयसुखपक्षपातेऽपि न वैराग्य भाग्योदयस्तदा किमु वाच्यम् भगवद्भजनजन्यानन्दसन्दोहे मन्दोत् कण्ठस्य निर्वेदावेदिन इति

अत्राशङ्किते समाधानं योगसूत्रे दत्तम्-परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिन इति (१३२) ।

न सुखं देवराजस्य न सुखं चक्रवर्त्तिनः ।
यत्सुखं वीतरागस्य मुनेरेकान्तवासिन इत्युक्तेः ।

ननु वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा
मलिना जन्महेतुः स्याच्छुद्धा जन्मविनाशिनी ।

---

(१३२) निषेकगर्भजन्मादि बाल्यकौमारयौवनम् ।
वयो मध्यं जरामृत्युरित्यवस्थास्तनो र्नवैश्युक्तेर्देहे
सति परिणामस्यावर्जनीयत्वात् । पुनश्च-
पञ्चभ्य एव मात्राभ्यः प्रेत्यदुष्कर्मिणान्नृणाम् ।

शरीरं यातनार्थीय मन्यदुत्पद्यते ध्रुवम् ।
तेनानुभूय ता यामीः शरीरेणेह यातनाः ।
तास्वेव भूतमात्रासु प्रलीयन्ते विभागशः ।
यदि तु प्रायशोऽधर्मं श्रयते धर्ममल्पशः ।
तैर्भूतैः संपरित्यक्तो यामीः प्राप्नोति यातनाः ।
यामीस्ता यातनाः प्राप्य स जीवो वीतकिल्बिषः ।
तान्येव पञ्चभूतानि पुनरप्येति भागशः ।
तामिस्रादिषु चोग्रेषु नरकेषु विवर्त्तयन् ।
असिपत्रवनादीनि बन्धनच्छेदनानि च ।
विविधाश्चैव संपीडाः काकोलूकैश्च भक्षणम् ।
करम्भवालुकातापान् कुम्भीपाकांश्च दारुणान् ।
संभवांश्च वियोनीषु दुःखप्रायासु नित्यशः ।
शीतातपविघातांश्च विविधानि भयानि च ।
असकृद्गर्भवासेषु वासं जन्म च दारुणम् ।
बन्धनानि च कष्टानि परप्रेष्यत्वमेव च ।
बन्धुप्रियवियोगांश्च संवासं चैव दुर्जनैः ।
द्रव्यार्जनं च नाशं च मित्रामित्रस्य चार्जनम् ।
जरां चैवा प्रतीकारां व्याधिभिश्चोप पीडनम् ।
क्लेशांश्च विविधांस्तांस्तान् मृत्यु मेव च दुर्जयम् ।
यादृशे न तु भावेन यद्यत्कर्म निषेवते ।
तादृशेन शरीरेण तत्तत् फलमुपाश्नुते-

इत्याद्युक्तेः शरीरे सति तापानामनपायात् ।

पुत्राद्यासक्तचित्तानां तापश्रेणीति दृश्यत इत्युक्तेः संसारसंस्काराश्च तापमया एवेति ॥

अज्ञानसुघनाकारा घनाहङ्कारशालिनी ।
जन्ममृत्युकरी प्रोक्ता मलिना वासना बुधैः(१३३)
शुभैराप्नोति देवत्वमशुभैर्नारकीं गतिम् ।
उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभते ऽवशः ।
पुनर्जन्मान्तरं त्यक्त्वा स्थिता संभ्रष्टबीजवत् ।
देहार्थं ध्रियते ज्ञातज्ञेया शुद्धेति चोच्यते(१३४)।
शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासना सरित्।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ।
न तदस्ति जगत्कोशे शुभकर्मानुपातिना ।

---

(१३३) योषित् पुत्रादिविषयाभिलाषाश्च मलिना वासना द्रष्टव्याः । अज्ञानेन सुष्ठु घनीभूत आकारो यस्याः सा । घनी भावोऽत्र भ्रान्तिपरम्परा । सा चाऽसुरप्रकरणे गीतास्वभिहिता । प्रवृत्तिं च निवृत्तिं चेत्यादिभिरन्यायेनार्थ संचयानित्यन्तैः षड्भिः श्लोकैः । घनाहङ्कारोऽपि तत्रैवोदीरित। इदमद्य मया लब्धमित्यारभ्य ततो यान्त्यधमां गतिमित्यन्तैरष्टभिः । एतेन पुनर्जन्मकारकत्वं स्पष्टमुक्तं भवति । अत इयं मलिना वासना ॥

(१३४) ज्ञात ज्ञेया । ज्ञेयस्वरूपं गीतायां त्रयोदशाध्यायेऽधीयते । ज्ञेयं यत्तत्प्रवक्ष्यामीत्यारभ्य हृदि सर्वस्यधिष्ठितमित्यन्तैः षड्भिः पद्यैः । सा हि यथा संभ्रष्टानि ब्रीह्यादीनि पुनस्तस्य निष्पत्तये न प्रभवन्ति तथा पुनर्जन्महेतुभूतं काम्यनिषिद्धात्मकं कर्म परित्यज्य देहार्थं ध्रियते केवलं देहजीवनमात्रायोपयुज्यते इत्यर्थः ॥

यत्पौरुषेण शुद्धेन न समासाद्यते जनैः ।
मदातिशयसुप्तेन विश्वामित्रेण विप्रता ।
भूयो भूयः प्रयुक्तेन दुष्प्रापा तपसार्जिता ।
प्रणयेन यमं जित्वा कृत्वा वचनसङ्करम् ।
परलोकादुपानीतः सावित्र्या सत्यवान् पतिः ।
न सोऽस्त्यतिशयो लोके यस्यास्ति न फलोदयः ।
अतः कार्यः प्रयत्नस्तु सद्भिः शिवफलाप्तये ।

इत्याद्युक्तेर्मलिनवासनास्त्यक्त्वा शुभवासना संपालने काक्षतिरिति चेन्न ।

लोकवासनया जन्तोः शास्त्रवासनयापि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ।
ज्ञानवान् वासनाहीनः शान्तिमाप्नोति शाश्वतीम्
अज्ञानी वासनाधीनः क्लेशौघैः परिभूयत इति ।

वासनानां निन्दितत्वात् । शुभवासनाया अपि देहहेतुत्वात् । देहार्थम् ध्रियत इति त्वयैवोक्तच-रत्वाच्च । देहधारणेऽपि विरक्तस्योदासीनत्वान्न तदानुकूल्ये चेष्टा चेष्टा । पातकप्रचयवन् मम भूयः पुण्यपुञ्जमपि नाथलुनीहि । काञ्चनी भवति लोहमयी वा शृङ्खलैव पदयोर्न विशेष इति युष्माभिरेवोत प्रार्थनाच्च ।

ननु इदमेवाप्येतत् साधारणमन्नं यदिद म-

द्यते । स य एतदुपास्ते न स पाप्मनो व्यावर्त्तते मिश्रं ह्येतदिति श्रुतेः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्विषमिति गीताभ्यो ।
यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् ।
अधिकं योऽभि मन्येत स स्तेनो दण्डमर्हतीति
स्मृतेश्च भोजनादि व्यापारे विरक्तोऽपि बलात् प्रवर्त्तमानस्तैरेव हेतुभिः पुनर्भगवदाज्ञानुसारिण सत्कर्मणि वत न प्रवर्त्ततेति चित्रम् ।
वस्तुतस्तु विरक्ता विरक्तयोरुभयोः ।
कर्मण्यऽकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ।
इति भगवदुक्तिरेव ज्यायसी श्रेयसी च । ततोऽन्यथा तु शक्तिमतोऽनशनादिना तनुनिपातने ऐहिकं क्षुधादिदुःखसहनं महत् कष्टमामुष्मिकी च आत्मघातपातैकिनौ महती नरकयातनानपनोद्येत्युभयतो दुःखातिदुःखमेव । तथा च इतो भ्रष्टस्ततो भ्रष्ट इति न्यायेन मोक्ष मिच्छतस्ते विरक्तस्य महाननर्थापातो वृद्धिमिच्छतो मूलनाशवत् । क्षुत्प्रसहनं च महत् कष्टम् । यथोक्तम्–
वासुदेव जरा कष्टं कष्टं बान्धवविग्रहः ।

पुत्रशोको महाकष्टं कष्टात् कष्टतरं क्षुधेति ।
आयुषः पुरा स्वयं तनुत्यागं निषेधति च शातपथीश्रुतिः । यथा । तस्मादुह पुराऽऽयुषः स्वकामी न प्रेयादिति । स्वकामी आत्मेच्छुर्मोक्षेच्छुरिति यावत् । स्वकामीति विज्ञानेश्वर संमतः पाठः । स्वः कामीति च पाठान्तरम् ।

ननु भोजनादि लौकिकव्यापारे अविरक्तोऽपि भगवदनुरक्तः प्रसक्त एव, तेन च विक्षेपोऽशक्य परिहारः तथा च-

यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्य स्तादृगर्थ विचारण-

इत्युक्ते र्न विरक्त एव भोजनादि व्यासक्तो दूषणार्ह इति चेत्साधु सुधीः सुधीरस्माह । किन्तु लौकिकवैदिककर्मयोगिनां कर्मणां स्वरूपत एव विक्षेपरूपत्वान्न तत्र किंचिदभ्याख्यानमस्ति। भक्ति योगिनां तु ।

अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तमृगैरिव ।
न देशनियमस्तत्र न कालनियमस्तथा ॥
नोच्छिष्टादौ निषेधोऽस्ति श्रीहरेर्नाम्नि लुब्धकेत्याद्युक्तिबलाद्भोजनादि लौकिकापरिहार्य व्या-

पारकाले ऽपि भगवन्नामोच्चारणावर्जनाद्भजन-
सिद्धेर्न विशेषविक्षेपः। अथ कथंचिद्विक्षेपेऽपि
श्रवणादिनवधा भक्तियोगस्य क्रियात्मकस्यापि
भगवदेकतानत्वेन वस्तुतो विक्षेपानात्मकत्वात्
महापुण्यरूपत्वात् स्वयं च महापुण्यफलरूप-
त्वात् पापापनोदनत्वात् तेन अनिष्टानोपपत्तेः।
तथा च शाण्डिल्यसूत्रे–ताभ्यः पावित्र्यमुपक्र-
मात्। सुकृतजत्वात्परहेतु भावाच्च क्रियासु
श्रेयस्य इति। किंच-

ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहमिति
भगवत्प्रतिज्ञायां श्रद्धालूनां।

भोजनाच्छादने चिन्तां वृथा कुर्वन्ति वैष्णवाः।
योऽसौ विश्वम्भरो देवः स भक्तान् किमुपेक्षते।
येन शुक्ली कृता हंसाः शुकाश्च हरितीकृताः।
मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति।
अलब्धे वा विनष्टे वा भक्ष्याच्छादनसाधने।
अविक्लवमति भूत्वा हरिमेव धिया स्मरेदि-
त्यादिवचनादाश्वासनेन च भगवदनुरागिणां
नात्याहितं किंचित्। शुष्कविरागिणां त्वन्नचिन्ता
शरीरधारणनान्तरीयेति त एव विदाङ्कुर्वन्तु
हठधर्मिणः। यजमानं देवा ईश्वराः सन्तो जी-

वनार्थेऽनुगताश्चरुपुरोडाशाद्युपजीवन प्रयोजने नान्यथापि जीवितु मुत्सहन्तः कृपणां हीनां वृत्तिमाश्रित्य स्थितास्तच्च प्रशास्तुः प्रशासनात् स्यादिति बृहदारण्यकोपनिषद्भाष्ये श्रीशङ्कराचार्योक्ते र्यदा इन्द्रादयोऽपि जीवनार्थं प्रशासितृपरवशास्तदा किमु वाच्यं विरक्तोऽविरक्तोऽपि वा तत्र सर्वथा तत्परवश इति ।

यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने ।
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि ।
गोशतादपि गोक्षीरं प्रस्थं धान्यशतादपि ।
प्रासादादपि खट्वार्धं शेषाः परविभूतयः ।
यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् ।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ।
यावता स्यात् स्वनिर्वाहः स्वीकुर्यात्तावतो बुधः।
अधिके न्यूनतायां च च्यवते परमार्थत इत्यादीनि भक्तविरक्तयोः समानेऽपि आम्नाते-
व्यालालयद्रुमा वैते ऽप्यरिक्ताखिलसंपदः ।
यद्गृहास्तीर्थपादीय पादतीर्थ विवर्जिताः ।
अयं स्वस्त्ययनः पन्था द्विजाते र्गृहमेधिनः ।
यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषइति ॥
दातव्यमिति यद्दानं दीयते ऽनुपकारिणे ।

देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृत-
मित्याद्युक्तेर्दैवोपसादितेन वित्तेन भक्तो भगव-
न्तमर्चेत् सात्विकं दानं च कुर्यान्न पुनर्विरक्तो
भवादृश इति तु विशेषो भक्तजने न निन्हुतः।

वृत्त्यर्थन्नाति चेष्टेत सा हि धात्रैव निर्मिता।
गर्भा दुत्पतिते जन्तौ मातुः प्रस्रवतः स्तनौ।
धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्।
अधना अपि ते धन्याः साधवो गृहमेधिनः।
यद्गृहा ह्यर्हवर्याम्बुतृणभूमीश्वरा वरा-

इत्याद्युक्तिस्तु आयासेन धनोपार्जननिषेधपरा
न तु दैवोपसादितधनोपेक्षायान्तस्या स्तात्पर्यम्।
अत्यायासेन ये ह्यर्था स्ते अनर्था मता ममेत्युक्तेः

शरीरं पीड्यते येन सुशुभेनापि कर्मणा।
अत्यन्तं तन्न कुर्वीत अनायासः स उच्यत-

इत्यनायासस्यापि गुणत्वोक्तेश्च। एतेन-

अलब्धमीहेद्ध धर्मेण लब्धं यत्नेन पालयेत्।
आयास शतलब्धस्य प्राणेभ्योऽपि गरीयसः।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः।
अजरामरवत् प्राज्ञो विद्यामर्थं च चिन्तयेत्।
गृहीत इव केशेषु मृत्युना धर्ममाचरेद्-

इत्यादि त्वविरक्तभक्तपरमिति ।
श्रियो मे मा सन्तु क्षणमपि च माद्यद् गजघटा
मदभ्राम्यद् भृङ्गावलिमधुरसंगीत सुभगाः ।
निमग्नानां यासु द्रविणरसपर्याकुलहृदां
सपर्या सौकर्यं हरिचरणयोरस्तमयते इत्यादि
च विरक्तभक्तपरमिति व्याख्यातम्। अभक्तः सन्
विरक्तस्तु तुन्दपरिमृज एवेति निश्चितम् । ननु
भक्तिपक्षपाती भवान् किमिति कंचित् तुन्दपरि-
मृजइति पदप्रयोगेण परिहसतीति चेन्न ।
कौटिल्यव्यपेतस्य परिहासस्यादूषणात् ।
गुरुणापि समं हास्यं कर्त्तव्यं कुटिलं विनेति ।
स्मरणात् । परिजहसुश्च स्थले स्थले पतञ्जल्या-
दयो मुनय इति नैवापराद्धमस्माभिः ।

ननु विरक्तेन नित्यनैमित्तिकधर्मकर्मणामनु-
ष्ठाने मन्थरं भारवदुह्यमानेऽपि अविद्यास्मि-
ता (क) रागद्वेषाभिनिवेशाः पञ्चक्लेशा इति यो-
गशास्त्रे रागस्यापि क्लेशात्मकत्वेनाभिधानात्तस्य
हेयत्वात् रागलक्षणाया भक्तेः का कर्त्तव्यता

---

(क) आत्मानात्मनोस्तप्तायः पिण्डवत्संश्लेष इवावभा-
सोऽस्मिता । सुखतत्साधनलोभो रागः। दुःखतत्साधनजिहासा
द्वेषः ।

आपद्यत इति चेन्मैवं वोचः । रागलक्षणाया अपि भक्तेर्मुमुक्षुभिरप्यहेयत्वात् । यथोक्तं शाण्डिल्य सूत्रे–हेया रागत्वादिति ,चेन्नोत्तमास्पदत्वादिति । (१३५) ।

भगवद्रागस्य रागरूपेण स्वतो लोकेऽप्राप्तस्य
यत्र रागानवाप्तत्वात् प्रवृत्तिरुपजायते ।
शासनेनैव शास्त्रस्य सा वैधी भक्तिरुच्यत इति।
शास्त्रोक्तया प्रबलया तत्तन्मर्यादयान्विता ।
वैधी भक्तिरियं कैश्चिन् मर्यादामार्ग उच्यत इत्यन्वयमुखेन ।

यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः ।
आदौ विद्याप्तये पश्चात् कृतघ्नत्व निवृत्तये ।

---

(१३५) सांसारिकरागस्यैव क्लेशत्वाभिधानात्स एव,हेय उक्तः यथा सङ्गमात्रस्य न हेयत्वम् । किन्तु असत सङ्गस्यैव तद्वत् । कुतः । उत्तमास्पदत्वात् उत्कृष्टविषयत्वात् । तथा च धर्मशास्त्रम्–

सङ्गः सर्वात्मना हेयो यदि हातुन्न शक्यते ।
सङ्गः सत्सु प्रकर्त्तव्यः सन्तः सङ्गस्य भेषजमिति ।
असङ्गमजरं पाशमात्मनः कवयो विदुः ।
स एव साधुषु कृतो मोक्षद्वार मपावृत मिति ।

श्रीमद्भागवतं च । तस्माद् यथोत्तमानुगुणः सत्सङ्गो न हेयः । किन्त्वसतसङ्ग एव सङ्गात् संजायते काम इत्यादि निन्दनात् तथा संसारानुगुणो रागो हेयो न मोक्षानुगुण इत्यर्थः ॥

इति॥ कृतघ्नत्वनिवृत्तिनिमित्तं व्यतिरेकमुखेनच विधानाद्भगवद्भक्तेर्वैधीत्वादपि न हेयत्वमिति। ननुरागानुगाया भक्तेरभ्युपगमात् भगवदनुरागो नाप्राप्तोऽपि भवदभिमतः तस्याः पूर्वजन्मवासनाजन्यत्वाङ्गीकारात्। यद्वा वैध्या-अहेयत्वेऽपि तदर्पिताखिलाचारः सन् कामक्रोधाभिमानादिकं तस्मिन्नेव करणीयमिति नारदसूत्रेण भक्तिमार्गे कामक्रोधाभिमानादीनामप्यनु मोदनात् तन्निषेधकशास्त्रविरोधात् विधिशास्त्रात्तु निषेधशास्त्रस्य बलत्वात्।

श्रुतिस्मृतिपुराणोक्तपञ्चरात्रविधिं विना।
ऐकान्तिकी हरेर्भक्तिरुत्पातायैव केवलमिति॥

निन्दावचनाच्च। रागानुगाया भक्तेस्तु रागात्मकत्वाद्धेयत्वमेव। श्रुतिस्मृती ममैवाज्ञे इति शास्त्रेण प्रदिष्टयेर् विधिनिषेधयोरागात्मिका भक्तिवादिनाह्यसंप्रतिपत्तेः (१३६)।
भगवदाज्ञोल्लङ्घनं च वैष्णवत्वव्याघातकमेव प्रत्युत श्रूयते यदा; तदा कथं पुनर्विधिनिरपेक्ष-

(१३६) विधि निषेधौ च–सत्यान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। स्वाध्याय प्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्यान्न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि

कर्माणि तानि सेवितव्यानि। नेतराणि। ये के चास्मच्छ्रेयांसो ब्राह्मणास्तेषामासने त्वया न प्रश्वसितव्यम्। श्रद्धया देयम्। अश्रद्धया देयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ये तत्र ब्राह्मणाः समदर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्यु र्यथा ते तत्र वर्तेरंस्तथा तत्र वर्त्तेथाः। एष आदेश एष उपदेश एषा वेदोपनिषदेतदनुशासनमेव मुपासितव्यम्। एव मुचैतदुपास्यमित्यादि तैत्तिरीयोपनिषदादि श्रुत्यादिषु द्रष्टव्यौ।

आदेश ईश्वराज्ञा। उपदेशः अज्ञातज्ञापनात्मकाप्राप्तप्रापणरूपः प्रसिद्ध एव। वेदोपनिषन्नाम वेदसिद्धान्तः। अनुशासनन्नाम नियमादेशः शिष्टाचारो वा। उपासितव्यन्नाम एव मेवधर्म उपासनीय इति। एवमुचैतदुपासितव्यमित्यस्यार्थस्तु एवं प्रकारेणैव ज्ञातव्यमिति।

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यं हुरोऽगादिति मन्त्रांशोपरि यास्कश्चाह निषेधविशेषान्—सप्तैव मर्यादाः कवयश्चक्रुः। तासामेकामप्यभि गच्छन्नंहस्वान् भवति स्तेयम्। तल्पारोहणम्। ब्रह्महत्याम्। भ्रूणहत्याम्। सुरापानम्। दुष्कृतस्य कर्मणः पुनः पुनः सेवाम्। पातकेऽनृतोद्यमिति।

ननु याज्ञवल्क्यादि प्रोक्तासु स्मृतिष्वपि तत्प्रपञ्चः पर्यवेक्षणीय इति।

विधिनिषेधसंक्षेपस्तु स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातु चित्। सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्करा इति निर्दिष्टः।

तयो तया रागात्मिकया भक्त्यामुक्तिसिद्धिरिति। ननु आज्ञायैवं गुणान् दोषानित्यादिना दत्तोत्तरमेतदिति । न । वैधी भक्त्यामेव तदवकाशा दिति चेन्न । विध्यात्मक प्रेरणा तु यस्य स्वतो वासनातः प्रवृत्ति र्नास्ति तद्विषयैव। तथा नित्यनैमित्तिकादि कर्मविधिश्चापि तद्विषय एव । रागात्मकभक्तिमतां तु दुष्टचित्तेनाप्यनुकरणमात्रेण तादृशोत्तमफलप्राप्तिश्रवणात् । यथा धात्रीत्वानुकरणेन पूतनायाः । तदुक्तं ब्रह्मणा । एषां घोषनिवासिनामुत भवान् किं देवरातेति न श्चेतो विश्वफलात्फलं किमपरं कुत्राप्ययन् मुह्यति । सद् वेषादिव पूतनापि सकुला त्वामेव देवापिता यद्धर्मार्थ सुहृत्प्रियात्मतनय प्राणाशयास्त्वत्कृते इति (१३७) । अन्यच्च–

---

( १३७ ) येषां धर्मादयस्त्वत कृते त्वदर्थमेव तेषां घोषनिवासिना मुतभवानपि सर्वैश्वर्यप्रदः परमेश्वरोऽपि विश्वफलात् सर्वफलात्मकत्वात ततः परं फलं किम् राता दास्यतीति न श्चेतः कुत्रापि अयत सर्वत्र गच्छत विचारयदेव मुह्यति । तेषा मृणग्रस्ते त्वयि तव पुत्रत्वात् तदृग्रस्तोऽहमेव भविष्यामीतीदम्मजो मोहकारणमिति ब्रह्मणो भाव इत्यर्थः । ननु माशुचस्त्वं मामेव दत्त्वा ऋणमुक्तो भविष्यामीति विमृशेति चेत्तत्राह–सद् वेषादिति । सतां भक्तानां यो वेषस्तदनुकरणम्

पूतना लोकबालघ्नी राक्षसी रुधिराशना ।
जिघांसयापि हरये स्तनं दत्त्वाऽऽप सद्गति
मिति (२३८) ।
अहो बकी यं स्तनकालकूटं जिघांसया पाययदऽ-
प्यसाध्वी । लेभे गतिं धात्र्युचितां ततोऽन्यं
कं वा दयालुं शरणं व्रजेमेति ।

---

तस्मात् तेषां वेषानुकरणमात्रेण महापापिष्ठा सर्वबालघ्नी पूतना त्वामेव प्रापिता प्रापिता । तर्हि घोषजनसंबन्धिनाम-प्यात्मानं प्रदास्यामीति चेत्तत्राह—कीदृशी पूतना सकुला ब-कासुराघासुरसहिता त्वामापिता अलस्तदृणनिवृत्ति र्न दृश्यते। भगवतापि स्वमुखेनैवोक्तम् । न पारयेऽहं निरवद्यसंयुजामि-त्यादीति ॥

( १३८ ) कर्मणा लोकबालघ्नी जात्या राक्षसी भोजने रुधिराशना जिघांसया न तु प्रेम्णा स्तनं दत्त्वा सद्गतिमाप। किम्पुनः श्रद्धया भक्त्येति । तादृशरुचिमति मोक्षानन्दस्यापि वाञ्छा नास्ति किमुत परमघृणास्पदस्य कुकर्मानन्दस्य। तदेव दर्शयति—

मत्सेवया प्रतीतं च सालोक्यादि चतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः किमन्यत् कालविप्लुतम् ।
न किञ्चित् साधवो धीरा भक्त्या ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवमिति ।
स सुरासुरगन्धर्वं सयक्षो रगराक्षसम् ।
जगद्वशे वर्त्ततेदं कृष्णस्य स चराचरमिति ।

निर्दिष्टोऽपि त्रिजगदधीशो यः श्रीकृष्णो यदा गोकुलकुलजरतीनां परुषा वागपि यथा प्रमोदयति । स्तुतिरपि मुनीनामवनतशिरसां सखे न तथेति । रागानुगायै स्पृहयन् वश्योऽस्मि केवलं प्रेम्णेति भक्तपारवश्यमाचष्टे तदा कथं कश्चिद्वक्तुमर्हति सा रागानुगा हेयेति । उक्तं चा नन्दगिरिणा—उभयोरपि सेनयोः सन्निहितयोर्मध्ये मदीयं रथं स्थापयेत्यर्जुनेन सारथ्ये सर्वेश्वरो नियुज्यते किं हि भक्तानामशक्यं यद्भगवानपि तन्नियोगमनुतिष्ठति । युक्तं हि भगवतो भक्तपारवश्यमिति।सुग्रीवं प्रति वात्सल्येन श्रीरामवचनं यथा—

त्वयि किञ्चित् समापन्ने किं कार्यं सीतया मम ।
भरतेनानुकूलेन लक्ष्मणेन यवीयसेति—

विभीषणं प्रति—

मित्रभावेन संप्राप्तं न त्यजेयं कथंचनेति ।

श्रीकृष्णस्यापि वात्सल्य वचो यथा—

ऋणमेतत्प्रवृद्धं मे हृदयान्नापसर्पति ।
यद्गोविन्देति चुक्रोश कृष्णा मां दूरवासिनमिति ।

महता पुण्यपुञ्जेन रागानुगाया हि प्रादुर्भावः । यथोक्तं श्रीमद्भागवते—

इत्थं सतां ब्रह्मसुखानुभूत्या दास्यं गतानां परदैवतेन ।
मायाश्रितानां नरदारकेण साकं विजह्रुः कृतपुण्यपुञ्जाइति ।
यत्पादपांशुर्बहुजन्मकृच्छ्रतो धृतात्मभिर्योगिभिरप्यगम्यः ।
स एव यद्दृग्विषयः स्वयं स्थितः किं वर्ण्यते दिष्टमहो व्रजौकसामिति ।

अस्य यत्पादेत्यादिश्लोकस्यार्थो यथा-यस्य श्रीकृष्णस्य पादपांशुः पादरजो पादपांशुः योगिभिरप्यगम्योऽलभ्यः । ननु तद्गुत्वा-

इत्थं स्तुतफलत्वान्न रागानुगा भक्ति र्हेया। श्रुतिस्मृतिपुराणेत्यादि वचनं तु वीरवैष्णवादि क्रियमाण भक्तिनिषेधपरम्। वीरवैष्णवोदाहरणं च ब्रह्मवैवर्त्तीयकाशी मूलरहस्ये केदारमाहात्म्ये यथा वाष्कलाख्यस्य दुष्टवैष्णवस्य बचने-

देहधर्मस्तु मिथ्यैव तत्कार्यं सङ्गमादिकम्।
यथेच्छं स्त्रीषु भोगश्च कर्त्तव्य स्तेन किं भवेत्।
मिथ्या शरीरबाधेय मिच्छारूपा क्षणात्मिका।
अस्माकमनया दोषः कोऽस्ति सत्संप्रदायिनाम्।
पञ्चयज्ञपितृश्राद्ध नित्यनैमित्तिकादयः।
त्याज्याःसर्वाः संप्रदायस्त्वनुक्तोऽपि समाचरेत्।
स्त्रीणामपि न दोषोऽस्ति सम्प्रदायिषु सङ्गमात्।
मत्स्यमांसादिकं ग्राह्यं सम्प्रदाया विरोधतः।

---

दुर्लभ्यत्वेन न तन्माहात्म्यहानि स्तद्वत। तत्राह-कथं भूतै र्योगिभिः। बहुजन्मकृच्छ्रतो धृतात्मभिः बहुजन्मसु तपः समाध्यसङ्गकृच्छ्रतो धृतश्चासावात्मा मनो यै स्तै स्तेषां परमाणुभूतैर्मनोभिरप्यलभ्यः। स श्रीकृष्णो येषां ब्रजौकसां दृग्विषयश्चर्मचक्षुर्गोचरो जातः। किं तेषां प्रयत्नाधिक्यान् न हि न हि स्वयं स्थितस्तेषामनुरागादतस्तद्भाग्यं किं वर्ण्यते। ब्रजौकसामिति सामान्यपदेन गवादीनामपि ग्रहणम्। सुखविशेषभावादिति।

भाषा प्रबन्धा स्त्वधिका वेदेभ्य इति निश्चयः ।
इत्यादिषु । तदर्पितेत्यादि नारदसूत्रे तु निषिद्ध-कामादीनामनुमोदने अतात्पर्यात् न तत्र दोषः। कीदृशानां कामादीनामनुमोदनमिति चेच्छ्रूय-ताम् ते यादृशानाम् । तथा हि—कामना यथा-भगवान् कदा मे दृष्टिगोचरो भविष्यतीति । क्रोधो यथा—एतावन्तं कालं वृथैवोपेक्षितोऽस्मी ति । अभिमानो यथा-त्रिलोक्यां नैतादृशः को-ऽपि देवो भक्तवत्सलोऽस्ति यथा मम स्वामी श्रीकृष्णइति । एवमादि अन्यदप्यूह्यम् ।

ननु शुभफलत्वमात्रोपष्टम्भेन रागानुगायाः प्राशस्त्ये भगवति द्वेषादिनापि शुभफलोपलम्भ-स्मरणात् न केवलं द्वेषादयोऽपि भवतानुमोद-नीयाः स्युः । अपि तु अनुरागतोऽपि तेषाम् प्रशस्तत्वापत्तिः । भवन्ति प्रमाणानि चात्र श्रीमद्भागवते । यथा—

यथा वैरानुबन्धेन मर्त्यस्तन्मयतां मियात् ।
न तथा भक्तियोगेन इति मे निश्चिता मति-रिति (१३९) ।

---

(१३९) अयं भावः । भक्तियोगस्तावद्भवति दुर्लभः । आदौ तत्प्रादुर्भावे ऽप्यपराधादयः खला दुर्निवाराः । तन्निवृत्त्य-

निभृतमरुन्मनोऽक्ष दृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात्। स्त्रियउर-

भ्यासे पुनः स्वभावशिथिलोऽयं लोकः। कृष्णसुखानुभवाभावा त् विषयसुखानुभवाच्च। श्रीभगवद्रूपानुभवस्तु विषयसुखत्यागादेव भवति। स त्यागस्तु मुनीनामप्यसुकरो भक्तिकृपापात्राणाम्। मरणभयार्त्तानां तु भक्तियोगेन भगवदाकारा वृत्ति र्भवति। मर्त्यानां हि मरणभयेनाशु सा तथा जायते यथा तमसावृते गृहे केनापि विधिना सर्पं दृष्टवतस्तदनन्तरं मरणभयेन सर्वेषु गृहपदार्थेषु रज्ज्वादिष्वाशु सर्पाकारावृत्तिर्भवति। न पुनः स्नेहात पुत्राद्याकारा तादृशीरत्युत्कटा वृत्तिर्भवती त्यनेन हेतुना वस्तुतो निन्द्यस्यापि वैरानुबन्धस्य तदाकारवृत्त्या स्तुतिमात्रम् न तु श्रेष्ठत्वेनानुष्ठानेऽप्यभिसंधिः।

ब्रह्महापि नरः पूज्यो यस्य स्याद्विपुलं धनमिति वत्।

अन्यथा वचनान्तरविरोधो दुष्परि हरः। तदुक्तम्—

आसीनः संविशंस्तिष्ठन् भुञ्जानः पर्यटन्महीम्।
चिन्तयानो हृषीकेशमपश्यत्तन्मयं जगदिति।
स (पौण्ड्रको) नित्यं भगवद्ध्यान प्रध्वस्ताखिल बन्धनः।
बिभ्राणश्च हरे राजन् स्वरूपं तन्मयोऽभवदिति।
स (कंशो) नित्यदोद्विग्नधिया तमीश्वरं
पिबन्वदन्वा विचरन् स्वपञ्छ्वसन्।
ददर्श चक्रायुधमग्रतो यत-
स्तदेव रूपं दुरवाप मापेत्यादि वचनैः।

प्रमाणानीति बहुवचनं पूरणीयम्।

हिरण्यकशिपुत्वे च रावणत्वे च विष्णुना।
अवापनिहतो भोगानप्राप्यान ऽमरैरपि।

गेन्द्रभोगभुजदण्डविषक्तधियो वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाइति चेति (१४०) चेन्न।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्य सूयकाः।
तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमांगति मिति गीता विरोधात्। जीवन् मुक्ता अपि पुनर्बन्धनं यान्तीत्यादि वचनानुसारेण यदा द्वेषादयो मुक्तानामपि नरकपनतहेतवस्तदा किं पुनर्वाच्य

---

न लब्धं तत्र तेनैव निहतः स कथं पुनः।
संप्राप्तः शिशुपालत्वं सायुज्यं शाश्वते हरा-
वित्यादिना मैत्रेयप्रश्नेन विष्णुपुराणेऽस्य प्रपञ्चो द्रष्टव्यः। नेह प्रतन्यते विस्तरभयात्।

(१४०) श्रुतिस्तुतिपद्यमिदम्। मुनयो यत्परं तत्त्वं ब्रह्म हृदि उपासते। तदरयोऽपि कंसपौण्ड्रकादयोऽपि स्मरणा द्ययुः वयमपि तदेव यास्यामो यतोऽतो वयन्ते च सर्वे तव समाः कृपाविषयतयेत्यन्वयः। कथंभूता मुनयः। निभृतमरुन् मनोऽक्षदृढयोगयुजः। निभृतानि संयमितानि मरुत्प्राणो मनः प्रसिद्धमक्षाणीन्द्रियाणि यैस्ते च दृढं योगं युञ्जत इति दृढयोग युजश्च ते इति ते। कथंभूताः स्त्रियः। उरगेन्द्रोऽनन्तस्तस्य

भोगो देहः । उरगेन्द्रभोगसदृशयोर्भुजदण्डयोर्मध्ये विषक्ता धीर्यासान्ताः । सर्वाङ्गोपासिन्यः पतिव्रता इति भावः । कथंभूता वयं श्रुतयः । समदृशः सर्वेषु चराचरेषु चन्द्रेन्द्रादिषु समा परमेश्वर दृष्टिर्या सां ता व्यभिचारिण्य इत्याशयः । पुनः । अङ्घ्रिसरोजं सुष्ठु धयन्ति दधतीति वाताः । एकाङ्गोपासिन्य इत्यभिप्रायः । अत्र अयन्निष्कर्षः । इत्थंभूतस्तव स्मरणानुभावो यः सर्वानपि तांस्तास्त्वां प्रापयतीति। यद्यपि भगवत् प्रसादो गोपीनामसाधारणोऽस्ति । नायं श्रियोऽङ्गेत्याद्युक्तेः । तथाप्यत्र तन्मध्यपतितस्तद् ग्रहणेन गृह्यत इति न्यायान्मुन्यादीनां मध्ये कथितानां गोपीनामपि श्रीकृष्णस्मरणजन्यब्रह्मानन्दसुखसाम्यं भवतु नाम किन्तु भजनानन्दसुखाधिक्यन्तेभ्यस्तासामस्त्येव । तथा चानुरूपं निदर्शनम्--

अहल्या द्रौपदी सीता तारा मन्दोदरी तथा ।
पञ्च कन्याः स्मरेन्नित्यं सुप्रभातं दिने दिने इति ।

यस्मिन्यस्मिन् प्रभाते स्मरेत् तत्तत् प्रभातीयं दिनं सुप्रभातं भवेदिति श्लोकस्यास्य भावः । अत्र अहल्यादीनां मध्ये सीतापि पठिता एतावता ताभिः सह सीतायाः किं साम्यं भवति । न । किन्तु कन्या स्मरणफलदातृत्वेन साम्यमुक्तम् । सीता तु साक्षात् लक्ष्मीरेव । अहल्याद्यास्तु तदंशांशा एवेति । निदर्शनानन्तरं च यथा—कर्मादौ पञ्चदेवता पूजाविधौ गणेशादीनां मध्ये विष्णुरप्येको देव उक्तः । एतावता किं विष्णुना तेषां साम्यमायाति । न । किन्तु फलदातृत्वेन कर्माङ्गत्वात् साम्यमात्रं विवक्षितम् । अन्यदा तु विष्णुरीश्वरः । गणेशाद्यास्तु तदंशा एवेति दिक् ॥

मन्येषामिति। तथा च शाण्डिल्यसूत्रम्—द्वेषादयस्तु नैवमिति (१४१)।

ननु। तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा।
स्नेहात् कामेन वायुञ्ज्यात्कथञ्चिन्नेक्षते पृथगिति श्रीमद्भागवतीय विधिवाक्यस्य का गतिरिति चेदत्र समादधते वैष्णवाः। यावन्मान्न प्राप्नुवन्ति तावदेवाऽधमांगतिं प्रद्विषन्तो यान्तीति प्रस्तुतगीतावचनतात्पर्य्यमिति। तदुक्तम्—द्विषन्तमपि भगवान् दण्डपूर्वकमनुगृह्णातीति दक्षाख्यायिकामुखेनोक्तमिति। अन्यथा—
सिद्धलोकस्तु तमसः पारे यत्र वसन्ति हि।
सिद्धा ब्रह्मसुखे मग्ना दैत्याश्च हरिणा हता इति ब्रह्माण्डपुराणीयवचनस्यागतेः। एतदेव हृदि कृत्वोक्तमभियुक्तैः।

---

(१४१) तुकारोऽसंभववाचकः। यस्माद् द्वेषादयोऽनुरक्तभक्तानामसंभाविता अतो द्वेषभयच्छलादयस्तु नैवसंभवन्ति भक्तिलिङ्गानीति। भगवत्यपराधा जीवन् मुक्तानामपि यदा पुनर्बन्धनहेतवस्तदा किमु वाच्यम् भगवति द्वेषादयो नरकपतननिमित्तानीति। नोज्जिह्मायन्तो नरकं पतामेति श्रुतेः। स्वादुः किलायं मधुमानुतापमिति, अमृतस्यैष सेतुरित्यादि श्रुतिभिर्यदा परमेश्वरोऽनुकूलवेदनीयः। प्रदिष्टस्तदा महामूढमन्तरेण स कस्य प्रतिकूलवेदनीय आभासेतेति।

आनुकूल्यविपर्यासाद्भीति द्वेषौ पराहतौ ।
यदरीणां प्रियाणां च प्राप्यमेकमिवोदितम् ॥
तद्ब्रह्मकृष्णयोरैक्यात् किरणार्कोपमाजुषोः ।
ब्रह्मण्येव लयं यान्ति प्रायेण रिपवो हरेः ॥

केचित् प्राप्यापि सारूप्याभासं मज्जन्ति यत्सुखे इति । केचित्तु द्वेषादिमन्तो दण्डिताः पुनः प्रेम लक्षणां भक्तिं कृत्वा मुच्यन्ते। तदुक्तं स्वप्नेश्वरेण—शिशुपालस्य तु द्वेषात् स्मरणं ततः पराभक्तिस्ततो मुक्तिरित्येव क्रम इति । अत्रायन्निर्गलितोऽर्थः—अयं हि भगवान् कीर्त्तितः संस्मृतश्च द्वेषाद्यनुबन्धेनाप्यखिलसुरासुरादि दुर्लभफलं यर्हि प्रयच्छति तर्हि किमुवाच्यं सम्यग् भक्तिमतामपि यद्यपि, तथापि द्वेषादिस्थले दण्डयित्वैवेति नियमात् प्रेमाभक्तिरेव कर्त्तव्येति।

द्वेषादिनापि परिणामे कल्याणं तत्रैव यत्र कौटिल्योज्झितमेव तद्द्वेषादीति सुधीभिर्विभावनीयम् । ननु शाठ्येनापि नमस्कारं कुर्वतः शार्ङ्गधन्विनः शतजन्मार्जितात् पापान्मुच्यते नात्र संशय इति विष्णु धर्मीयवचने जाग्रति कः कौटिल्ये नापि भगवति द्वेषादि प्रतिषेधेदिति । न शाठ्यकौटिल्ययो विवेकेन। हन्त त्वयार्थापरिज्ञा-

नात्। कस्तर्हि तदर्थविवेकः। उच्यते—श्रुतशास्त्राणामप्यपराधदोषेण निमित्तेन भगवति श्रीगुरौ तद्भक्तादिषु चान्तरऽनादरादावपि सति बहिस्तदर्चनाद्यारम्भः कौटिल्यम्। भगवति अन्तरादराभावे सत्यपि गुरुमहाजनादरप्रदर्शनाद्यभिसन्धिना बहिस्तदर्चनादिभिः परवञ्चनञ्च शाठ्यमिति विवेकः।

अतएव क्वचिदकुटिलमूढानां भक्तितत्त्वमजानतां भजनाभासादि नापि कृतार्थत्वमुक्तम्। कुटिलात्मना तु दुर्योधनादीनामिव बाह्याडम्बरैर्नानोपचारादिनापि पूजनादिभि र्न सिद्धिर्भवति (१४२)।

---

(१४२) क्वचिन्नाकुटिलात्मनां भक्त्याः स्वाभासेनापि सर्वपापक्षयपूर्वकस्वर्गादिगति प्रापकत्वं पुराणेषु पठ्यते—तथा हि-यथा कयोश्चित् मालिनोर्मदिरोन्मत्तयोर्धृत कुचीरखण्डदण्डयोर्नृत्यतो र्हरिमन्दिरे ध्वजारोपणपुण्यफलप्राप्त्या व्याधहतस्य मन्दिरो परि परितः परिभ्रम्य परिपत्य संस्थितस्य गृध्रस्याधः प्राप्तस्य कण्ठागतप्राणस्य कुक्कुरमुखगतस्य चान्यैः कुक्कुरैरनुद्रुतावारवधायां पलायितकुक्कुरेण मुहुः पलायनावृत्त्या भगवन् मन्दिरपरिक्रमपुण्यफल प्राप्त्या च स्वर्गगति प्राप्तिः। श्रीगवद् गृहदीपतैलं पिबन्त्याः कस्याश्चित् मूषिकाया दैवान् मुखोद्धृतवर्त्तौ दीपे समुज्ज्वालिते सति मुखदाहेन मरणाद्भा-

तस्मात् सर्वतो विरक्तस्यापि न भगवति वि-
रागः साधुः ।

अशीतिंचतुरश्चैवलक्षांस्ताञ्जीव जातिषु (१४३) ।
भ्रमद्भिः पुरुषैः प्राप्तं मानुष्यं जन्म पर्यायात् ।
प्राप्यापि दुर्लभतरं मानुष्यं विबुधेप्सितम् ।

---

जीत्वं प्राप्य दीपदानादिलक्षणभक्तिनिष्ठाप्राप्तिस्तथा चान्ते परमधामसमासादनं च विष्णुधर्मादावुदाहृतं न तु तथाविध-फलत्वं निर्गुणब्रह्मज्ञानस्यापीति । यथोक्तम्—

प्रदक्षिणाकारतया गतस्यापीदृशं फलम् ।
संप्राप्तं विबुधाः श्रेष्ठं किं पुनः सम्यगर्चनादिति ।
शालग्रामाधिका चैव न कस्यापि प्रदक्षिणा ।
क्रमतः पादविन्यास यावन्तः सर्वतो दिशम् ।
तावन्तः कुलसंभूता लोके तिष्ठति शाश्वते इति च
विष्णु धर्मे ॥

(१४३) स्थावरं विंशतेर्लक्षं जलजन्नव लक्षकम् ।
कूर्माश्च रुद्रलक्षं च दशलक्षं च पक्षिणः ।
त्रिंशल्लक्षं पशूनां च चतुर्लक्षं च वानराः ।
ततो मनुष्यतां प्राप्य ततः कर्माणि कारयेदिति ।
चतुरशीति लक्षयोनय उक्ताः । विष्णु पुराणे च—
स्थावराः क्रिमयोऽब्जाश्च पक्षिणः पशवो नराः ।
धार्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् ।
सर्वेऽप्येते महा भागा यावन् मुक्तिसमाश्रयाः ।
सहस्रभागः प्रथमाद् द्वितीयोऽनुक्रमात्तथेति—
योनिक्रमाद्युक्तम् ।

यै राश्रितो न गोविन्दस्तैरात्मा वञ्चितश्चिर-
मित्यादि नारदीयाद्युक्तिः ।

एतस्मादेव मानुष्यदौर्लभ्याद्धेतोश्च विषये-
भ्यो ह्यविरज्य तेष्वेव प्रसक्तस्य भगवद्भजनाभा
वो न समञ्जसः। विषयोपभोगो हि प्राणिमात्र-
साधारणः । पशुपक्षिकीटादयोऽपि स्व स्वजाति
षु मिथुनीभूय रममाणा निजनिजोचिताहारेण
परितृप्यन्तो हृष्यन्तो दृप्यन्तो दृश्यन्ते । भगव-
दाराधनाधिकारी तु मनुष्य एव। तच्चाहो मनु-
ष्यत्वं सुदुर्लभम् । यथोक्तं प्रह्लादेन-

कौमार आचरेत् प्राज्ञो धर्मान् भगवतानिह ।
दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदमिति (१४४)

---

(१४४) इह मानुषे जन्मनि प्राज्ञोधर्मानेवाचरेत ।
न तु विषयार्थं प्रयासान् । अत्यायासेन ये ह्यर्थास्ते अनर्था
मता समेत्युक्तेः । तत्रापि भागवतानेव धर्मान्नतु वर्णाश्रमवि-
हितान् । तत्रापि कौमारे एव । कुतः । देहत्वाध्रुवत्वात । ननु
तेन देहेन किम् । तत्राह—अध्रुवमपि मानुषं जन्म अर्थदम् ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयादिति भगवद्वचनात् ।
नन्वस्मिञ्जन्मनि विषयसाधकान् वर्णाश्रमधर्मान् कृत्वा जन्मा-
न्तरे किं तेषामाचरणन्न स्यात । तत्राह । मानुषं जन्मदुर्लभम् ।
समशुभाशुभकर्मकार्यत्वात । पुण्येन पुण्यं लोकं नयति पापेन
पापमुभाभ्यां मनुष्यलोकमिति श्रुतेरिति । श्रीदत्तात्रेयोऽपि ।

लब्ध्वा सुदुर्लभमिदं बहुसंभवान्ते मानुष्यमर्थदमनित्यमपीह धीरः। तूर्णं यतेत न पतेदनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्यादिति।

श्रीमद्भागवते चतुर्थस्कन्धे-

स वञ्चितो बतात्मध्रुक् कृच्छ्रेण महता भुवि।

लब्ध्वापवर्ग्यं मानुष्यं विषयेषु विषज्जत इति। गीतासु-

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।

आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मन इति।

भारते च-

आत्मैव यदि नात्मानमहितेभ्यो निवारयेत्।

तस्माद्धिततरः कोऽन्यो जनस्तं वारयिष्यतीति॥

स्कान्दे-अयमात्मा प्रियो बन्धुरयमात्मामहद्धनम्।

धर्मार्थकाममोक्षाणामयमात्मार्जकः पर इति।

गारुडेऽपि-एकस्मिन्नप्यतिक्रान्ते मुहूर्त्ते ध्यानवर्जिते।

दस्युभिर्मुषितेनैव भुक्तमाक्रन्दितुं चिरमिति।

जीवने कृष्णभक्तस्य वरं पञ्चदिनानि च।

न तु कल्पसहस्राणि भक्तिहीनस्य केशव इति

विष्णुधर्मोत्तरे। श्रीमद्भागवते-

तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्यधः। तल्लभ्यते दुःखवदन्यतः सुखं कालेन सर्वत्र गभीररंहसेति।
अस्य तस्यैवहेतोरित्यादिपद्यस्यार्थो यथा-कोविदो हिताहितवित् तस्यैव भगवत्प्राप्तिकारणस्य भक्तियोगस्यैव हेतोर्निमित्तं प्रयतेत प्रकृष्टं यत्नं कुर्यात्। न कदापि विषयप्राप्तये इति भावः। यतो यद्भक्तिसुखमुपर्यधश्च भ्रमतां स्वर्गनरकमध्ये भ्रमतां भ्रमद्भिर्न लभ्यते। भ्रमतामिति षष्ठी तृतीयार्थे द्रष्टव्या।

तत्सुखं विषयात्मकं तु सर्वत्रश्वखराऽजयोनिष्वप्यन्यतः स्वकर्मणोदुर्निवारवेगेन कालेन लभ्यते दुःखात । अयंभावः—दुःखमनिच्छता पुरुषेण तन्निवारणपरेणापि कर्मणा सर्वत्र तदनुभूयते तथासुखमपि । अतस्तदर्थन्न प्रयतेत प्रत्युत आत्मनो मृत्यु रूपन्तत्पश्येदिति ।

पुनश्च—दैवेन ते हतधियो भवतः प्रसङ्गात सर्वाशुभोपशमनाद् विमुखेन्द्रियार्थे । कुर्वन्ति कामसुखलेशलवायदीना लोभाभिभूतमनसोऽकुशलानि शश्वदिति ।

अस्य दैवेनेत्यादि श्लोकस्यार्थो यथा—
परमेश्वरस्य प्रसङ्गाच्छ्रवण कीर्तन स्मरण रूपाद्विमुखेन्द्रिया ये शश्वन्निरन्तरमकुशलानि भयप्रदानि कर्माणि कुर्वन्ति । कस्मै प्रयोजनाय—कामसुखलेश लवाय। यथाऽतिक्षुद्रा मधुलवाय दुर्ग वृक्षेषु स्थितमधुमक्षिका गृहच्छेदनाय प्रयासं कुर्वन्तीति ।

हित्वात्यायासरचिता गृहापत्यसुहृच्छ्रियः ।

तमो विशन्त्यनिच्छन्तो वासुदेव परांमुखा इति । अस्य हित्वेत्यादि पद्यस्यार्थश्चायम्।ते वासुदेव पराङ्मुखा अनिच्छन्तोऽपि तमो नरकं विशन्ति । किं कृत्वा । अत्यायासेन रचिता गृहापत्यसुहृच्छ्रियो हित्वा । यतोमन्दाः कर्महता इति ।

आस्तां विषयजलमीनानां कर्मनिष्ठानां वार्त्ता हरि विमुखा ऋषयो वेदविदोऽपीह संसरन्ति । यथोक्तम्—अह्न्यापृतार्त्तकरणा निशि निःशयाना नाना मनोरथधियः क्षणभग्ननिद्राः। दैवात हातार्थ रचना,ऋषयोऽपि देव युष्मत् प्रसङ्गविमुखा इह संसरन्तीति । अस्य अह्न्या पृतेत्यादि श्रीमद्भागवतीय पद्यस्यार्थो यथा—
भो देव विविधक्रीड़ापर युष्मत प्रसङ्गविमुखाः ऋषयोऽपि संस

रन्ति जन्ममरणादिरूपं संसारं प्राप्नुवन्ति । कीदृशा अहन्या पृतानि व्यापारपरिक्लिष्टानि आर्त्तानि करणानीन्द्रियाणि येषाम् । रात्रौ निर्गतं शयानं शयनं येषां ते । यतो नाना मनोरथधिया क्षणे भग्ना निद्रा येषां स्वप्नबाहुल्यात । किं विषयमनोरथांस्तु प्राप्नुवन्ति । न हि न हि । प्राचीनेन तव विमुखतालक्षणेन कर्मणा सर्वतः प्रतिहता अर्थरचना अर्थोद्यमा येषान्ते इति ।

य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ।
न भजन्त्यवजानन्ति स्थानाद् भ्रष्टाः पतन्त्यध इति ।

अस्य य एषामित्यादि पद्यस्यार्थश्चायम् । येषां वर्णाश्रमस्थानां मध्ये ये भगवन्तमज्ञात्वा न भजन्ति । ये च ज्ञात्वाप्यवजानन्ति अनादरं कुर्वन्ति मोहाद् ब्रह्माहमस्मीति च भावयन्ति ते स्थानाद् भ्रष्टा वर्णाश्रमाद् भ्रष्टाः सन्तः अधो नरके पतन्ति । कथंभूतम् । पुरुषं सर्वान्तर्यामिणम् । हितोपदेष्टारं गुरुम् पुनः । साक्षादात्मप्रभवम् । आत्मनः प्रभवो यस्मात जनकम् । मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह । चत्वारो जज्ञिरे वर्णा गुणै र्विप्रादयः पृथगिति वचनात । पुनः किंविशिष्टम् । ईश्वरं पालकम् । कर्माध्यक्षत्वेन तत्फलदातृत्वात् । अतस्तेषां कृतघ्नानां गुरुजनकपालकद्रोहादधः पतनमुचितमेवेति भावः । स्कान्दे

तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः ।
नृणां येनेह भूतात्मा सेव्यते हरिरीश्वर इति ॥

श्रीमद्भागवते-

लब्ध्वाजनो दुर्लभमत्र मानुषं कथंचिदव्यङ्गमयत्नतोऽनघ । पादारविन्दन्न भजत्यसन्मति र्गृहान्धकूपे पतितो यथापशुरिति यथा पशुरित्यस्यायं भावः-स हि प्रज्ञानेन संपन्नतमो विज्ञातं

नैवेच्छत्याशिषः क्वापि ब्रह्मर्षे मोक्षमप्युत ।
भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये इति
त्वत् कथामृतपाथोधौ विहरन्तो महामुदः ।
कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपम-
मित्यादि वचनै र्यदा परमपुरुषार्थरूपस्य मोक्ष-
स्यापि भक्तपक्षे मोक्षाकाङ्क्षाप्युपेक्ष्या तदा कि
मुवाच्यं स विषयबुभुक्षुः स्यादिति (१४५) ।

---

पश्यति, वेद श्वस्तनं, वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संप-
न्नोऽथाऽन्येषां पशूनामशनापिपासे एवाभिज्ञानं न विज्ञातं
वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तन न्न लोकालोका-
विति श्रुतेरीश्वरविमुखः पशुरेव । तथोक्तं स्कान्दे—

शूकरी यूथवत्तेषां प्रसूति र्विड् विभक्षकी ।
येषां पुत्रा न पौत्रा वा हरिं शरणमागता इति ।
देवदत्तमिमं लब्ध्वा नृलोकमजितेन्द्रियः ।
योनाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चक इति ।

श्वानोऽपि यद्दत्तमदन्ति खण्डं, बुक्कन्ति रक्षन्ति धनं तदीयम् ।
प्राणान् प्रियान् स्वामिहिते त्यजन्ति धिङ्मान्न नामापि वदा-
सि पत्युरिति च ।

( १४५ ) एतदर्थोपोद्बलकानि अन्यानि वाक्यानि यथा—

न धर्मं काम मर्थं वा मोक्षं वा वरदेश्वर ।
प्रार्थये तव पादाब्जे दास्यमेवाभि कामये इति ।
किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने ।
तथापि तत्परा राजन् न हि वाञ्छन्ति किञ्चनेति

जातु प्रार्थयते न पार्थिवपदं नैन्द्रे पदे मोदते
सन्धत्ते न च योगसिद्धिषु पदं मोक्षन्न चाकाङ्क्षते ।
कालिन्दी वनसीमनिस्थिरतडिन् मेघद्युतौ केवलं
श्यामे ब्रह्मणि–वल्लवी–भुजलता बद्धे मनो धावतीति ।

सालोक्यसार्ष्टिसामीप्य सारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ।
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।
येनाति व्रज्यत्रिगुणं मद्भावायोपपद्यते इति ।

सालोक्येत्यादि पद्यद्वयस्यार्थो यथा–मया सहैकस्मिन् लोके वासः सालोक्यम् । समानैश्वर्यं सार्ष्टिः, सृष्ट्यादिषु तुल्यप्रभाव इति भावः। निकटवर्त्तित्वं सामीप्यम् । समानरूपता सारूप्यम् । सह युनक्तीति सयुक् । सयुजो भावः सायुज्यम् । न त्वेकत्वम् । तत्सायुज्यमपि दीयमानमपि मत्सेवनं विना न गृह्णन्ति कुतस्तत्कामनेत्यर्थः । सेवा प्राप्तौ सत्यां सर्वं गृह्णन्तीति भावः। स प्रसिद्धो निर्गुणो भक्तियोगाख्य आत्यन्तिक उदाहृतः। येन भक्तियोगेन त्रिगुणमतिव्रज्य अतिक्रम्य मद्भावाय मद्धर्माय समानैश्वर्यायोपपद्यते योग्यो भवति । जगत् कर्तृत्वाद्यैश्वर्यं बिना चतुर्भुजस्वरूपादि योग्यो भवतीति भावः । सायुज्यं सलोकतां जयतीति श्रुत्या तत्समानसुखमेव प्रतिपादितमिति ।

न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यदिति ।

रसाधिपत्यं पातालादि लोकराज्यम् अपुनर्भवं मोक्षमपि मद्विना मां हित्वाऽन्यन्नेच्छति । अहमेव हि तस्य प्रेष्ठ इत्याशयः ।

ननाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमन्न रसाधिपत्यम् ।

न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे इति ।

श्रीकृष्णचरणाम्भोजसेवा निर्वृतचेतसाम् ।

एषां मोक्षाय भक्तानां न कदापि स्पृहा भवेदिति ।

भुक्तिमुक्तिस्पृहा यावत पिशाची हृदिवर्त्तते ।

तावद्भक्ति सुखस्यास्य कथमभ्युदयो भवेदिति ।

यानिर्वृतिस्तनुभृतां तव पादपद्म ध्यानाद्भवज्जन कथा श्रवणेन वा स्यात । सा ब्रह्मणि स्वमहिमन्यपि नाथ माभूत् किन्त्वन्तकासिलुलितात् पततां विमानादिति ।

नैकात्मतां मे स्पृहयन्ति केचिन् मत्पादसेवाभिरता मदीयाः ।
योऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणीति।
सेवानुरक्तमनसा भवोऽपि फल्गुरिति च ॥ श्रुतिस्तुतौ—

दुरवगमात्मतत्त्वनिगमाय तवात्तनोश्चरितमहामृताब्धि-परिवर्त्तपरिश्रमणाः । न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसङ्गविसृष्टगृहा इति ।

अस्य दुरवगमेत्यादि पद्यस्यार्थो यथा—भो ईश्वर केचिद्विरला भक्ता भक्तिरसिका दुर्बोधात्मतत्वज्ञानाय आत्ततनोराविष्कृतमूर्त्तेस्तव चरितमेव महामृताब्धिस्तस्मिन् परिवर्तोऽवगाहस्तेन परिश्रमणा गतश्रमास्सन्तो ऽपवर्गमपि नेच्छन्ति । कुतोऽन्यदिन्द्रपदादिकम् । न केवलन्नेच्छन्ति किन्तु गृहादिसुखमपि उपेक्षन्ते इत्याह । ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः तव चरणसरोजे हंसा इव रममाणा ये भक्तास्तेषां कुल सङ्गेन समाजपरिचरणेन विसृष्टास्त्यक्ता गृहा यैस्ते । अनेनश्रवणकीर्त्तने दर्शिते ।

धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता ।

समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयीति ।
न वयं साध्वि साम्राज्यं स्वाराज्यं भोजमप्युत ।
वैराज्यं पारमेष्ठ्यं च आनन्त्यं वा हरेः पदम् ।
कामयामह एतस्य श्रीमत्पादरजः श्रियः ।
कुचकुङ्कुमगन्धाढ्यं मूर्द्ध्ना वोढुं गदाभृत इति ।

साम्राज्यं सार्वभौमपदम् । स्वाराज्यमिन्द्रपदम् । भोज्यन्तदुभय पदम् । वैराज्यमणिमादिसिद्धिपतित्वम् । पारमेष्ठ्यम्ब्रह्मपदम् । अनन्तस्य भावः आनन्त्यम् मोक्षपदं च । हरेः पदं सालोक्यादि ।

क्षणार्द्धं नापि तुलये न स्वर्गं ना पुनर्भवम् ।
भगवत सङ्गिसङ्गस्य मर्त्यानां किमुताशिष इति ।
तुलयाम लवेनापि न स्वर्गं ना पुनर्भवम् ।
भगवत सङ्गिसङ्गस्य मर्त्यानां किमुताशिष इति च ।

अस्यार्थः—भगवत सङ्गिसङ्गस्य लवेनापि वयं स्वर्गन्न तुलयाम । कुतः । स्वल्पानन्दत्वात् अनित्यत्वात् । नाप्यपुनर्भवं सुखानुभवाभावात् । नृपेन्द्राणामाशिषः किमुत अत्यल्पानन्दत्वात् । मुक्तानामपि भक्तिर्हि परमानन्दरूपिणीति । तस्मादस्त्येव भगवत प्रीतेः सर्वस्मादप्यवर्गादुपादेयत्त्वमिति । रसामृतसिन्धौ

यदृच्छया लब्धमपि विष्णोर्दाशरथेस्तु यः ।
नैच्छन्मोक्षं विना दास्यं तस्मै हनुमते नम इति ।
पुनः पुनर्वरान्दित्सु र्विष्णुर्मुक्तिं न याचितः ।
भक्तिरेव वृता येन प्रह्लादं तं नतोऽस्म्यहमिति च ।

प्रह्लादश्च कृतकृत्योऽस्मि भगवन् वरेणानेन यत्त्वयि । भाविश्री त्वत्प्रसादेन भक्तिरव्यभिचारिणीति । आत्मानं भक्तिवरप्राप्त्याभिनन्दति ॥

तथा हि भृत्य इव स्वाम्यर्थं सर्वाणि कर्माणि मोक्षेऽपि फले सङ्गं त्यक्त्वा करोति यः सर्वकर्माणि लिप्यते न स पापेन संबध्यत इति शङ्कराचार्यो गीता भाष्ये उक्तवान्। धर्मः प्रोज्झितेत्यत्र श्रीमद्भागवते प्रशब्देन मोक्षाभिसन्धिरपि निरस्त इति टीकायां श्रीधरश्चाऽऽचचक्षे। एषां च मोक्षानपेक्षा न मोक्षापकर्षभावभावनापरा किन्तु ततोऽपि भजनानन्दोत्कर्षपरेति मनीषिभिर्मननीयम्। अन्यथा मोक्षस्य परमपुरुषार्थत्वव्यापकानेक वचनविरोधो दुर्निरोध आपतेत्। यथोक्तम्-

नैरपेक्ष्यं परं प्राहु र्निःश्रेयसमनल्पकम्।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेदिति।

विषयसुखापेक्षा त्वन्ततस्ताप मूलत्वात् सर्वथोपेक्ष्यैव।

ब्रह्मण्याविष्टचित्तानां सर्वदानन्ददर्शनम्।
पुत्राद्यासक्तचित्तानां तापश्रेणीति दृश्यत-
इत्युक्तेः (१४६)।

---

(१४६) कामप्रार्थनन्निन्दति प्रह्लादः-

यस्तु आशिष आशास्ते न स भृत्यः स वै वणिक्।
यदि रासीश मे कामान् वरांस्त्वं वरदर्षभ।

कामानां हृद्यसंरोहं भवतस्तु वृणे वरम् ।
इन्द्रियाणि मनः प्राणा आत्मा धर्मो धृति र्मतिः ।
ह्रीः श्री स्तेजः स्मृतिः सत्यं यस्य नश्यति जन्मनेति ।

यस्त्वाशिष इत्यादिश्लोकस्यार्थो यथा—हे वरदर्षभ वरदश्रेष्ठ यदि मे कामान् वरान् हृत्प्रियान् विषयानन्दान् रासि ददासि तर्हि हे ईश भवतः सकाशात् कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्था दीश्वरात्तु कामवृत्ताणां हृद्यङ्कुराभावं वृणे नान्यमित्यर्थः। यतोऽन्ये देवा अन्यवरं दातुं समर्था अपि कामवृक्षमूलबद्धहृदया अतस्तच्छेदने त्वऽप्रभवो ऽसमर्थाः। नन्वङ्कुरोत्पत्तौ कोदोषस्तत्राह—इन्द्रियाणीति। यस्य विषयसङ्गजस्य कामस्य जन्मना जन्ममात्रेणापीन्द्रियादयो नश्यन्ति। इन्द्रियाणि सदा चारभ्रष्टान्यमत प्रियाणि भवन्ति। कामप्राप्तिप्रयत्नश्रमात् सत्त्वं बलमपि क्षीणप्रायं भवति। मन आधिग्रस्तं तत्सङ्कल्पविकल्पैः। प्राणा क्षुत्तृड़ादि पीड़िता भवन्ति। तदाहुति दानावकाशाभावात्। आत्मा देहो दुर्बलः। तत्तत्काले स्वाहारविरहात्। धर्मो गतप्रायः। कामाङ्कुरसंभवाद्देशकालादीनामनादरात्। धृतीरजोगुणनिष्ठा व्यभिचारिणी कामाप्राप्तेः। मतिर्नानादेवमनुष्याश्रया भवति। ह्रीस्तु समूलगतप्राया भवन्ति। तत्प्राप्त्यर्थं जनप्रार्थनया श्रीः शोभा कामामयग्रस्ताभवति तेजोभानुस्तद्रूपराहुग्रस्तः। स्मृतिः स्वरूपानुसन्धानरूपा तु विनाशप्राप्तैव। एवं सर्वाणिकरणानि नश्यन्तीत्यर्थः। सा च

विहाय केशवादन्यं ये सेवन्ते ऽल्पमेधसः ।
संसारचक्रे गहने प्रविशन्ति पुनः पुनः ।
शार्ङ्गिणं ये परित्यज्य देवमन्यमुपासते ।
ते सद्भिश्च बहिष्कार्या वेदहीना यथा द्विजा ।

इत्यादि वचनैर्निन्दिता ।

श्रीभगवानपि भक्ताकामतापक्षपातीति देवैरुक्तम् । यथा-सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थदो यत्पुनरर्थिता यतः । स्वयं विधत्ते भजतामनिच्छता मिच्छापिधानं निजपादपल्लव-मिति । अस्य सत्यं दिशतीत्यादि श्लोकस्यार्थो यथा—तदुपा-सनया अर्थितो भगवान्नृणामर्थितं स्त्रीपुत्रादिकं दिशति ददा-तीति सत्यम् किन्तु स भगवान्नार्थदः परमार्थदो न भवति । यतः प्राप्तकामात् पुनरर्थिता नित्ययाच्ञा भवति । अयंभावः द्रव्यलाभे स्त्र्यर्थं भगवन्तं प्रार्थयते । तल्लाभे पुत्रायैवं भगवा-नपि कामयाचकरसं दत्वा कामान्नार्थिनं करोति । ननु ना-र्थितश्चेत् किमपि न दद्यादित्याशङ्क्याह—अनिच्छतान्तु निजपादपल्लवं स्वयं भगवान् परमौत्सुक्येन हठेनापि विधत्ते। कथंभूतम् । इच्छापिधानमिच्छानामाच्छादनं सर्वकामदं कल्प-वृक्षमित्यर्थः ।

ध्रुवश्च—तस्मादमूस्तनुभृता महमाशिषो ऽज्ञ आयुः श्रियं विभवमैन्द्रियमाविरञ्च्यात् । नेच्छामि ते विलुलितानुरुविक्र-मेण कालात्मनोपनय मां निजभृत्यपार्श्वमिति ।

अस्या ध्रुवोक्तेरर्थो यथा—यतो भगवत्सङ्गिसङ्गात् परमा-नन्दानुभवो भवति । तस्मादहमपि आयुः श्रियं च आविर-ञ्च्यादैन्द्रियवैभवं च नेच्छामि । तर्हि किमिच्छसि । तत्राह-निजभृत्यपार्श्वम् मामुपनय तत्र दुःखाद्यभावान्निर्विक्षेपं ते स्मरणं भविष्यतीति भावः ।

त्रिभुवनविभवहेतवे ऽप्यकुण्ठस्मृतिरजितात्मसुरादिभि-र्विमृग्यात् न चलति भगवत् पदारविन्दाल्लवनिमिषार्धमपि स वैष्णवाग्र्य इति निष्कामस्य वैष्णवप्रवरलक्षणोक्तिश्च ।

स्नेहस्य तस्य धिक्कारो यो न चुम्बति केशव-

मित्युक्तिश्च विषयविनश्वरत्वादि दोषदृष्ट्-
यैव द्रष्टव्या । यथोक्तं भगवता श्रीमद्भागवते-
मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः ।
मय्यात्मनां सुखं यत्तत्कुतः स्याद्विषयात्मनामिति
मोक्षपर्यन्तकामनात्यागानुगुणत्वादेवोक्तं नारद
सूत्रे-सा न कामयमानानिरोधरूपादिति (१४७)।
तथा च ।

ज्ञात्वैवं विषयान् सर्वांस्त्यक्त्वा प्राज्ञोऽखिलेश्वरम्
भजेद्भूतानुकूल्येन चिदचिद्विग्रहं हरिमिति (१४८)

---

अस्य त्रिभुवनेत्यादि पद्यस्यार्थो यथा-त्रिभुवनविभवस्य हेतुः कारणं साधनम् । अपिशब्दात्त्रिभुवनवैभवाय । कथंभूतात् पदारविन्दात् । अजितात्मसुरादिभिर्विमृग्यात् । अकुण्ठिता अखण्डिता स्मृतिर्भगवत्पद स्मरणं यस्य स इति ॥

( १४७ ) सा प्रेमलक्षणा भक्ति र्न कामयमाना न कामनार्थं भवति । वस्तुत इति शेषः । कुतः । निरोधरूपात् सर्वेभ्यो विषयेभ्यो निधिरूपत्वात् । अतः कामना निरोध एव तस्याः फलमिति ॥

( १४८ ) एवं स्वस्वरूपं ज्ञात्वा न कस्याप्यहम् न कोऽपि ममेति निश्चित्य देहगेहपुत्रदारधनादिष्वसङ्गः सन्ममत्वं परित्यज्य सर्वान् दुःखप्रदान् ज्ञात्वा प्राज्ञो विवेकी तु सर्वान् विषयांस्त्यक्त्वा भूतानुकूल्येन आनृशंस्यधर्मेण अखिलेश्वरं भगवन्तं हरिम्भजेत् । भूतप्रतिकूलतायां हि भजनारुद्धिर्भगवद्द्वेषो

द्वेकोदया ऽभावादिति भावः। तदुक्तं स्वयं भगवता श्रीकृष्णेन-अथ मां सर्वभूतेष्वित्यादि। भगवद्दया च—

रक्षणे सर्वभूताना महमेव परो विभुः।

इति सामर्थ्यानुसन्धानं कृपा। सा पारमेश्वरीत्युक्त-लक्षणा। कथंभूतं हरिम्। चिदचिद्विग्रहम् चिच्चाचिच्चेति चिद् चितौ। ते विग्रहौ यस्य स तम्। चिद्विग्रहस्तस्य घनश्यामो द्विभुजश्चतुर्भुजश्च॥ अचिद् विश्वम्। तदुक्तमेकादशे—

खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्वानि दिशो द्रुमादीन्। सरित समुद्रांश्च हरेः शरीरं यत्किंच भूतं प्रणमे-दनन्य इति।

न त्वन्यद्द्रष्टा स्यादिति अनन्यपदप्रयोगाभिप्रायः। भगव-दंशत्वाज्जीवोऽपि तस्य चिद्विग्रह एव। य आत्मनि तिष्ठती-त्यादि श्रुत्या भगवद्विग्रहत्वेन जीवस्य प्रतिपादनात्। सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचनेति। आत्मैवेदं सर्वमिति, स वा एष एवं पश्यन्नेवं विजानन्नेवं मन्वान आत्मरति-रात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवतीत्यादि श्रुतिभ्यः। भजनीयेनाद्वितीयमिदं कृत्स्नस्य तत्स्वरूपत्वादिति शाण्डिल्यसूत्राच्च। अस्य भजनीयेत्यादि शाण्डिल्यसूत्रस्या-र्थो यथा—भजनीयेन पुरुषोत्तमेन सहेदं विश्वमद्वितीयं पुरुषो त्तमात्मकमेव। कुतः। कृत्स्नस्य सर्वस्य जगतस्तस्य भगवतः स्वरूपत्वाद् विग्रहत्वात।

लुब्धा धनमयं विश्वं कामुकाः कामिनीमयम्।
नारायणमयं धीराः पश्यन्ति ज्ञानचक्षुषेति-

यद्यपि तादृशी दृष्टिः श्लाघ्यैव नूनं, तथापि-भगवद्भजने भूयांस्तु विशेषो यद् विश्वविग्रहोऽपि दानमानाभ्यां सेव्यो

**ज्ञात्वैवं परया भक्त्या सेव्यो वै भगवान् परः ।**
**सद्भि र्मुमुक्षुभि र्भक्तै रतत्कामैः कामवर्जितैरिति**

न तु तदा ऽऽसक्तिबुद्धया । आसक्ति बुद्ध्या तु तमेव चिद्विग्रह भगवन्तं भजेत । नान्यत्र सज्जेद्यत आत्मपात इति श्रीमद्भागवते विश्वविग्रहासक्तिनिषेधात् । अन्यत्र विश्वविग्रहे न सज्जेन्नासक्तिं कुर्यात कुतः । यतो विश्वविग्रहाकारबुद्धया तदाऽऽसक्तेरात्मपातो भवतीति तदर्थात् । यं य वापि स्मरन् भावमित्यादि गीतोक्तेर्देहान्ते तत्तत् स्मरणात तत् तत्प्राप्ते रात्मपात आत्मनः संसृतिनिपातो भवति। तस्मात तमेव चिद्विग्रहं भगवन्तं भजेत प्रीत्या निषेवेत। विराड् देहवज्जीवस्तदन्तर्यामिणामभेदमारोप्योपासनं तु कर्त्तव्यम् । श्रीमद्भागवते द्वितीयस्कन्धे प्रथमाध्याये—

स्थूले भगवतो रूपे मनः संधारयेद्धियेति

प्रकृत्य पाताल मेतस्य हि पादमूलमित्यारभ्य मनः स्वबुद्ध्या न यतोऽस्ति किञ्चिदित्यन्तैस्त्रयोदशभिः श्लोकै वैराजधारणा दर्शिता । तस्याश्चावधिस्तत्रैवोक्तः । यथा—

यावन्न जायेत परावरे ऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः ।
तावत् स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेतेति ।

तस्याश्च वैराजधारणाया ध्रुवेण कृतायाः फलं चतुर्थस्कन्धे सर्वं विश्वं भगवतैकीकृत्य प्राणं निरुध्य मधुवने ध्रुवे भगवन्तमन्तर्ध्यायति सति हि सकललोकश्वासनिरोधविधुरा विबुधाः श्रीधरं शरणं ययुरित्युपवर्णितम् । तथा कृपापीयूषपारावारगिरोऽपि ।

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्त्तमानोऽपि स योगी मयि वर्त्तत इति ॥

च संक्षेपः ( १४९ )।

ननु अलब्धमीहितेत्यादि प्रदर्श्य इति त्वविरक्तभक्तपरमिति भवता पूर्वमुक्तम्। तेन प्रतीयते यद् अविरक्तोऽपि भक्तः संभवतीति। तत्कथं संगच्छते। भक्तेर्मुक्तिविरोधित्वादिति चेद्-अत्रोच्यते—निष्कामभक्तिप्राप्तेः पूर्वं सकामभक्तेरपि भक्ति मार्गाविरोधादिति न काचित् क्षतिः। तथा हि भक्तस्यापि क्वचित् परत्रफललाभप्रदर्शनम्। यथा—

यद्यदिष्टतमं लोके यच्चापि दयितं गृहे।
तत्तन्निवेदयेन् मह्यं तदानन्त्याय कल्पत इति।

आनन्त्यमक्षयशब्दवदत्रव्याख्येयम्। अक्षयशब्दप्रयोगश्च यथा—

यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे।
तत्तद् गुणवते देयं तदेवाक्षयमिच्छतेत्यत्र।

---

( १४९ ) तत्कामैर्भगवत् कामैः। कामवर्जितैरित्यत्र कामपदं क्रोधादीनामप्युपलक्षणम्। कामक्रोधमोहलोभमदमात्सर्य्यो द्वेषादि दोषरहितैरित्यर्थः। यतः कामादयो ये हरिसेवाबाधका अतो दूरतस्ते त्याज्या इति भावः। श्रीहरिरायेण हि कामदोषनिरूपणग्रन्थे लिखितम्। यथा—

दोषेषु प्रथमः कामो विविच्य विनिरूप्यते।

यस्मिन्नुत्पद्यते तस्य नाशकः सर्वथा मतः ।
विषया ऽऽवेशहेतुत्वाद्विक्षेपोत्पत्तिकारणम् ।
रजोगुणसमुत्पन्नो रजः प्रक्षेपको मुखे ।
ब्रह्मावेशविरोधी च सद्बुद्धेर्बाधको मतः ।
तत्कर्मनाशकः सर्वं प्राकृता ऽऽसक्तिबोधकः ।
चित्ताशुद्धि निदानत्वाच्चिदुत्पत्तौ च बाधकः ।
भक्तिमार्गमहाद्वेष्टा वैराग्याभावसाधनात् ।
कामलोभौ हरिप्राप्तिप्रतिबन्धकपर्वतौ ।
तावुल्लङ्घ्य न शक्नोति गन्तुं कृष्णान्तिकं जनः ।
संसारबन्धहेतुत्वान् मनोदूषणसाधनम् ।
यतः सेवाविरोधी च यतः सा मानसी मता ।
निरोधस्य महाज्ञत्रु रन्यस्फूर्त्ति करो यतः ।
गुणगातसपत्नोऽपि न रोचन्ते गुणा यतः ।
वैराग्य साधकाः सर्वे कामिनस्ते कथं प्रियाः ।
अतएव हि दृश्यन्ते गुणश्रवणवैरिणः ।
क्रोधः स्वकार्यकरणाल्लोभः प्राप्त्यापि शाम्यति ।
घृतहोमे वह्निरिव कामो भोगेन वर्धते ।
कामेन नाशितमतिः प्रतिषिद्धे प्रवर्त्तते ।
अगम्यागमने चौर्यं तथैवाऽभक्ष्यभक्षणे ।
कामेनैव हि कार्पण्यं कामिनीषु सतां मतम् ।
प्रार्थयन्ति यतस्तुच्छाः प्रवेश्य वदने करमिति ।

अथ क्रोधदोषाः प्रदर्श्यन्ते—

क्रोधयुक्तो यद्यजते यज्जुहोति यदर्चति ।
सर्वं हरति तत्तस्य आमकुम्भ इवोदकम् ।

चक्षुषा पश्यन्नपि क्रोधेन अन्धो भवति; श्रवणशक्तिसंपन्नो

ऽपि बधिरो भवति; सधैर्योऽप्यधैर्यो भवति; सचेतनोऽप्य ऽचेतनो भवति; पण्डितोऽपि मूर्खो भवति । यथा प्रचण्डः पवनो वृक्षानुन्मूलयति तथा क्रोधोऽपि सर्वस्वन्नाशयति । येन विश्वामित्र ऋषि रपि सन् वशिष्ठस्य शतं पुत्रानवधीत् । इन्द्रो विश्वरूपं स्वपुरोहितं पश्चाद् वृत्रासुरं विरोचनपुत्रीं स्त्रियमपि च वज्रेण हतवान् । विष्णुरपि भृगुपत्नीं चक्रेण जघान। यथाऽति प्रचण्डो भूकम्पो नगरस्थान् प्राकारादीन् दृढानपि भूमिसात् करोति तथा क्रोधोऽपि परमस्निग्धान् सुहृदोऽपि विनाशयति तदुक्तं श्रीमद्भागवते–

> मातरं पितरं भ्रातॄन् सर्वांश्च सुहृदस्तथा ।
> घ्नन्ति ह्यसुतृपो लुब्धा राजानः प्रायशो भुवीति ।
> यद्यपि त्रिविधं नरकस्येदं द्वारन्नाशनमात्मनः ।
> कामक्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेदिति ।

उक्तं नरकद्वारन्त्रिविधम् तथापि रभसा महानर्थनिष्पादकत्वाद् विशेषेण क्रोध एव नरकस्य द्वारम् । भयमृत्यू उभावपि क्रोधेन सहैव वर्त्तेते । श्रीमद्भागवते ।

क्षुत्तृट् त्रिकालगुणमारुतजैह्वशैश्ना नस्मानपारजलधीनतितीर्य केचित् । क्रोधस्य यान्ति विफलस्य वशं पदे गोर्मज्जन्ति दुश्चरतपश्च वृथोत्सृजन्तीति ।

अस्य क्षुत्तृडित्यादि पद्यस्यार्थो यथा–केचिदस्मान् अपारजलधीनतितीर्य विफलस्य क्रोधस्य वशं यान्ति क्रोधलक्षणे गोः पदे गोष्पदे मज्जन्ति शापादिना तपोऽपि वृथोत् सृजन्ति त्यजन्ति ऋषयोऽपि । यथा जले मज्जन्तो विवशाः सन्तो मस्तकारोपितं भारं त्यजन्ति तद्वदिति भावः । कीदृशानस्मान् क्षुत्तृडादीन् त्रिकालगुणांश्च शीतोष्णवर्षाणि मारुतम्

प्राणं जैह्वाञ्जिह्वोपभोगान् मधुराम्लादीन् शैश्नान् गुह्योपभोगान् स्त्रीसङ्गादीन् अपार जलधीनिव स्थितान् तानतितीर्येत्यर्थः । स्वायम्भुव आह–

अलं वत्सातिरोषेण तमोद्वारेण पाप्मना ।
येनोपसृष्टात् पुरुषाल्लोक उद्विजते भृशमिति ।
अपराधिनि कोपश्चेत् कोपे कोपः कथं न हि ।
धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनीति ।

यत एव मतः क्रोधोऽपि त्याज्यएवेति । एवं क्रोधस्य दोषानुक्त्वा लोभस्य हरिसेवा बाधकत्वमाह–

योषिद्धिरण्या भरणाम्बरादि द्रव्येषु माया रचितेषु मूढः ।
प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ।

यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः ।
लोभः स्वल्पोऽपि तान् हन्ति श्वित्रं रूपमिवेप्सितम् ।
यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य पर्याप्तं तस्मात्तृष्णां परित्यजेत् ।
तृष्णे देवि नमस्तुभ्यं धैर्यविप्लवकारिणि ।
विष्णुस्त्रैलोक्यनाथोऽपि यस्त्वया वामनी कृतः ।
धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु ।
अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति ते ।
गिरिर्महान् गिरेरब्धि र्महानब्धे र्नभो महत् ।
नभसोऽपि परं ब्रह्म ततोऽप्याशा दुरत्यया ।
शुष्कोपवासो धर्मेषु भैषज्येषु च लंघनम् ।
जप यज्ञश्च यज्ञेषु रोचते लोभ शालिनाम् ।
दम्भो द्रोहश्च निन्दा च पैशून्यं मत्सरस्तथा ।
भवन्त्येतानि कौरव्य लुब्धानामकृतात्मनाम् ।

निष्की वष्टि शतं शती दशशतं लक्षं सहस्राधिपो
लक्षेशः क्षितिपालतां क्षितिपति श्चक्रेश्वरत्वं पुनः ।
चक्रेशः पुनरिन्द्रतां सुरपति र्ब्राह्मं पदं वाञ्छति
ब्रह्मा विष्णु पदं हरिः शिवपदं त्वाशावधिं कोगतः ।

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ।
इदमद्य मया लब्ध मिदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ।
अदातारः समृद्धा ये द्रव्याढ्या लोभकारणात् ।
दीनानाथान्न पश्यन्ति ते वै निरयगामिन इति ।

एवं लोभस्य दौर्गुण्यमुक्त्वा मोहस्य दोषमाह—

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ।
अहो मे पितरौ वृद्धौ साध्वी भार्या सुतः शिशुः ।
कथं त्वनाथा जीवेरन्निति मोहसमावृता इति ।

अत्र मोहदोषख्यापने अहिनिर्ल्वयनीवदिति सांख्यसूत्रम् । अस्य अहीत्यादि सांख्यसूत्रस्यार्थो यथा—अहिनिर्ल्वयनी सर्प निर्मोकः । कश्चिदहिर्विवरद्वारे निर्मोकं (केञ्चुलं) त्यक्त्वा ममायमिति तं स्नेहान्न संत्यक्तवान् । तेन वेगात् पलायितु मपारयन् केनचिदाहि तुण्डिकेना ऽनायासेन गृहीतोबहुनर्थ-भाजनं बभूवेत्यतो मोहात ममत्वेन स्नेहादयो न कर्त्तव्याइति

अथ मदस्य दोषा उच्यन्ते—

न ह्यन्यो जुषतो जोष्यान् बुद्धिभ्रंशो रजोगुणः ।
श्रीमदादाऽऽभिजात्यादि र्यत्र स्त्रीद्यूत मासवः ।

अस्य न ह्यन्य इत्यादि श्लोकस्यार्थो यथा—जोष्यान् प्रियान्

विषयान् सेवतः सेवमानस्य पुरुषस्य श्रीमदादन्यो विद्या तपो वपुर्वयोरूपगुणसत्कुलादि जनितः कोऽपि बुद्धिभ्रंशरूपो न भवति । स एव बुद्धिभ्रंशस्तद्रूपो रणोगणोऽपि न बुद्धिं भ्रंशयति नाभिजात्याद्यपि बहुकुटुम्बकस्य प्रायः पर्याप्तद्रव्याद्यभावात । किन्तु श्रीमद एव बुद्धिनाशकः । ज्ञाननाशनशीलत्वात्तस्य यत्र स्त्रीद्यूतमासव इति तु स्पष्टम् । प्रसङ्गाद् द्यूतनिन्दा यथा—

पाण्डवो धर्मराजस्तु लोकपाल इवापरः ।
द्यूतेन व्यसता विद्वान् कलत्राण्यपि हारितः ।
नलश्च राजा द्यूतेन हृते राज्य महोदये ।
धर्मदारान् वने त्यक्त्वा परकर्मा करोत प्रभुः ।
तुल्यो भुवीन्द्र तुल्यस्य यस्य नास्ति धनुर्धरः ।
स रुक्मी रुक्म तुल्याभो द्यूतदोषाद् गतः क्षयम् ।
राजा काशिकरूषाणां दन्तवक्त्रोऽपि मन्दधीः ।
तीव्रद्यूत कृताद्दोषाद्दन्तभङ्ग मवाप्तवान् ।
द्यूतादनर्थ संरम्भो द्यूतात स्नेहक्षयो महान् ।
इति केवलदोषं हि द्यूतं सर्वः परित्यजेदिति ।

तथैव मद्यनिन्दा यथा—

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ।
सुरा हि मलमन्नानां पाप्मा च मल मुच्यते ।
तस्माद् ब्राह्मण राजन्यौ वैश्यश्च न सुरां पिबेत ।
गमनं विह्वलत्वं च संज्ञानाशो विवस्त्रता ।
असंबद्ध प्रलापित्वमकस्माद् व्यसनं मुहुः ।
स्खलनं वेपथुस्तन्द्रा नितान्तं स्त्रीनिषेवणम् ।

इत्यादिपानं व्यसनमत्यन्तं सद्भिर्गर्हितम् ।
श्रुतशीलबलोपेताः पानदोषेण भूयसा ।
क्षयमक्षीणनामानो जग्मु रन्धकवृष्णयः ।
योगीश्वरश्च भगवान् भार्गवो भृगुतुल्यधीः ।
शुक्रः पानमदात्तीव्राद् बुभुजे शिष्यमौरसमिति ।
यौवनं धनसंपत्तिः प्रभुत्वमविवेकता ।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ।
श्रुतिवाग् दृष्टि हरणं लक्ष्मीः कुरुते नरस्य को दोषः ।
गरलसहोदर जाता तच्चित्रं यन्न मारयति ।

मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः । न पूजयन्ति द्विजातीन्; न मानयन्ति मान्यान्; नार्चयन्त्यर्चनीयान्; नाभिवादयन्त्यभिवादनार्हान्; नाभ्युत्तिष्ठन्ति गुरून् । सर्वथा तमभिनन्दन्ति । तमालपन्ति; तं पार्श्वे स्थापयन्ति; तं संवर्धयन्ति; तेन सह सुखमवतिष्ठन्ते; तस्मै ददति; तन्मित्रतामुपजनयन्ति; तस्य वचनं शृण्वन्ति; तत्र वर्षन्ति; तं बहु मन्यन्ते; तमासन्नतरमापादयन्ति; योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्त्तव्यः स्तौति । एवं दोषानपि गुणपक्ष आक्षेपयद्भिरन्तः स्वयमपि विहसद्भिः प्रतारणाकुशलैर्धूर्त्तैरमानुषलोकोचिताभिः स्तुतिभिः प्रतार्यमाणा दिव्यांशावतीर्णमिव सदैवतमिवातिमानुषमात्मानमुत्प्रेक्षमाणाः सर्वजनोपहास्यतामुपयान्त्यात्मविडम्बनेन । तथा हि दर्शनप्रदानमप्यनुग्रहं गणयन्ति । दृष्टिपातमात्रमप्युपकारपक्षे निक्षिपन्ति । संभाषणमात्रमपि संविभागमध्ये कुर्वन्ति । आज्ञामपिवरप्रदानं मन्यन्ते । स्पर्शमपि पावनत्वमाकलयन्ति ।

सोपानानि तिरोहितानि पदवी छन्ना जलै र्नूतनैः

कालुष्यं पयसां निरीक्ष्य शनकै रुड्डीय हंसा गताः ।
श्रूयन्ते न मधुव्रतोत्तमगिरः, पद्मानि मग्ना जले
भेकानामिव गर्जितं श्रुतमहो वृद्धैयव नष्टं सरः-
इत्यन्यापदेशश्लोकमन्वर्थं कुर्वन्ति ।

कितवा यं प्रशंसन्ति यं प्रशंसन्ति चारणाः ।
बन्धक्यो यं प्रशंसन्ति न च पार्थ स जीवति ।
साधवो यं प्रशंसन्ति यं प्रशंसन्ति वै द्विजाः ।
राजानो यं प्रशंसन्ति स पार्थ पुरुषोत्तम इति ।

विवेकदिशि दृशमपातयतः ।

आवृत्य श्रीमदेनान्धानन्योन्यकृतसंविदः ।
स्वैरं हसन्ति पार्श्वस्था बालोन्मत्त पिशाचवत् ।
अप्रामाण्यबुद्धिः स्तोत्रेषु देवता बुद्धिरात्मनि ।
कीटबुद्धिर्मनुष्येषु नूतनायाः श्रियः फलम् ।
क्षणमात्रं ग्रहावेशो याममात्रं सुरामदः ।
लक्ष्मी मदस्तु मूर्खाणामादेहमनुवर्त्तते ।

अहङ्कार पङ्कलिप्तास्तु पराभवं प्राप्नुवन्ति ध्रुवम् । दुर्वासआदयो महान्तोऽपि गर्वेण महत्तरं पराभवमापुरिति पुनरितरेषां गणनैव का । ब्रह्मवैवर्त्तीये श्रीकृष्णजन्मखण्डे महतामप्यहङ्कुर्वता गर्वगञ्जनं विष्णुना कृतमिति तत्रैव द्रष्टव्यम् ।

यशो निहन्त्यहङ्कारो हन्तिबुद्धिमहं कृतिः ।
धर्मं निहन्त्यहङ्कारो ह्य हंकारो रिपुर्महान् ॥
न तपो न जपः शौचं तीर्थं दान व्रतादयः ।
नाशयन्ति महाज्वालमभिमानानलं युताः ।
न पापं ब्रह्महत्या स्यान्न पापं गोवधः स्मृतः ।
देहाभिमानस्य यमः कलां नार्हन्ति षोड़शीम् ।
नाश्वमेधः परं पुण्यं तुलादानादि संभवम् ।

गोसहस्रादि जनितं यथा हङ्कारवर्जनात् ।

अहङ्कारदोषान ऽपश्यन्तो मत्ता इव स्वस्मादधिकान् महतोऽपि पुरुषान ऽवमन्यन्ते । केचिच्छास्त्रैकदेशमात्रनिपुणा वयमध्यापका वक्तारः सर्वोत्कृष्टाः पण्डिता इत्यात्मानमेव श्लाघन्ते गर्वात् न तावता तेषां काचिदृहो पुरुषिका पुरुषार्थो वा दृष्टः । स्वयं पण्डितमान्यज्ञो विदुषो हेलयन् मदात् । निर्द्रुमाम्बूषरे देशे जायते ब्रह्मराक्षस इत्यङ्गिरोवचनप्रामाण्यात् प्रत्युत पुरुषार्थ भ्रंश एव प्रतीयते ।

विद्यया विनयावाप्तिः साचेद् विनयप्रदा ।
किं कुर्मः कं प्रति ब्रूमो गरदायां स्वमातरि ।

विद्या विवादाय धनं मादाय शक्तिः परेषां परिपीड़नाय ।
खलस्य साधोर्विपरीत मेतज्ज्ञानाय दानाय च रक्षणायेति ।

श्रीमद्भागवतेऽसूयादि दोषरहितानां प्रशंसा श्रीकृष्णेन मुनिना कृता । यथा—

ये ऽसूयानृतदम्भेर्ष्या हिंसा मानविवर्जिताः ।
न तेषां सत्यशीलानामाशिषो विफलाः कृता इति ।

असूयादिषु दोषाश्च यथा—

य ईर्ष्युः परवित्तेषु रूपे वीर्ये कुलान्वये ।
सुखसौभाग्य सत्कारे तस्यव्याधिरनन्तकः ।
दह्यमानाः सुतीक्ष्णेन नीचाः पर यशोऽग्निना ।
अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ।
अभिवाद्य यथा वृद्धान् सन्तो गच्छन्ति निर्वृतिम् ।
एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ।
खलो मृगयते दोषं गुणयुक्तेषु साधुषु ।
पुष्पवाटी समाकीर्णे पुरीषमिव शूकरः ।

आनन्त्यं मोक्ष इति व्याख्यानेऽपिमुमुक्षोः पर-
म्परया तादर्थ्य स्वीकारे न काचिदनुपपत्तिः।
दानव्रततपोहोमेत्याद्युक्तेः। प्रस्तुतयोर्दान श्लो-
कयो रन्तक्षयशब्दा वपर्याप्तिवचनत्वेन नेयौ।
अन्यथा नास्त्यकृतः कृतेनेति श्रुतिविरोधः।

इत्थं च-तत्साधु मन्येऽसुरवर्य देहिनां सदा

---

शिशुपालः श्रीकृष्णे ऽसूया करणाच्छ्रीकृष्णेनैव हतो बभूव। दक्षप्रजापतेः शिवगुणे दोषारोपाद् यज्ञविध्वंसो जातः । तथा मन्थरा रामगुणे दोषारोपाच्छत्रुघ्नेन कचकर्षन्ताडिता । मिथ्या वासुदेवोऽपि वासुदेवोऽवतीर्णोऽहमेक एव न चापरः। भक्तानामनुकम्पार्थन्त्वन्तु मिथ्याभिधां त्यजेति श्रीकृष्णे ईर्ष्या करणाद्धत इति व्यक्तम्।

पुरमेकं जगत्यस्मिन् नस्ति मांसास्थिनिर्मितम्।
चर्मभित्ति महायामं सर्वतः स्नायुवेष्टितम्।
नृपश्च पुरुषस्तत्र चेतनावान ऽवस्थितः।
मन्त्रिणौ तस्य बुद्धिश्च मनश्चैव विरोधिनौ।
यतेते तस्य नाशाय तावुभावितरेतरम्।
नृपस्य तस्य चत्वारो नाशमिच्छन्ति विद्विषः।
कामः क्रोधस्तथा लोभो मोहश्चान्यो महान् रिपुः।
यदा तु स नृपः स्वानि द्वाराण्यावृत्य तिष्ठति।
तदा स्वस्थबलश्चैव निरातङ्कश्च जायते।
तस्मात् प्रजागरः कार्यः प्रबुद्धेन दिवानिशम्।
न मुष्णन्ति च्छलाद्यस्मात् कामक्रोधादयोऽरय इति ॥

समुद्विग्न धियामसद्ग्रहात्। हित्वात्मपातं गृह मन्धकूपं वनं गतो यद्धरिमाश्रयेतेत्यादि-शास्त्रमनुसृत्य यद्यपि पूर्वकालेदारपुत्रधनादि विषयभोगेषु दोषदर्शिनो बुद्धिमन्तो देवापिप्र-भृतयः सार्वभौमश्रियं तृणीकृत्य तरुणा एवारण्यं शरणी चक्रु स्तथापि। शय्याशाद्वलमासनं शुचि-शिला सद्मद्रुमाणामधः शीतं निर्झरवारि पान-मशनं कन्दाः सहाया मृगाः। इत्थं प्रार्थितलभ्य सर्वविभवे दोषोऽयमेको वने दुष्प्रापार्थिनि यत् परार्थघटना वन्ध्यै वृथा स्थीयत इत्युक्त दिशा, ये सहवासेन परोपकार वासनासनाथ मनसो भक्ता गृहस्था एव भगवन्तं भजेयुर्न तेषां किम-पि हीयते। ननु भक्तोऽपि कर्मभिस्तत्फलभोगैश्च बध्येतैवेति चेन्न।

सोऽहं दासोऽस्मि इति वा बुद्धि र्यस्य दृढामला।
कर्मभिर्न स बध्येत अकर्तृत्वाच्च देववदिति
वचनात्। कुर्वन्नेवेहेत्यादि श्रुतेश्च।
तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया।
हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः (१५०)।

(१५०) विद्या उपासना सेव; यया तन्मति र्यया तस्मिन् हरौ प्रीति र्भवति। कुतः। यतो देहभृतां देहधारिणां जीवा-

तत्कर्म यन्न बन्धाय साविद्या या विमुक्तये ।
आमयो यश्च भूतानां जायते येन सुव्रत ।
तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सतम् ।
एवं नृणां क्रिया योगः सर्वे संसृति हेतवः ।
त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ।
यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धन-
इत्याद्युक्तेश्च । हरिभक्तानां च विषयभोगजन्य
जघन्यफलबाधा तु नैव बाधते भक्तेरद्भुतप्रभा-
वत्वात् ।

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव समन्तव्यः सम्यग्व्यवसितो यतः ।
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानी हि न मे भक्तः प्रणश्यति ।
मित्रभावेन संप्राप्तं न त्यजेयं कथंचन ।
दोषो यद्यपि तस्य स्यात् सतामेतद ऽगर्हितम् ।
तावत्कामादयः स्तेनास्तावत् कारागृहं गृहम् ।
तावन्मोहोऽङ्घ्रि निगड़ो यावत्कृष्णनतेजनाः १५१

---

नां हरिरात्मा उपादानाभिन्न निमित्तकारणम् । तच्च कुतः । यतः स्वयं प्रकृतिरीश्वरः प्रकृतिरपि स्वयमेव स्वशक्तित्वात् स्वयमेव पुरुष ईश्वरोऽपीति ॥

(१५१) स्तेनाश्चौरा ज्ञानादिद्रव्यापहारका भवन्ति । गृहमपि कारागृहं भवति । देहादि मोहोऽपि चरणनिगड़ो

गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम् ।
मद्वार्त्तायातयामानां न बन्धाय गृहामताः ।
वयं त्विहमहायोगिन् भ्रमन्तः कर्म वर्त्मसु ।
त्वद्वार्त्तया तरिष्याम स्तावकै र्दुस्तरं तम
इत्याद्युक्तेः (१५२) ।

---

भवति यावज्जनास्ते दासा न भवन्ति । तव दासानां तु गृहादीनि मुक्तिसाधनानि भवन्तीति । भगवत् स्मरणपराणां तद्दासानां यदा विषमप्यमृतं भवति तदा किमुवाच्यं यद्रिपवोऽपि बान्धवा भवन्ति । पापमपि पुण्यं भवति । दुःखमपि सुखं निन्दापि स्तुतिः कामादयोऽपि मुक्तिमार्गानुकूला भवन्तीति । विश्वस्य अन्तर्याम्यभेदेन विश्वम्भरात्मकत्वात् सर्वे पदार्थाः स्वदासानुकूला एव स्युर्नकश्चित् प्रतिकूल इति । विश्वासः सुदृढः । वसति हृदि जनार्दने च तस्मिन् भवति पुमाञ्जगतोऽस्य सौम्यरूपः । त्तितिरसमुपयुक्तमात्मनोऽन्तः कथयति चारु तयैव शालिपोत इत्युक्त्यनुसारेण सौम्यस्वभावदर्शनात् सर्व एवानुकूलस्तस्य स्यादेव । धनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्तः करणैर्विशङ्कैः । दृशा पिबन्त्यो वपुरापुरत्त्र्णां प्रकामविस्तारफलं हिरण्य इति वदिति ।

(१५२) हे महायोगिन् वयं त्विह संसारे कर्मवर्त्मसु देहगेह स्त्रीपुत्रादिषु स्वसुखरूपेषु तमःसु भ्रमन् मोहादपि तावकैस्तवदासैः सह तव वार्त्तालापेन सूर्योदयेनेव दुस्तरं तमोऽपि तरिष्याम इति ।

पुङ्खानुपुङ्खविषयेष्वनु तत्परोऽपि धीरो न मुञ्चति मुकु-

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यत-
इत्यत्र गीतासु यद्यपि निष्कामकर्म योग एव
कर्मयोगपदेनोद्दिष्टस्तथापि कलौ सकाम कर्म-
योगो नैव भक्तिपथे परिहेलनीयो यतो युगेऽ-
स्मिन् गृहस्थ एव साधीयानिति विज्ञायते । स
हि तामसीं राजसीं सात्त्विकीं गुणातीतां वा यां
गतिमधिजिगमिषति तां साधयति ।

आश्रमाणां कलावेको गृहमेधोऽवशिष्यते ।
युगस्वभावात् प्रायोऽन्ये दुःसाध्या ह्यल्पमेधसा
मिति परमर्ष स्मरणाच्च (१५३) ।

---

न्द पदारविन्दम् । संगीतनृत्यगतिता न वशं गतापि मौलिस्थ कुम्भपरिरक्षण धीर्नटी वेत्यप्यत्रा नुसन्धेयम् ।

( १५३ ) ब्रह्मचर्यं वनेवासं कमण्डलु विधारणम् ।
महाप्रस्थानगमनं कलौ चत्वारि वर्जयेदिति
स्कन्दाच्च । अत्र ब्रह्मचर्यं नैष्ठिकब्रह्मचारिता ।
मिष्टान्न कामैरल्पज्ञैर्लोलुपै वञ्चकैः कलौ ।
ज्ञानवैराग्यहीनैस्तु संन्यासोऽस्तं गमिष्यतीति
भविष्यपुराणवचनाच्च ।
वर्णौ द्वावेव तु स्यातां प्रथमस्तुर्य एव च ।
द्वितीय आश्रमश्चैव संप्राप्ते मलिने कलाविति
पुराणान्तर वचनाच्च ।

यदा ह्य प्रार्थितस्यापि प्रेयसः श्रेयसो लाभः संजायते। यथोक्तं गारुडे-

यद् दुर्लभं यदप्राप्यं मनसो यन्न गोचरः।
तदप्य प्रार्थितं ध्यातो ददाति मधुसूदन इति ॥

मनसोऽप्यगोचरफलप्रदाने ध्रुवप्रह्लादादि चरित मेव प्रमाणम्।

या वै साधनसंपत्तिः पुरुषार्थ चतुष्टये।
तया विना तदाप्नोति नरो नारायणाश्रयः।

नारायणाश्रयएव सर्वेषां सर्वपुरुषार्थलाभोपायइति न तत्र कर्मादीनां कारणत्वमण्येषणीय मिति१५४

---

(१५४) भवन्ति चात्रभूरिशो वचनानि-निरोधो न द्वारे न च खलजनो यस्य सदने, न चास्ते दारिद्र्यं भजति भजतो वाप्य भजतः। यथा येषां वाञ्छा वितरति तथा कल्पतरुवद्, रमेशं तं तूर्णं जगति परिपूर्णं भजसखे इति।

हरिमुद्दिश्य भोग्यानि काले त्यक्तवतस्तव।
विष्णुलोकस्थिता सम्पद अलोला सा प्रतीयत-

इत्युक्ते भगवतः कृतज्ञत्वादेव भजतां सर्वेष्टसिद्धयः संपद्यन्ते। यथोक्तम्-

कः पण्डितस्त्वदपरं शरणं समीयाद् भक्तप्रिया दृतगिरः सुहृदः कृतज्ञात्। सर्वान्ददाति सुहृदो भजतोऽभिकामा नात्मा नमप्युपचया ऽपचयौ न यस्य। अविस्मितं तं परिपूर्ण कामं स्वेनैव लाभेन समं प्रशान्तम्। विनोपसर्पत्य ऽपरं हि बालिशः श्वलाङ्गुले नातितितर्ति सिन्धुम्।

स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम् ।
सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ।
धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः ।
एकमेव हरेस्तत्र कारणं पाद सेवनम् ।
विशिष्टः सर्वधर्माणां धर्मो विष्णवर्चन न्नृणाम् ।
सर्वयज्ञतपोहोमतीर्थ स्नानैश्च यत्फलम् ।
तत्फलं कोटि गुणितं विष्णुं संपूज्य प्राप्नुयात ।
तस्मात् सर्वप्रयत्नेन नारायणमिहार्चयेत् ।
यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः ।
तस्य तीर्थपदः किंवा दासानामवशिष्यत इति ।

ननु ये ये पुरुषार्थास्तेषां तेषां यानि यानि साधनानि शा- स्त्रेषूक्तानि तानि तानि अननुष्ठायापि यदि भक्तिमात्रेण लोकोऽलप्स्यत तर्हि नासाधयिष्यत्तानि तानि साधनानि यत्नेन शास्त्रेषु तद्विधानानि च वृथैवापत्स्यन्ते इति चेन्न । सर्वथा भक्तावविश्वासवासना हेतोर्बहिर्मुखानान्तदलाभात् ।

तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः । क्षेमं न विन्दन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः । लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदु दिते भवदर्चने स्वे । यस्तावदस्य बलवानिह जीविताशां सद्य- श्छिनत्यनिमिषाय नमोऽस्तु तस्मै इत्युक्तेः ।

अस्य लोको विकर्मेत्यादि पद्यस्यार्थो यथा—योऽयं लोको विकर्मनिरतः । भगवद्भक्तिगन्धरहितं कर्ममात्रं विकर्मपदेनात्र विवक्षितमिति ज्ञेयम् । स भवदर्चने स्वे कर्मणि प्रमत्तोऽसाव- धानोऽलसश्च । कथंभूते कर्मणि कुशले,सर्वतो भावेनाकुतो भयेयत्र वैगुण्येऽपि सत्फल बाधाभावादनिष्टानुत्पत्तेश्च च । नेहाभिक्रम-

नाशोऽस्तीत्याद्युक्तेः। पुनः कथंभूते त्वदुदिते।

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते।
तेषामहं समुद्धर्त्ता मृत्यु संसारसागरात्।
भवामि न चिरात् पार्थ मय्यावेशित चेतसामिति

यत्करोषीत्यादिना मन्मना भवेत्यादिना च त्वया विहिते इत्यर्थः। अन्यत्स्पष्टमिति।

वासनारुचिभेदेन कृत्यब्यासङ्गभेदो यथा पाद्मे काशी माहात्म्ये—

संशयो नैव कर्त्तव्यो युष्माभिर्धर्म बुद्धिभिः।
विचित्ररुचयो लोका बद्धश्रद्धाः क्वचित क्वचित्।
यथेष्टं हि विचेष्टन्ते स्वतन्त्रास्तत्र तत्र हि।
वर्णाश्रमपरिप्राप्त कर्मानुष्ठान कोविदः।
नित्यो नैमित्तिकः काम्यः काम्यस्तु स्वेच्छया भवेत्।
अनेकोपाय लभ्यं यत्फलं भवति ब्राह्मणाः।
प्रवृत्तिः स्वेच्छया तत्र सर्वलोकेहि दृश्यते।
यथा कश्चित प्रसूनार्थी समानासु लतासु च।
समानश्रमगम्यासु समानकुसुमासु च।
विद्यमानासु कस्यां चित् प्रवर्तेत न सर्वतः।
तथा लोका यथा कामं श्रयन्ते मुक्तिसाधनम्।
समानवर्णं गोक्षीरं तुल्यपात्रे प्रतिष्ठितम्।
युगपन्नैव गृह्येत किञ्चित पूर्वं हि गृह्यते।
तद्वन्निर्वाणहेतूनां बाहुल्येन मुमुक्षुभिः।
सुशक्यत्वेन यज्ज्ञातं नित्यं तैस्तन्निषेव्यत इति॥

अप्रार्थितायाअप्याशिषः सर्वथा ऽनाशासने तु भगवान् न प्रलाम्नियो जयति ।

त्वत्पादुके अविरतं परि ये चरन्ति
  ध्यायन्त्यभद्रनशने शुचयो गृणन्ति ।
विन्दन्ति ते कमलनाभ भवापवर्ग
  माशासते यदि त आशिष ईश नान्य-

इत्युक्तेः (क) ।

---

(क) लक्ष्मीशः सर्वदो नान्यो लक्ष्मीशोऽप्य पवर्गदः ।
  एक एव हि लक्ष्मीशस्ततो ध्येयो न चापरः ।
भुक्तेर्मुक्तेरिहान्यत्र नान्यो दाता जनार्दनात् ।
तस्माच्चतुर्भुजो नित्यं सेवनीयः सुखेप्सुभिः ।
एको धर्मप्रदो विष्णुस्त्वेको बहूर्थदो हरिः ।
एकः कामप्रदश्चक्री त्वेको मोक्षप्रदो ऽच्युतः ॥
परिनिर्मथ्य वाग्जालं सुनिश्चित्या सकृद्बुधा ।
इदमेकं परिज्ञातं सेव्यः सर्वेश्वरो हरिः ।
वेदे रामायणे चैव पुराणेषु च भारत ।
आदिमध्यावसानेषु हरिरेको हि नापरः ।
सत्यं सत्यं पुनः सत्यं त्रिसत्यं न मृषा पुनः ।
न वेदादपरं शास्त्रं न देवोच्युततः परः ।
विहाय केशवादन्यं ये सेवन्तेऽल्पमेधसः ।
संसारचक्रे गहने ते विशन्ति पुनः पुनः ।
एक एव हि सर्वेशो हृषीकेशः परात परः ।
तं सेवमानः सततं सेव्यस्त्रिजगतां भवेत ।
शार्ङ्गिणं ये परित्यज्य देवमन्यमुपासते ।

सर्वस्यापि पुरुषार्थस्येश्वरकृपा लभ्यत्वात् स कामानामपि भक्तानां स एव भुक्तिमुक्तिद इति। केशव एव देवः सेव्यो नान्यः। यां तु भुक्तिमन्ये देवाः प्रयच्छन्ति तामपि तस्य भगवतआज्ञया तत्प्राणि कर्मानुरूपमेव यतस्ते कृपणा न स्वतन्त्राः। यो यो यां यां तनुमित्यादि गीतोक्तेः। श्रमेणाराधिता देवास्त्रिवर्ग फलदा नृणाम्। पीतवासा महानेकश्चतुर्वर्ग फलप्रदः। स्वपादसेविनां पुंसां लक्ष्मीभर्त्तुश्चतुर्भुजात्। धर्मार्थ काममोक्षाणां दाता नान्योऽस्ति कश्चने त्युक्तेश्च। श्रुतिश्चात्र भवति–एको वशी सर्वगः कृष्ण ईड्य एकोऽपि सन् बहुधा यो विभाति। तं पीठस्थं येऽनुभजन्ति धीरा स्तेषां सिद्धिः शाश्वती नेतरेषामिति(१५५)।

---

ते सद्भिश्च बहिष्कार्या वेदहीना यथा द्विजाः।
बन्धको भवपाशेन भवपाशाच्च मोचकः।
कैवल्यदः परं ब्रह्म विष्णु रेव सनातनः।
एषनिष्कण्टकः पन्था यत्र संपूज्यते हरिः।
कुपथं तं विजानीयाद् गोविन्द रहितागमम्।
वासुदेवं परित्यज्य योऽन्यदेव मुपासते।
तृषितो जान्हवी तीरे कूपं खनति दुर्मतिः।
(१५५) एकोऽपि सन् बहूनां कामान् विदधाति यस्तं

शाश्वती सिद्धिः सर्वेषु कालेषु देशेषु पात्रेषु च सर्वपुरुषार्थ प्राप्तिः ।

मनसि कामवासनासु सतीषु स्वस्मिन्नाहार्य निष्कामत्वारोपेण भजने तु धूर्तत्वापातदोषः । ध्यायन्नस्ति निमील्याक्षि बहिर्धावति यन्मनः । स धूर्तः शठधीर्मत्स्यान् धर्त्तुं बक इवोद्यतः । कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् । इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यत इत्युक्तेः । यदि न समुद्धरन्ति यतयो हृदिकामजटा दुरधिगमोऽसतां हृदिगतोऽस्मृत कण्ठमणिः। असुतृपयोगिनोमुभयतोऽप्यसुखं भगवन्ननपगतान्तकादनधिरूढ़पदाद्भवत इति श्रुतिस्तुतेश्च१५६।

---

पीठस्थं सर्वराज्यसिंहासनस्थं कृष्णं ये धीरा विवेकिनो भजन्ति तेषामेव शाश्वती सिद्धिर्भवति नेतरेषां हरिविमुखानां देवेन्द्रादीनामपि किम्पुनस्तत्सेविनाम् । कदाचित्पूर्वतपोयोगबलाद्दैवाज्जातापि सिद्धि र्वेणादीनां बलिनृगादीनामिव च नश्वरा भवति । श्रीकृष्णभक्तानां तु ध्रुवादीनामिव निष्कण्टकास्थिरेति भावः ।

( १५६ ) कामजटाः कामवासनाः । यतय इत्युपलक्षणम्भगवन्मार्गप्रवृत्ताः सर्वेऽपीत्यर्थः । यदि न समुद्धरन्ति नोत्पाटयन्ति तर्हि तेषामुभयतोऽप्यसुखम् । भोगवैभवप्राकट्य भयाच्चेह दुःखम्भवत ईश्वरादपि सर्वत्र दुःखम् । ब्रह्मचारि गृहस्थ-

ननु तस्याः साधनानि गायन्त्याचार्याः । तत्तु विषयत्यागात् सङ्गत्यागाच्चेति नारदसूत्रोक्तेर्भक्तिसाधनं विषयतदासङ्गत्यागौ यदा स्वीक्रियेते तदा कथं पुनस्तदत्याग एव सा सिध्येत् असाधनानुचिन्तनं बन्धाय भरतवदिति सांख्य सूत्रमनुसृत्य बन्ध एव ततः संभवेदिति चेन्नैष

---

वानप्रस्था हि ज्ञानाभावेऽपि तीर्थव्रतजपार्चनयज्ञदानादिना धर्मन्निष्पाद्य भौमं दिव्यं वा विषयसुखमुपभुञ्जीरन् सकामाः निष्कामास्तु चित्तशुद्धिद्वारा मोक्षमेव साक्षात् साधयेरन् । संन्यासिनस्तु सन्न्यस्तकर्मत्वेन तत्रानधिकारिणो यते र्भिक्ष्यैव योगं युञ्जानस्य तत्किमपि न सिध्येत् प्रत्युत वान्ताशित्वापत्तिः । नह्यनधिकारेऽधिकारारोपेणोपासना प्रतिपत्तिवद्दण्डकमण्डलुकन्थामात्रपरिग्रहेण कश्चिन्मस्करी सिद्धिलेशमुपेयात् । न लिङ्गं धर्मकारणमित्युक्तेः । शान्तो दान्त उपरतस्तितिक्षुरित्यादि श्रुत्या हि—

मोक्षद्वारे प्रतीहाराश्चत्वारः परिकीर्त्तिताः ।

शमो विवेकः संतोषश्चतुर्थः साधुसङ्गम इत्याद्युक्तिभिश्च संन्यासे शान्तादेरेवाधिकार आम्नातः । यमाद्यष्टाङ्गयोगनिष्ठो यः स सन्न्यासीति च सिद्धान्तः । इत्थं च तेषामितो भ्रष्टस्ततो भ्रष्ट इति न्यायेन प्रागुक्तादुरवस्थैवेत्याशयः । दण्डग्रहणमात्रेण नरो नारायणो भवेदित्यादि वचनन्तु संन्यासस्तुतिपरम् सर्वाश्रमोत्तमत्वात् । अत्रोक्तं वार्तिककृद्भिः—प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । सन्न्यासिनोऽपि दृश्यन्ते दैवसन्दूषिताशया इतीति ॥

दोषः । प्रस्तुतस्य नारदसूत्रस्य निष्कामभक्तिसाधनपरत्वेन नेयत्वात् । सा न कामयमाना निरोधरूपादित्युपक्रमात् । बन्धाभावस्तु पूर्वमेवोपदर्शितः । ननु विषम मिदमुच्यते यत्सेव्यमानोऽपि विषयआसक्तिन्न जनयेदिति।तत्रोत्तरम् भस्मकवदिति । यथा बुभुक्षायां सत्यामपि भस्मकरोगे यथा कथंचिद् भूरिभक्ष्यमाणमप्यन्नादि न तृप्तयेऽलन्तद्वद्भक्तौ सत्यां यथा कथंचित् सेव्यमानोऽपि विषय आसक्तिन्न जनयेदेव । न च निहीनोपमा । जरयत्याशु वा कोशन्निगीर्णमनलो यथेतिवद्ग्राहकत्वगुणदृष्ट्यैवोपमानत्वात् । तादृश्यां च दशायां भगवत् कथाकथनश्रवणादिना चित्तं शुद्ध्येत् । तत्र प्रमाणं यथा—

शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्त्तनः ।
हृद्यन्तः स्थो ह्य भद्राणि विधुनोति सुहृत्सताम् ।

सुहृदित्यनेन द्वा सुपर्णा स युजा सखाया इति श्रुत्युक्तेरन्तर्याम्यभेदः श्रीकृष्णस्या वेद्यते ।

नष्टप्रायेष्व भद्रेषु नित्यं भागवतसेवया ।
भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकीति१५७

---

(१५७) भवन्ति चात्र सुबहुशो वचनानि । तेषु कानिचिदुल्लिख्यन्ते । यथा—

एतच्च हृदयान्तःस्थस्यान्तर्यामिणः साक्षित्व-श्रवणात् संगच्छते । न केवलमभद्राणि विधूय भक्तचित्तमेव शोधयति अपि तु स्वगुणानुभवजन्यानन्देनाप्लावयति । यथोक्तम्-

हृद्गतः स्वगुणान् श्रुत्वा पूर्णः प्लावयते जनानिति
पावितांगाः सुसंवृत्ताः श्रुत्वे मामादितः कथाम् ।

---

प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् ।
धुनोति शमलं कृष्णः सलिलस्य यथा शरदिति ।

अशेष पाप नाशे दृष्टान्तः, सलिलस्य यथा शरदिति । समूलं सबीजं निःशेषं पापन्नाशयतीति भावः ।

श्रुतः संकीर्त्तितो ध्यातः पूजितश्चादृतोऽपि वा ।
नृणां धुनोति भगवान् हृत्स्थो जन्मशता शुभम् ।
को वा भागवतस्तस्य पुण्यश्लोकेड्य कर्मणः ।
शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ।
पिबन्ति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु संभृतम् ।
पुनन्ति ते विषयविदूषिताशयं व्रजन्ति तच्चरणसरोरुहान्तिकम् ।

यदुत्तमश्लोकगुणानुवादः संगीयते ऽभीक्ष्णममङ्गलघ्नः ।
तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ।
तद्वाग्विसर्गो जनताऽघविप्लवो यस्मिन्प्रति श्लोकमबद्धवत्यपि
नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ।

अत्र टीका कृद्भिरुक्तम्-यद्यानि नामानि वक्तरि सति शृण्वन्ति श्रोतरि सति गृणन्ति अन्यदा स्वयमेव गायन्तीति ॥

नारायणाश्रयां पुण्यां सर्वपापप्रणाशिनी मितिच।

ननु चित्तशुद्धकारणानि तु अन्यानि बहूनि साधनानि सन्ति तत्किं कथाश्रवणेनैवेत्याग्रह इति कुतर्कपरिहारस्तु। शुद्धिर्नृणान्न तु तथेड्य दुराशयानां विद्याश्रुताध्ययनदानतपः क्रियाभिः सत्त्वात्मना मृषभ ते यशसि प्रवृद्धसच्छ्रद्धया श्रवणसंभृतया यथा स्यादिति ॥

श्रीमद्भागवतपद्येन (१५८) क्रियते।

लघ्वपि भक्त्यधिकारे महत् क्षेपकमपरसर्वहानादिति (१५९)।

---

(१५८) हे ईड्य हे ऋषभश्रेष्ठ सत्त्वात्मनां तव जानानां ते यशसि प्रवृद्धया श्रवणसंभृतया सच्छ्रद्धया यथा शुद्धिः स्यात तथा दुराशयानान्तव विमुखानां रागिणां विद्यादिभिः शुद्धिर्न भवति। विद्या देवान्तरोपासना। श्रुतं केवलकर्मकाण्डबोधकशास्त्रश्रवणम्। अध्ययनं वेदाध्ययनम्। दानं सर्वस्वदानादि। तपः कृच्छ्रचान्द्रायणादि। क्रिया अग्निहोत्रादिरेभिर्विद्यादिभि र्दुराशयानां न कदापि मनः शुद्धिर्भवतीति ॥

(१५९) लघु अपि सकृत्स्मरणकीर्त्तनादि महतां पापानामपि क्षेपकं नाशकं भवति। यतो भक्त्यधिकारेऽपरसर्वप्रायश्चित्तानां हानगानात् परित्यागाभ्यनुज्ञानात्। भक्तानां भक्तेरितरसाधनेष्वनधिकारात। सर्वधर्मान् परित्यज्येत्यादि गीतोक्तेरिति।

अत्रानुरूपाणि अन्यानि वचनानि यथा—महापतकयुक्तोऽपि ध्यायन्निमिषमच्युतम् । भूयस्तपस्वी भवति पङ्क्तिपावनपावन इति ।

स्तेनः सुरापो मित्रध्रुग्ब्रह्महा गुरुतल्पगः ।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ।
सर्वेषा मप्यघवतामिदमेव सुनिश्चितम् ।
नाम व्याहरणं विष्णो र्यतस्तद्विषया मतिरिति ।

अस्य सर्वेषामित्यादि पद्यस्यार्थो यथा—यतो नामव्याहरणात्तद्विषया नामोच्चारकपुरुषविषया मदीयोऽयं मया सर्वतो रक्षणीय इति विष्णोर्मति र्भवतीति । विष्णु पुरीपदानां अलमलमिदमेव प्राणिनां पातकानां निरसनविषये या कृष्णकृष्णेति वाणी । यदि भवति मुकुन्दे भक्तिरानन्दसान्द्राविलुठति चरणाब्जे मोक्षसाम्राज्य लक्ष्मीरिति ।

ईश्वरपुरी पादानाम्—

कल्याणानां निधानं कलिमलमथनं पावनं पावनानां
पाथेयं यन् मुमुक्षोः सपदि परपदप्राप्तये प्रोच्यमानम् ।
विश्रामस्थानमेकं कविवर वचसां जीवनं जीवनानां
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये कृष्णनामेति ।
क्षेपन्ते दुरितानि मोहमहिमा संमोहमालम्ब्यते
सालङ्कं नखरञ्जनीं कलयति श्रीचित्रगुप्तः कृती ।
सानन्दं मधुपर्क संभृतिविधौ वेधाः करोत्युद्यमं
वक्तुं नाम्नि तवेश्वराभिलषिते ब्रूमः किमस्मात्परमिति ।

व्यासपादानाम्

मधुर मधुरमेतन् मङ्गलं मङ्गलानां सकलनिगमवल्ली सत फलं चित स्वरूपम् । सकृदपि परिगीतं श्रद्धया हेलया वा भृगुवर नरमात्रं तारयेत् कृष्णनामेति ॥ अन्येषाम्

यस्मिन्यस्तमतिर्न याति नरकं स्वर्गेऽपि यच्चिन्तने
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः ।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः
किं चित्रं तदघं प्रयाति विलयं तत्राच्युते कीर्तिते इति ।

श्रीमद्भागवतम्—

नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।
अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ।
तस्मात् संकीर्त्तनं विष्णो जंगन्मङ्गल मंहसाम् ।
महतामपि कौरव्य विद्ध्यैकान्तिकनिष्कृतमिति ।

महतामपि ब्रह्महत्यादि पापानां प्रायश्चित्तं विष्णोः संकीर्त्तनं विद्धीति ।

नातः परं कर्मनिबन्धकृन्तनं मुमुक्षतां तीर्थपदानुकीर्तनात् ।
न यत्पुनः कर्मसु सज्जते मनो रजस्तमोभ्यां कलिलं ततोऽन्यथेति

अस्य नातः परमित्यादि श्लोकस्यार्थो यथा—अतः परंकर्म निबन्धकृन्तनं मुमुक्षतां कर्मबन्धमोक्ष साधनं नैव । तेषां हि तदेवसाधनफलम् । अन्यत्राधिकारा भावात् । यद्यतोऽनुकीर्त्तनात पुनः पुनः कर्मसु मनो न सज्जते । दुःखानुभवात् । यतो रजस्तमोभ्यां कलिलं मनस्तु रजस्तमोगुण जलप्रवाहे पतितं तत्र निमग्नं भवतीति ।

चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि । तेन शुद्धेन पवित्रेण पूतेन पाप्मानमरातिं तरेम लोकस्य द्वारमर्चिस्मद् भ्राजमानं महस्वदमृतस्य धारा बहुधा दोहमानं चरणं लोके सुधितां ददात्विति श्रुतेः ।

अस्याश्रवणमित्यादि श्रुत्या अर्थो यथा—येन चरणेन पावस्यपि पूतः पवित्रः सन्दुष्कृतानि पापानि तरति तच्चरणं

शाण्डिल्यसूत्रेण च स क्रियते । एवं च पापक्षये जायमाने ।

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रता-

इति भगवदुक्तेर्निष्कामभक्तिप्रवृत्तिः सुसम्पादा

---

पवित्रं स्वसेवनेन पावित्र्यकरं । ताभ्यः पावित्र्य मुपक्रमादिति शाण्डिल्यसूत्रात् । विततं विस्तीर्णं भूर्भुवः स्वरतिक्रम्य वर्त्तमानं पुराणं सनातनन्तेन चरणेनाऽऽरातिं वैरिणं पाप्मानं वयमतिशयेन तरेम । कथंभूतेन । शुद्धेन स्वयं भूदत्ताघर्य्य जलधौतेन । पुनः । पवित्रेण पावित्र्य कारकेण । पूतेन निर्मलेन । तच्चरणं लोके सुधाधारां ददातु । कथंभूतं चरणम् । लोकस्य वैकुण्ठलोकस्य अर्चिष्मत् दीपवद्द्वारम् । भ्राजमानं देदीप्यमान न केवल मेतावत् । अपि च महस्वत् महो ब्रह्म तेजो मण्डलं तद्वत् । अतएव लोके बहुधा बहुप्रकारा अमृतस्य धारा धर्मार्थ काममोक्षभक्तिरूपा । कामधेनुरिव भक्तेभ्यो दोहमानम् । एवम्भूतं चरणं भजेमेति ।

पतितः स्खलितो वार्त्तः क्षुत्वा वा विवशो गृणन् ।
हरये नम इत्युच्चै र्मुच्यते सर्वपातकै रिति ।
ये नृशंसा दुराचाराः पापाचार रताः सदा ।
तेऽपि यान्ति परं धाम नारायणपराश्रया इति च ।
दैवाच्छूकर शावकेन निहतो म्लेच्छो जराजर्जरो
हा रामेण हतोऽस्मि भूमि पतितो जल्पंस्तनुं त्यक्तवान्
तीर्णो गोष्पदवद्भवार्णवमहो नाम्नः प्रभावात् पुनः
किं चित्रं यदि रामनामरसिकास्ते यान्ति रामास्पदमिति।

पुण्यकर्मणामित्यस्य चायमाशयः । यद्भगवत् संबन्धिकथाश्रवणादिना न पापमात्रन्नश्यति किन्तु पुण्यमप्युपचीयत इति । तथा चोक्तम् ।
तस्माद्धीमन् कथां पुण्यां गोविन्दचरिताश्रिताम्
महापुण्यप्रदा यस्माच्छृणुष्व नृपसत्तमेति (१६०)

ये च पूर्वं सकामा भक्ता विषयप्रियास्ते हि चित्तशुद्धौ विषयप्रीति सजातीयां भगवदनुरक्तिं यथा सौकर्येणानायासं प्राप्नुयु र्न विषयविरक्तास्तथा विजातीयत्वात् ।

या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान् मापसर्पतु ।

कृच्छ्रो महानिह भवार्णवमप्लवेषां षड्वर्ग न क्रमसुखेन तितीर्षयन्ति । तत्त्वं हरेर्भगवतो भज

---

( १६० ) भवन्ति चात्रान्यानि वचनानि यथा—
ब्रह्माण्डशतदानस्य यत्फलं समुदाहृतम् ।
तत्फलं लभते जन्तुः कृते गोविन्दकीर्त्तन इति ।
एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधा वभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवायेति ।
सर्वे यज्ञा असंख्या व्रतनियुतशतं सर्वदानं यथावत्
तीर्थेषु स्नानलक्षं प्रतिजनिषु तपः पावके देहदाहः ।
प्रादक्षिण्यं पृथिव्याः श्रुतपठनशतं चैतदाद्या महान्तः
सर्वे धर्माः शतांशै रपि न हि समतां रामनाम्नः प्रयन्तीति

नीयमङ्घ्रिं कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णमि-
त्याद्युक्तेः ( १६१ ) ॥

यं मां स्मृत्वा गाधा गाधा भवति यं मां स्मृ-
त्वा व्रती व्रती भवति यं मां स्मृत्वा स कामो
निष्कामो भवतीत्यादि भगवदुक्त श्रुतेः ।

येन केनाप्युपायेन स्मृतो नारायणोऽव्ययः ।
अपि पातकयुक्तस्य प्रसन्नः स्यान्न संशयः ।
सर्व धर्मोज्झिता विष्णो र्नाममात्रैकजल्पकाः ।
सुखेन यां गतिं यान्ति न तां सर्वेऽपि धार्मिकाः ।

इत्याद्युक्तेश्च । किं च भव तापस्य दैवात् त-
दात्वेऽपि न तेन भजनबाध इति महान् गुणः ।

नैषाति दुःसहाक्षन्मां त्यक्तोदमपि बाधते ।
पिबन्तं त्वन्मुखाम्भोज च्युतं हरिकथामृतम् ।

---

( १६१ ) अप्लवेषान्न प्लव स्तारणहेतु र्भगवत् पदाम्बुज-
रूपो येषान्तेषामिह संसारतरणे महान् कृच्छ्रः । केषाम् । ये
सुखेन बाहुबलेन ज्ञानादिना भवार्णवं तितीर्षन्ति तरितुमि-
च्छां कुर्वन्ति । कथम्भूतं भवार्णवम् । षड्वर्गनक्रमिन्द्रिय षड्-
वर्गग्राहम् । यद्वा कामादयः षडरयो नक्रा यस्मिंस्तम् । ते तु
नित्यं क्षुधिता अप्लवं जीवं मृगयन्ति प्राप्तं प्राप्तं भक्षयन्ति
च । तस्माद्धे पृथो त्वं तु हरेर्भगवतोऽङ्घ्रिमुडुपं प्लवं कृत्वा
दुस्तरार्णवं व्यसनं दुःखसमुद्रं संसारमुत्तर । कथंभूतम् अङ्घ्रिम्
भजनीयम्भजनार्हमित्यर्थः ॥

त्वत्कथामृतं तप्तजीवनं कविभिरीड़ितं कश्मलापहम् । श्रवणमङ्गलं श्रीमदा ततं भुवि गृणन्ति ये भूरिदा जना इत्याद्युक्तेः (१६२) ।

भगवद्भजनं विना नान्यश्च कश्चनोपायः पुष्कलो भवतापोपशान्तेः । तापत्रयेणाभिहतस्य घोरे संतप्यमानस्य भवाध्वनीश । पश्यामि नान्यच्छरणं तवाङ्घ्रिद्वन्द्वातपत्रादमृताभिवर्षात् बालस्य नेह शरणं पितरौ नृसिंह नार्तस्य चागदमुदन्वति मज्जतो नौः । तप्तस्य तत्प्रति विधिर्य इहाञ्जसेष्टस्तावद्विभो तनुभृतान् त्वदुपेक्षिताना मित्यादि परम प्रामाणिक वचनकलापात् ( १६३ ) ।

तदत्रायमविरक्तभक्तपक्षे निष्कर्षः—

विश्वरूपं हरिं ध्यायन् कुर्वन्नहिंसाविवर्जिताम् क्रियां तेनैव धर्मेण कृष्णमर्चेत धर्मवित् ।

---

( १६२ ) भूरिर्ना वासुदेवे च हरे च परमेष्ठिनीति कोशाद्ये भुवि गृणन्ति ते ब्रह्मविष्णु शिवलोकानां दातार इति । भूरिदा इति पदस्यार्थः ॥

( १६३ ) अत्र अन्यानि वचनानि च यथा—
आर्त्ताविषण्णाः शिथिलाश्च भीताघोरेषु च व्याधिषु वर्त्तमानाः । संकीर्त्य नारायणशब्दमात्रं विमुक्तदुःखा सुखिनो भवन्तीति ।

एवं क्रिया योगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिता-
मिति (१६४) ।

भगवद्भजन व्यतिरेकेणच नापरः कोऽप्युपा-
यः प्रायश्चित्तादिश्चित्तशुद्धेः ।

प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् ।
न पुनन्ति हि राजेन्द्र सुराकुम्भमिवापगाः ॥

---

संसारसिन्धुमतिदुस्तरमुत्तितीर्षो र्नान्यः प्लवो भगवतः पुरुषो-
त्तमस्य । लीलाकथारसनिषेवणमन्तरेण पुंसो भवेद्विविधदुःख-
दवार्दितस्येति च ॥

(१६४) उभयत उभयलोकतः सिद्धिम्पुरुषार्थलाभम् ।
तथा च नृसिंह तापिन्याम् । स्त्रीपुंसो र्वा य इहैव स्थातु मपेक्षते
तस्य सर्वैश्वर्यं ददाति । यत्र कुत्रापि म्रियते देहान्ते देवः
परंब्रह्म तारकं व्याचष्टे । येनासावमृती भूत्वा अमृतत्वं गच्छ-
तीति । अस्याः स्त्रीपुंसोरित्यादि तापिनी श्रुतेरर्थो यथा—स्त्री-
पुंसोर्वा यः कोऽपि भगवद्भक्तो य इहैव स्थातुमपेक्षत इच्छति
तस्मै सर्वैश्वर्यं ददाति । स यत्र कुत्रापि कीकटम्लेच्छदेशादा-
वपि म्रियेत तस्य देहान्ते परं ब्रह्म तारकं व्याचष्टे । तारः
प्रणवः । तस्मिन्स्थितं कं सुखं प्रणवावयवरूपं वासुदेवसंकर्षण-
प्रद्युम्नानिरुद्धाख्यं येन परं ब्रह्म कथनेनामृती भूत्वा स श्रोता-
मृतत्वं कैवल्यं प्राप्नोति । स्त्रीपुंसो र्वेत्यनेन भक्तौ सर्वेषामधि-
कारित्वमुक्तमिति ॥

इत्युक्तेः (१६५)।

यदा हरिपराणां सङ्गत्या सर्वपापमोक्षः।
हरि भक्तिपराणां तु सङ्गिनां सङ्गमात्रतः।
मुच्यते सर्वपापेभ्यो महापातकवानपीत्या-
ऽऽदौ पठ्यते तदा किमुवाच्यं यद्भगवद्भजनेन सर्वपाप प्रहाणिरिति।

ननु पापापनोदार्थं भगवद्भजनस्य प्रायश्चित्तत्वे सति तर्हि तत्तत् तत् पाप प्रायश्चित्तरूपेण श्रुतिस्मृतिषु तत्र तत्र पठ्येतेति चेदत्रोच्यते किञ्चित्-श्रुतिस्मृतिषु प्रायश्चित्तरूपेण पापहरणत्वं भगवद्भजनस्य नाम्नातम्। कुतः कर्मप्रकरणे सर्वपापहरत्वेन तन्माहात्म्यवर्णनात् कर्माङ्गत्वमापतेदिति महती मर्यादाहानिः स्यात्। कर्मान्तरप्रवेशात् इति मनसि कृत्वा नाम्नातं तत् तत्र तत्रेति। (१६६)।

---

(१६५) अपरञ्च-

व्रतान्येव हि दानानि तपांस्य नशनानि च।
वेदोपयुक्ता यज्ञाश्च कर्माणि च शुभानि च।
न निष्पुनन्त्यभक्तं च सुरा कुम्भमिवापगा इति।

(१६६) ननु कर्माङ्गत्वेऽपि का क्षतिः? उच्यते। सद्धर्मप्राप्तिरिति। तत्स्थानत्वादनन्यधर्मः खले बालीवदिति शाण्डिल्यसूत्रोक्तेः। अस्य तत्स्थानत्वादित्यादि शाण्डिल्यसूत्रस्या

र्थो यथा—प्रायश्चित्तन्तु तस्येदं हरिसंस्मरणं परमित्यादौ प्राय-श्चित्तस्थाने विहितत्वादपि न भगवन्नामोच्चारणादेर्भजनस्य प्रायश्चित्तधर्मत्वम्। खलेवाली वत्। खलेवाली यूपो भवतीत्यत्र पश्वर्थयोजने यूपकारके खलेवाली विधि र्न तु यूपधर्माष्टास्र-करणादि प्रसङ्ग स्तद्वदत्रापि नखलोमादि वपनानां प्रायश्चित्त धर्माणामप्राप्तेन हरिनाम्नः प्रायश्चित्तत्वं कर्माङ्गत्वमिति।

सर्वसाधनेभ्यो भगवद्भजनस्याधिक्यनिरूपणाभिसन्धिना तत्पाठे न तत्पठितमिति। यद्वा भगवन्नामोच्चारणेना ऽना-यासेन पापिजीवमुक्तिप्रसङ्गमसहमानस्य सृष्टिविस्तारप्रियस्य जनकस्य शापभयादपीति। तादृशपापाभावादेव नाऽऽम्नासिषु रित्यप्यत्र द्रष्टव्यम्। एवं भक्तिमाहात्म्ये स्थिते तत्राविश्वासे-नानधिकारिणो वर्णाश्रमधर्मपरा अपि पापनिवृत्तये प्रायश्चि-त्तान्तराणि कुर्वन्तु नाम। तानि परं भगवद्भजनमाहात्म्यरहस्य गर्भितत्वेन भगवद्भजनसंबन्धेनैव पापमोचनानि परं भवन्ति भगवद्भक्त्यधिकृतानां तु।

निषिद्धाचारतो दैवात् प्रायश्चित्तं तु नोचितम्।
इति वैष्णव शास्त्राणां रहस्यन्तद्विदां मतमित्युक्तेः।

प्रमादादिना निषिद्धाचारे जाते भगवद्भजनमन्तरेणान्य प्रा-यश्चित्तकर्मकरणानावश्यकता भगवद्भजनमार्गे। ज्ञानपूर्वक्रियमा-णपापानान्तु फलभोगेनैवनिष्कृत्तिः। भगवद्भजनव्यतिरिक्तेऽन्यत्र यत्र क्वापि कर्मादौ पापापनोदनासामर्थ्यात्।

धर्मः सत्यदयोपेतो विद्या वा तपसान्विता।
मद्भक्त्यपेतमात्मानं न सम्यक् प्रपुनाति ही त्युक्तेः।

तथा च—पापमोचनानि प्रायश्चित्तादि कर्माणि यानि यानि-श्रुत्यादिष्वाऽऽम्नातानि तेषु प्रत्येकं येन केनापि प्रकारेण भगव-

ननु श्रुतिस्मृतिष्वदर्शनादप्रामाण्यमेव लाघवात् कुतोनाभ्युपेयतां भगवद्भजनस्य प्रायश्चित्तरूपत्वे इति चेन्न। परमाप्तवाक्य श्रीमद्भागवतादिमूलानुमेयश्रुतिस्मृत्यविरोधात्। प्रत्यक्षश्रुतिस्मृति विरोधे ह्य प्रामाण्यं स्यात्। ननु श्रम लाघवाद् गुरुश्रमानुष्ठेयप्रायश्चित्तान्तरविरोधादप्रामाण्यमिति चेत्। नेत्युच्यते। स्मृतिकीर्त्योः कथादेश्चार्त्तौ प्रायश्चित्तभावात्। भूयसामऽननुष्ठितिरिति चेदाऽऽप्रयाणमुपसंहारान्महत्स्वपीति शाण्डिल्यसूत्राभ्याम् (१६७)।

---

द्भजनस्य संबन्धगन्धादेव तानि पापानि मोचयेयुर्नान्यथा। इत्थं सति भागवतानां तु तत्र राजदण्डवत् सामाजिकदण्डरूपप्रायश्चित्त प्रपञ्चन पथेऽधिकाराभावादघतमोनाशकः साधनाकों भगवद्भजनमेवेति सिद्धान्तः। राजसमाजादीनां भगवद्भक्तदण्डने भगवानेव मृष्येन्न मृष्येद्वेत्यन्य देतत्।

(१६७) पापे गुरूणि गुरुणि लघूनि च लघुन्यपि।
प्रायश्चित्तानि मैत्रेय जगुः स्वायम्भुवादयः।
प्रायश्चित्तान्य शेषाणि तपः कर्मात्मकानि वै।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम्।
यन्नामकीर्त्तनं भक्त्या विलापनमनुत्तमम्।
मैत्रेयाशेषपापानां धातूनामिव पावकः।
पाविताङ्गाः स्म संवृत्ताः श्रुत्वैनामादितः कथाम्।
नारायणाश्रयां पुण्यां सर्वपापप्रणाशिनी मिति

अनायासमहायासौ न फले तु प्रयोजकौ ।
किन्तु कर्मस्वरूपं हि कारणं तद्विदो विदुरिति
वायुपुराणीय माघमाहात्म्योक्तेर्वा (१६८) ।
द्वापरान्ते भगवान्नारदो ब्रह्माणं प्रति जगाम ।
कथं नु भगवन् गाम् पर्यटन् कलिं संतरेयमिति।
स उवाच । आदिविष्णो र्नारायणस्य नाम्नेति
प्रत्यक्षश्रुतेश्च (१६९) ।

---

वचनानां प्रामाण्येनार्त्तौ युक्तम् भगवज्जनस्य निवेशिनमिति ।
स्यादेतन्न्यायविरोधादेतद्वचनानां स्वल्पपापविषयत्वमेव युक्तम्
अन्यथा भूयः क्लेशसाध्यानामननुष्ठानलक्षणमप्रामाण्य मिति
चेन्न । तेषामासरणमुपसंहारस्मरणात् क्लेशाधिक्यात ।

तस्मादहर्निशं विष्णुं संस्मरन् पुरुषो मुने ।
न याति नरकं शुद्धः संक्षीणाखिलकिल्विष इत्युक्तेरिति ।

( १६८ ) गुरुत्वं च लघुत्वं च न फले तु प्रयोजके ।
अपि चाल्पप्रयासेन गोदुग्धं साध्यमित्यथ ।
न हि तत्तावता लोके सर्वदुःखनिवारणम् ।
दुरापमपि शार्दूल दुग्धं लोकेन शस्यते ।
लघुदीपो गृहे तिष्ठंस्तमो नाशयति ध्रुवम् ।
अति धौतं कांस्यपात्रं स्थूलमण्वपि नोत्तममिति ।

च तत्रैव वायु पुराणीय माघ माहात्म्ये—

( १६९ ) कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।
द्वापरे परिचर्यायां कलौ तद्धरि कीर्त्तनात् ।
कले र्दोषनिधे राजन् नस्ति ह्येको महान् गुणः ।

सुमति प्राप्तिहेतुश्च नामाम्नानमित्याम्नायते ऋक् संहितायाम् । यथा—ओम् आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे। तत्सदिति (१७०) ।

सुमतिश्च चित्तशुद्धिसापेक्षा । तदुक्तम्—शुद्धे चित्ते बुद्धयः संस्फुरन्तीति ।

---

कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ।

हरेर्नामैव नामैव नामैव ममजीवनम् ।

कलौ नास्त्येव नास्त्येव नास्त्येव गति रन्यथेत्याद्युक्तेश्चेति।

नन्वेभिर्वचोभिः कलावेव भगवद्भजनम्प्रायश्चित्तरूपेण ज्ञेयन्नान्यदेति चेन्न । कलौ मनुष्याणां सामर्थ्यह्रासादन्यप्रायश्चित्तादि दुष्करत्वे तात्पर्यं नान्यदा भगवद्भजनस्य पापमोचनत्वाभावे ।

अतः कलौ तपोयोग विद्या यज्ञादिकाः क्रियाः ।

साङ्गा भवन्ति न कृताः कुशलैर्वापि देहभिरित्युक्तेः ॥

( १७० ) हे विष्णो तत्तव नाम चिच्चित् स्वरूपम् । अत एव महः स्वप्रकाशरूपन्तस्मादस्य नाम्न आ ईषदपि जानन्तो वयं न तु सम्यगुच्चारणमाहात्म्यादिपुरस्कारेण तथापि विवक्तन ब्रूमहे । पुरुषव्यत्ययश्छान्दसः । केवलं तदक्षराभ्यासमात्रं कुर्वाणाश्च सुमतिं तद्विषयां विद्यां भजामहे प्राप्नुमो यतस्तदेव प्रणवव्यञ्जितं वस्तु सत् स्वतः सिद्धमिति ।

माहात्म्यप्रसङ्गाद् अन्यान्यपि भगवद्भजनमाहात्म्यवचनानि उल्लिख्यन्ते । यथा—

अहो वतश्वपचोऽतो गरीयो यज्जिह्वाग्रे वर्त्तते नाम तुभ्यम् ।

तेपुस्तपस्ते जहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणन्ति ये त इति

अस्य अहो बतेत्यादिपद्यस्यार्थो यथा—यद्यस्य जिह्वाग्रे तुभ्यन्तवनाम वर्त्तते स श्वपचोऽपि गरीयान् अर्थान्नामविमुखः श्रुत्यधिकार्य्यपि निन्द्यो देहापवित्रत्वात्। ते तपस्तेपुः कृतवन्तो जुहुवुर्होम कृतवन्तस्त एव सर्वतीर्थेषु सस्नुः स्नाता आर्याः सदाचारा अपि त एव ब्रह्म वेदमनुवारं वारमूचुर्नाम्नः सर्वमूलत्वादिति।

नामोपास्स्वेति श्रुत्यधिकरणी कृतं विशेषं च दर्शयतीति वेदान्तसूत्रन्तूपासनाङ्गत्वेन विधौ ज्ञेयम्। नामतोऽपि वाचो भूयस्त्वोक्तेः।

सद्भक्तिः सरितां पतिं चुलुकवत् खद्योतवद्भास्करं
मेरुं पश्यति लोष्ठवत् किमपरं भूमेः पतिं भृत्यवत्।
चिन्तारत्नचयं शिलाशकलवत् कल्पद्रुमं काष्ठवत्
संसारं तृणराशिवत् किमपरं देहन्निजं भारवदिति।
यथा यथा हरेर्नाम कीर्त्तयन्ति च नारकाः।
तथा तथा हरौ भक्तिमुद्वहन्तो दिवं ययुरिति।

किरातहूणान्ध्र पुलिन्दपुष्कशा आभीरकङ्का यवनाः खशादयः।
येऽन्ये च पापा यदुपाश्रयाश्रयाः शुद्ध्यन्ति तस्मै प्रभविष्णवेनम इति।

कृष्णं संकीर्त्तयन्मर्त्यः संसारान् मुच्यते यथा।
तथा नान्यः कलौ पन्था विद्यते पृथिवीपत इति।
विहायगीत वाद्यानि पूजाकाले सदा हरेः।
पठनीयं सदा भक्त्या विष्णोर्नाम सहस्रकम्।
श्लोकेनैकेन देवर्षे विष्णोर्नाम सहस्रतः।
पठनेन फलं प्रोक्तं न तत्क्रतु शतैरपि।

मन्त्र हीनं क्रिया हीनं यत्कृतं पूजनं हरेः ।
परिपूर्णं भवेत् सर्वं सहस्रनाम कीर्त्तनात् ।
विष्णोर्नामसहस्रं तु पूजाकालेषु यः पठेत् ।
अष्टादशपुराणानां फलं प्राप्नोति मानवः ।
सर्वतीर्थानि यज्ञाश्च सर्वे वेदाश्च सत्तमाः ।
नारायणार्चनस्यैते कलां नार्हन्ति षोडशीमिति ।

स उत्तमश्लोकपदारविन्दयो निषेवया किञ्चनसङ्गलब्धया । सन्वन्परां निर्वृतिमात्मनो मुहु र्दुःसङ्गहीनः स्वमनः शमं व्यधादिति । जनैस्त्वदीयै र्भगवन्यथाहं शोभे तथान्यैर्न तु भारभूतैः । स एव विद्वान् स च वै तपस्वी स धार्मिको यस्य हृदिस्त्वमास्से इति ।

सत्कथा श्रवणे बुद्धि र्यस्य यस्य प्रवर्त्तते ।
स स एव स्वयं विष्णुस्तस्मै विप्रनमो नम इति ।
राम नाम जपतां कुतो भयं सर्वतापशमनैकमौषधम् ।

पश्य तात मम गात्रसन्निधौ पावकोऽपि सलिलायतेऽधुनेति । श्रीरामनामामृतमंत्रबीजं संजीवनी चेन्मनसि प्रविष्टा । हालाहलं वा प्रलयानलं वा मृत्योर्मुखं वा विशतां कुतोभीःइति

रामत्वत्तो ऽधिकं नाम इति मे निश्चितामतिः ।
त्वयैका तारिता ऽयोध्या नाम्ना च भुवनत्रयमिति ।

ये मज्जन्ति निमज्जयन्ति च परांस्ते प्रस्तरा दुस्तरा वार्धौ तेऽपि तरन्ति वानरभटान् सन्तारयन्तेऽपि च । नैतेग्रावगुणान-वारिधिगुणा नो वानराणां गुणाः श्रीमद्दाशरथेस्तु नाममहिमा सोऽयं समुज्जृम्भत इति ।

रामेति मन्त्रे इत्यग्निबीजं यथा प्रदीपोऽग्निः काष्ठानि भस्मसात् करोति तथारेफः सर्वपापानि जरयतीति । रेफेऽकार

सूर्यबीजं यथोदितः सूर्यः सर्वान्धकारनाशकस्तथा आकारोऽपि हृदयान्धकारनाशकः । मकारश्चन्द्रबीजम् । चन्द्रो यथा तापहारकः । शीतलस्तथा रामनाममन्त्रे मकारोऽपि संसारतापतप्तानां तापहारकः । उच्चारणमात्रेणैव हृदयं शीतलं करोति तथा कवर्गादिषु सर्वेषु वर्णेषु रेफमकारयो रेफानुस्वारत्वेनोर्द्ध्वगमनात् कृच्छ्रचान्द्रायणादि व्रतैः सहसर्वधर्मेभ्य उपरि गर्जतीति द्योत्यते । तथा रामनाममन्त्रे रेफस्य दीर्घत्वाद् ब्राह्मणक्षत्रियवैश्यशूद्रशूद्राधमान्त्यजचाण्डालादिष्वपि ये रामेति नामोच्चारणं कुर्वन्ति ते सर्ववर्णेभ्यो दीर्घा (उत्तमाः पूज्या) भवन्तीत्युक्तमभियुक्तैः ।

म्रियमाणो हरेर्नाम गृणन् पुत्रोपचारितम् ।
अजामिलोऽप्यगाद् धाम किम् पुनः श्रद्धया गृणन्निति ।
नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।
अजामिलोऽपि येनैव मृत्युपाशादमच्युत ।
तस्मात् संकीर्त्तनं विष्णो र्जगन् मङ्गलमंहसाम् ।
महतामपि कौरव्य विद्ध्यैकान्तिकनिश्चितमिति ॥

महतामपि ब्रह्महत्यादिपापानां प्रायश्चित्तं विष्णोः संकीर्त्तनं विद्धीत्यर्थः ।

ते सभाग्या मनुष्येषु कृतार्था नृप निश्चितम् ।
स्मरन्ति स्मारयन्तीह हरेर्नाम कलौयुग इति ।

एतावताऽलमघनिर्हरणाय पुंसां संकीर्त्तनं भगवतो गुणकर्मनाम्ना मिति ।

कलिं सभाजयन्त्यार्या गुणज्ञाः सार भागिनः ।
यत्र संकीर्त्तने नैव सर्वः स्वार्थोऽभि लभ्यत इति ।

न यज्ञो न योगस्तपो नैव पूजा न तीर्थाटनं वेद पाठो

ऽपि नैव। न वर्णाश्रमाचारधर्मश्च यत्र कलौ राजते केवलं रामनामेति।

सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत्फलम्।
एकावृत्त्या तु कृष्णस्य नामैकं तत्प्रयच्छतीति।
अच्युतेति मनः पूतमनन्तेति वचः पुनः।
गोविन्देति वपुः पूतं ज्ञाताज्ञातैश्च पातकैरिति।
अच्युतानन्त गोविन्द नामोच्चारणभेषजात्।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहमिति।
ध्यायन् कृते यजन् यज्ञै स्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवमिति।
घोरे कलियुगे प्राप्ते सर्व धर्म विवर्जिते।
वासुदेवपरा मर्त्या स्ते कृतार्था न संशय इति।
नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी।
तथापि नरके घोरे पतन्तीत्यद्भुतम्महदिति।
सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रतीति।
पूजितं पूज्यमानं वा यः पश्येद्भक्तितो हरिम्।
श्रद्धयामोदयेद्यस्तु सोऽपि योगफलं लभेदिति।
श्रीविष्णोरर्चनं ये तु प्रकुर्वन्ति नरा भुवि।
ते यान्ति शाश्वतं विष्णोरानन्दं परमं पदमिति।
मुहूर्त्तं वा मुहूर्त्तार्धं यस्तिष्ठेद्धरि मन्दिरे।
स याति परमं स्थानं किमु शुश्रूषणे रता इति।
यत्र यत्र महीपाल वैष्णवी वर्त्तते कथा।
तत्र तत्र हरिर्याति गौ र्यथा सुतवत्सला।

तत्रैव गङ्गा यमुना च तत्र गोदावरी सिन्धु सरस्वती च।

सर्वाणि तीर्थानि वसन्ति तत्र यत्राच्युतो दारकथा प्रसङ्गः ।

न यत्र वैकुण्ठकथा सुधापगा न साधवो भागवतास्तदाश्रयाः ।
न यत्र यज्ञेशमखा महोत्सवाः सुरेन्द्र लोकोऽपि न वै स सेव्यताम् ।

प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् ।
पूजादिना ब्रह्मलोकं त्रिभि र्मत्साम्यतां मियादिति ।

अस्य प्रतिष्ठयेत्यादि पद्यस्यार्थो यथा—प्रतिष्ठया सार्वभौमं पदं विन्दति । सद्मना मम मन्दिरेण भुवनत्रयम् । पातालावनिस्वर्गरूपम् । पूजादिना सत्यलोकम् । त्रिभिः प्रतिष्ठासद्मपूजादिभि र्मत्साम्यतामियादिति ।

ममाऽघमण्डलं नष्टं फलवांश्चैव मे भवः ।
यन्नमस्ये भगवतो योगिध्येयाङ्घ्रि पङ्कजमिति ।
कुलानां शतमागामि समतीतं तथा शतम् ।
कारयन् भगवद्धाम नयत्यच्युतलोकतामिति च ।

मृषा गिरस्ता ह्यसती रसत्कथा न कथ्यते यद्भगवानधोक्षजः ।
तदेव सत्यं तदुहैवमङ्गलं तदेव पुण्यं भगवद् गुणोदयम् ।
तदेव रम्यं रुचिरं नवन्नवं तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणन्नृणां यदुत्तमश्लोक यशोऽनुगीयत इति।

अथ मृषा गिर इत्यादिपद्यद्वयस्यार्थो यथा—या असत कथाः कामक्रोधलोभमोहादि विषयागिरस्ता मृषा असत्यः । याभिः कदापि भगवानधोक्षजो न कथ्यते । तर्हि किं सत्यमित्यपेक्षायामाह—यच्छ्रवणे भगवद् गुणोदयं वदनेनानुगीयते । तदेव सत्यम् । कालत्रयाबाधितन्न तु यथार्थभाषणमात्रं सत्यम् क्वचित सज्जनादि हिंसादौ तेनाप्यघप्राप्तेः । यथा सत्यवादिनो मुनेः । तदेवमङ्गलं प्रमोदः । न तु पुत्रादिजन्मरूपम् । तन्मरणा देरपि क्वचिद्दर्शनात् । तदेव पुण्यम्पुण्य जनकम् ।

ननु अनायासेन पापमोचनज्ञाने न कोऽपि ततः पापेभ्यो बिभियादिति चेदत्र पृच्छ्यतेऽस्माभिः। प्रमादादिना पतिते पापसंपर्कें शङ्कसे? अप्रमादकृते वेति?। प्रमादादिना पतिते इति चेदज्ञानकृतपापस्य पश्चाद्भगवदर्पणे कृते सति तत्फलाभाव एवेति। ज्ञानकृत इति चेत्तत्र।

---

न तु सखजम्। अन्ते स्वर्गतः पतनात्। तदेव रम्यं मनोज्ञम्। न तु नेत्रादि सुखदविषयदर्शनादि। परिणामित्वात् परिणामे विरसत्वाच्च। तदेव रुचिरं रुचिरजनकम्। न तु पुत्रकलत्रकलभाषणादिकम्। अनित्यत्वात्। तदेव नवन्न तु स्वर्गादि भूषणादि वा। भुक्तभोगात्। तदेव मनसो महोत्सवम्। न तु सवनादिकम् नाना विघ्नहेतत्वात। तात्कालिकत्वाच्च। नृणां तदेव शोकार्णवशोषणन्न तु शास्त्रादिकम्। क्वचित् तद्वत्यपि शोकदर्शनात्। एवकारषड़ावृत्त्या भगवद् गुणोदयाभावे सत्यं यथार्थभाषणमप्यसत्यमिव पापजनकमेवाग्न्यादीनां यथा॥ पुत्रजन्मादिकं मङ्गलमपि अमङ्गलमेव। अङ्गचित्रकेतूनामिव। पुण्यमपि पापमेव त्रिशङ्क्वादीनामिव। रम्यविषयदर्शनमपि बीभत्समेव रुचिरमपि ग्लानिप्रदम्। नवं नवमपि जीर्णज्जीर्णम्। ज्ञानादिकं शोकार्णवविशोषणमपि शोकार्णव एव स्यात्। एवं सर्वाणि सुखानि दुःखान्येव भवन्तीति। तस्मात् स्वहितं विद्वद्भिर्हरिकीर्त्तनमेव कर्त्तव्यम्। मृषा गिरस्ता इत्यत्र यदुत्तमश्लोक यशोऽनुगीयत इतीहापि अनुगीयत इत्यनेन सुकण्ठताचेद् गानमपि कर्तव्यम् तच्च प्रशस्तमित्यायातमेवन्नामादीनामपीति॥

नाम्नो बलाद्यस्य हि पापबुद्धि र्न विद्यते तस्य शठस्य शुद्धिः । जगत् पवित्रं हरिनामधेयं क्रिया विहीनन्न पुनाति जन्तु मित्याद्युक्तेस्तत्पापस्य नामापराधत्वान्नामापराधयुक्तस्य भगवद्भक्तिमतोऽपि जन्तोरधः पातलक्षणदुर्गतिभोग नियमएवेति (१७१) ।

न च वाच्यं नामापराधयुक्तस्य नामान्येव हरन्त्यघमित्युक्तेर्न्नामापराधोऽपि नामभजनेनैव निवर्त्स्यतीति । नाम्नो बलेन हि कृतस्य पापस्य तेन नाम्नाक्षयः स्यात्तस्य सर्वाघनिर्दलनक्षमत्वात् । सत्यम् । तथापि येन नाम्नो बलेन परमपुरुषार्थस्वरूपं श्रीभगवच्चरणारविन्द मासादयितुं प्रवृत्तस्तेनैव परमघृणास्पदं पापं विषयं साधयतीति तस्य जन्तोः परमदौरात्म्यम् । ततः कदर्थयत्येव स तन्नामेति तन्महत्तमापराधस्यानेकैरपि दण्डधरैरकृतदण्डस्य पुनः शुद्ध्यभावो युक्त एव । ततो ध्रुवोऽधः पात इति हेतोर्यस्तु नामब-

(१७१) तथा हि—अबन्धोऽर्पणस्य मुखमिति शाण्डिल्यसूत्रभाष्ये स्वप्नेश्वरः—न चैवम् । अर्पणेन (शुभाशुभकर्मफलभोगाभावे) स्वातन्त्र्यप्रसङ्गः । तत्करणबलेन पापाचरणाभावस्यापि तदङ्गत्वात् ! यथा स्मृतिः—नवेदबलमाश्रित्य पापकर्मरतिर्भवेदिति ॥

लेन पापे प्रवर्त्तते तस्य शुद्धिर्यमराजैरपि न भवति इति सावधानेन भगवद्भक्तेन जीवनं यापनीयम् । एतावता ग्रन्थेन ।

अन्तःशुद्धि र्बहिः शुद्धिस्तपः शान्त्यादयस्तथा ।
अमीगुणाः प्रपद्यन्ते हरिसेवाभि कामिनमिति सिद्धम् ।

ननु निष्कामं भजमानो नित्यनैमित्तिकानि कुर्वन् भगवतेऽर्पयंश्च प्रत्यवाय निवृत्तिमात्रस्यापि भागी भवति; न वा । पुनश्च नित्यनैमित्तिकान्तमन्यदपि किंचित्फलं स लभते नवेति जिज्ञासाया मुच्यते—यथाम्रे फलार्थे रोप्यमाणे छाया गन्ध इत्यनुत्पद्येते एवं धर्मं चर्यमाणमर्थाअनूत्पद्यन्त इत्यापस्तम्बस्मरणान्नान्तरीयकत्वेन शुभं स्वर्गादिफलं जन्यत एव परन्न तेन भजनबाधो न वा भवबन्धः । अत्रायन्निर्णयः । पूर्वं ज्ञानकृतं कृत्स्नं पापं भक्त्या नामव्याहरणाद्द विलीयते । नाम व्याहरणादुत्तरं तु नाम बलाज्ज्ञानपूर्वकृतस्य पापस्य भोगो वज्रलेपायते । अज्ञानकृतस्याघस्य तु भक्त्यानुतापपूर्वकन्नामोच्चारणेमेव समूलकाषं कषणं यतः पुनः पापे प्रवृत्तिर्न जायेत ।

श्रुतिस्मृति विहितप्रायश्चित्तान्तरेण च ज्ञान कृतपापस्य फलभोगे विलम्ब एवापाद्यते न तु निर्मोक्षः । एततपरमेव ।

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्मशुभाशुभमिति ।

वचनं दामोदरकृते भक्तितत्त्वं व्याख्यातम् । अज्ञानकृतस्याघस्य त्वनुतापे सति प्रायश्चित्तान्तरेण निवृत्तौ जायमानायां सत्यामपि क्वचित् पापे पुनः प्रवृत्तिः संभवतीति महदन्तरम् । तदुक्तं श्रीमद्भागवते–

नैकान्तिकं तद्धि कृतेऽपि निष्कृते मनः पुनर्धावति चेदसत्पथे । तत्कर्मनिर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्त्वभावन इति ।

पाद्मे रामाश्वमेधे च–

पातकं द्विविधं प्रोक्तं ज्ञाताऽज्ञात विभेदतः ।
ज्ञातं यद्बुद्धि पूर्वं हि अज्ञातं तद्विवर्जितम् ।
बुद्धिपूर्वकृतं कर्म भोगेनैव विनश्यति ।
पश्चात्तापेन यच्चान्यदिति शास्त्रविनिश्चित मिति

बलीपुरुषकारो हि दैवमप्यति वर्त्तते । इत्यत्राति वर्त्तनम् ।

दैवं पुरुषकारेण दुर्वलं ह्युपहन्यते ।

दैवेन चेतरत्कर्म प्रकृष्टेनोप हन्यत-

इत्यत्रोपघातश्च प्रायश्चित्तादिना पायेन फल भोगकालक्षेपाभिप्रायक एव मन्तव्यः ।

पापनिर्हरणे भगवन्नामोच्चारणमुपलक्षणं स्मरणकीर्त्तनादीनामपि । स्मृतिकीर्त्त्योः कथादेश्चार्त्तौ प्रायश्चित्तभावादिति शाण्डिल्यसूत्रात्(क)।

ननु प्रस्तुतवचनेन हरिसेवाभिकामिनोऽपि पुनस्तपस्सिद्ध्यपेक्षोपदर्शनात् सकामानां किं दैन्यमयेन भजनेन । भजनं विनैव तपसैव निर्दैन्यं सर्वार्थसिद्धेः ।

तपो मूलमिदं सर्वं दैवमानुषकं सुखम् ।
तपो मध्यं बुधैः प्रोक्तं तपोऽन्तं वेददर्शिभिः ।
यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम् ।
सर्वन्तु तपसा साध्यं तपो हि दुरतिक्रममिति

मनूक्तेः । तपस्विनां मुक्तिश्च न दुर्लभा ।
वातरशना ऋषयः श्रमणा ऊर्ध्व मन्थिनः ।
ब्रह्माख्यं धाम ते यानि शान्ताः संन्यासिनोऽमला

(क) स्मरणकीर्त्तनकथा नमस्कारादीनामार्त्तभक्तौ निवेशस्तत्तत्पापकृतनरकार्त्तिमतां तत्पापक्षयहेतुत्वेन, कथनात् । यथा पापे गुरूणि गुरूणीत्यादि विष्णुपुराणमिति ।

इति वचनादिति चेच्छ्रूयताम् । भगवद्भजनात्मकतपसः ।

कुलं वित्तं श्रुतं रूपं शौर्यं दानं तप स्तथा ।
प्राधान्येन मनुष्याणां सप्तैते मद हेतवः ॥

इत्युक्तेः (१७२) ।

मदहेतुत्वेन ततः श्रेयः संपत्तिसंशय एव । तपसः

---

(१७२) विप्राद् द्विषड् गुणयुतादरविन्दनाभ पादारविन्दविमुखाच्छ्वपचं वरिष्ठम् । मन्ये तदर्पितमनो वचने हितार्थप्राणं पुनाति सकुलं न तु भूरिमान इति प्रह्लादोक्तेः ।

चाण्डालोऽपि मुनिश्रेष्ठ विष्णुभक्तो द्विजाधिकः ।
विष्णुभक्तिविहीनश्च द्विजोऽपि श्वपचाधिक इति ॥

बृहन्नारदीयोक्तेश्च । अत्रेदन्तत्त्वम्—यद्यपि मानो न कार्यस्तथापि वर्णाश्रमधर्मो यथाधिकारं पालनीय एव । न तु वर्णाश्रमधर्मिणां द्विजनिन्देत । निन्दने हि निम्नलिखितवाक्यानां व्याकोपः स्यात् ।

विप्राश्च नावमन्तव्यास्त्रैलोकस्थिति हेतवः ।
देववत् पूजनीयास्ते दानमानार्चनादिभिः ।
यश्च मां परया भक्त्या आराधयितु मिच्छति ।
तेन विप्राः सदा पूज्यास्तेन तुष्टो भवाम्यहम् ।

यो ब्राह्मणः सोऽहमसंशयं हि तेष्वेव तृप्तेष्वहमेव तृप्तः ।
तेष्वेव तुष्टेष्वहमेव तुष्टो वैरं च तैस्तस्य ममापि वैरम् ।
यश्चन्दनैश्चागुरुमाल्यगन्धै रभ्यर्चयेद्ब्राह्मणीं ममार्चाम् ।
नासौ तु मामर्चयतेऽर्चयन्वै विप्रार्चनादर्चित एव चाहम् ।

ये मे तनूर्द्विजवरान्दुहतीर्मदीया भूतान्यलब्धशरणानि

पक्षपाती हि भवानपि नूनं तपस्वी किं दैन्यमयेन भजनेन । भजनं विनैव तपसैव निर्दैन्यं सर्वार्थसिद्धि रिति ब्रुवन् मदमिवा विरकार्षीदेव । न वा । भक्तिमार्गे तु ।

---

च भेद बुद्धया । इत्यन्त्यपक्षतद्दृशो त्व हिमन्यसस्तान् गुर्धारुषा मम कुशन्यधिदृष्टनेतुः ।

दुष्प्रज्ञा ह्यविदित्वैव मवजानन्त्यसूयवः ।
गुरु मां विप्रमात्मानमर्यादाविज्य बुद्धयः ।
न ब्राह्मणाम् मे दयितं रूपमेतच्चतुर्विधम् ।
सर्ववेदमयो विप्रः सर्ववेदमयो ह्यहम् ।
उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद् ब्रह्मणश्चावधारणात् ।
सर्वस्यैवास्य सर्गस्य धर्मतः ब्राह्मणः प्रभुः ।
यदास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः ।
कव्यानि चैव पितरः किंभूत मधिकं ततः ।
सर्वस्वं ब्राह्मणस्येदं यत्किंचिज्जगतीगतम् ।
श्रैष्ठ्येनाभिजनेनेदं सर्वं ब्राह्मणमर्हति ।
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।
आनृशंस्याद् ब्राह्मणस्य भुञ्जते हीतरे जनाः ।

येषां मूर्ध्नि परं पदं श्रुतियुगे तीर्थानि भाले भवो वाणी वाचिकरेऽनलो हृदि हरिः कुक्षौ तु वेदास्त्रयः । नाभौ पङ्कज संभवः श्रुतिगणा यद्रोमगर्त्ते श्रितास्तेमी भूमिसुराः शिरोभिरनिशं वन्द्या न निन्द्याः क्वचित् ।

शकायवनकाम्बोजास्तास्ताः क्षत्रियजातयः ।
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ।

आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं(क)तथा ।
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागति रिति

नारदपञ्चरात्रे कार्पण्यशब्देन दैन्यमपि परमावश्यकमुक्तम् । तथा । चैतन्यचन्द्रेण च–

तृणादपि सुनीचेन तरोऽरपि सहिष्णुना ।
अमानिना मानदेन भजनीयःसदाहरि रित्युक्तम्

एतच्च दैन्यं निर्लज्जस्य जुगुप्सितकर्मप्रवृत्ति निमित्तमिति तु न भ्रमितव्यम् । विनयात्मकत्वादेतस्य । न हि विनीतो जुगुप्सिते प्रवर्त्ततेति संभवति । तथा सति हि अविनीतत्वापत्तेः । प्रत्युत तपसा मदोन्मत्तानां रावणादीनामविनीतानां जुगुप्सितकर्मप्रवृत्तिदर्शनाद्धेयमेव भगवद्भक्तिविमुखानां तादृशं तप इति ।
व्रतान्येव हि दानानि तपांस्य ऽनशनानि च ।
वेदोपयुक्ता यज्ञाश्च कर्माणि च शुभानि च ।

---

यान् पूजयन्तो विन्दन्ति धनमायुर्यशः प्रजाः ।
तेषु त्वं सततद्वेष्टा ब्राह्मणेषु निरर्थकः ।
गतश्रीर्गणकान् द्वेष्टि गतायुश्च चिकित्सकान् ।
गतश्रीश्च गतायुश्च ब्राह्मणान् द्वेष्टि भारतेति ॥

(क) गोप्तृत्ववर्णनं तथेति पाठान्तरम् ।

न निष्पुनंत्यभक्तं च सुराकुम्भमिवापगा इति नारदपञ्चरात्रोक्तेः (क)।

ननु यस्य भगवतो भजनं मानराहित्येन कर्त्तव्यमिति भवानाह। स एव खलु भगवान् स्वमानमिच्छति। तदनिच्छायां हि प्रजाभिः स्वपूजां किमिति प्रतीच्छेदिति चेद्। अत्रोच्यते-जीवोऽनीश्वर भावं त्यजन्नीश्वरभावं लभेतेति भगवत्पूजनं पूजकजीवसंस्कारो न तु भगवत्सत्कारस्तत्। नाऽविष्णु र्विष्णुं यजति नाविष्णु र्विष्णुमर्चयेद्

इत्याद्युक्तेः। तथा च श्रीमद्भागवतम्-

नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनाद विदुषः करुणो वृणीते। यद्‌यज्जनो भगवते वि दधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुख श्री रिति।

यथा बिम्बमुखार्पिता श्रीः प्रतिबिम्बमुखस्य भवति। अथापि, न केवलं बिम्बप्रतिबिम्बन्यायेन यावत् तावद् द्रव्यादिकं ददाति श्री-

---

(क) न दानैर्न तपोभिर्वा यज्ञैर्वा बहुदक्षिणैः।
भक्तिहीनै र्मुनिश्रेष्ठ! तुष्यते भगवान् हरिः।
अभक्त्या सत्तपस्तप्तं केवलं कायशोषणम्।
अभक्त्या यद्‌धुतं हव्यं भस्मनिन्यस्तहव्यवद्
इत्यादि वचनानि चात्रानुसन्धेयानि।

कृष्णः किन्त्वल्पायाः सेवाया महत्फलमिति ज्ञे-
यम् । पौण्ड्रकादिस्पर्धादि खण्डनादि तु तेषा-
मेव स्वनिवेशनादि भावेन ज्ञेयम् । न तु स्वनि-
ष्ठरागद्वेषादि हेतोः । तथा सत्यनीश्वरत्वापातो
हि स्यात् । भक्त्यनुरोधितपस्तु नास्माकमप्य-
निष्टम् ।

दुरापा ह्यल्पतपसः सेवा वैकुण्ठवर्त्मसु ।
यत्रोपगीयते नित्यं देवदेवो जनार्दन इत्युक्तेः१७३

भक्तिविरोधि अशास्त्रीयं तपस्तु निन्दितम्
श्रीमुखेन गीतासु । यथा-

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ।
कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान्विध्यासुरनिश्चयानिति

भगवद्भक्ति प्रवृत्युत्तरं तु तपसो न विशेषेणा-
वश्यकता तादृशी । यथोक्तं नारदपञ्चरात्रे-

नाराधितो यदि हरिस्तपसस्ततः कि माराधि
तो यदि हरिस्तपसस्ततः किम् । अन्तर्बहिर्यदि

---

( १७३ ) वैकुण्ठस्य वर्त्मसु मार्गभूतेषु भागवतेषु । अयं भावः-सत्सेवया हरिकथा श्रवणं ततो हरौ रति रित्यादिक्रमेण परा भक्ति स्तया हरिसाक्षात्कारात कृतार्थो भवति जीवः । तस्मान् महातपोऽभावे तेषु सेवाभाव इति ॥

हरिस्तपसस्ततः किन्नान्तर्बहिर्यदि हरिस्तपसस्ततः किमिति। ननु

तपस्तप्त्वा सृजद् ब्रह्मा ब्राह्मणान् वेदगुप्तये।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च।

इत्युक्तदिशा ब्रह्मणानुष्ठितं तत्संप्रदायप्राप्तं च तप आम्नानाम् नान्यदिति चेत्तर्हि।

भविष्यच्छूद्रयोन्यां हि तपश्चर्या कलौयुग-

इति वचनात् कलिभिन्ने युगे तपसि शूद्रस्यानधिकारात् सकामः शूद्रः किं तदा कुर्यात्। अस्तु स एव तदा भजनाधिकारीति चेन्न।

सत्यं दानमथाद्रोहमानृशंस्यं तपो घृणा।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः।
शूद्रे चैतद्भवेल्लक्ष्म ब्राह्मणे च न दृश्यते।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मण-

इत्यत्र शूद्रस्यापि सामान्येन सर्वदा तपः संबन्धस्मरणात्।

यदि ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम्।
वैश्यस्य च तपो वार्त्ता तपः शूद्रस्य सेवनमिति।

मनुना परिभाषितं तप इह सामान्यतो विवक्षितमिति मतं तर्हि यथा स्ववर्णाश्रमधर्म एव तप इत्यर्थादापतति। तच्च सर्वेषां सर्वदा चित्तशुद्ध्यर्थमपेक्षितमित्युक्तं पुरस्तात्। तेन। तथा।

मां हि पार्थव्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति पराङ्गतिम्।
किम्पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथेति ।
गीतासु भक्तौ सर्वाधिकारोक्त्या च सर्वोऽपि सर्वदा भजनाधिकारीति सिद्ध्यति । न शूद्र एवेति । किञ्च भगवद्भजनं बिना न नितान्तं चित्त शुद्धिः ।

यत्पादसेवाभिरुचिस्तपस्विना मशेषजन्मोपचितं मलं धियः । सद्यः क्षिणोत्यन्वहमेधिता सती यथा पदाङ्गुष्ठविनिःसृतासरिदित्युक्तेः ।

अश्रद्धयानुष्ठीयमानं तपस्तु सर्वथा वृथैव ।
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इहेति
गीतोक्तेः (१७४) ।

इदं हि पुंसस्तपसः श्रुतस्य स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः । अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमश्लोकगुणानुवर्णनमिति वचनाच्च ।

ननु ।
ब्राह्मणा लोकसारेण सृष्टा वै ब्राह्मणाः किल ।
लोकांस्तारयितुं कृत्स्नान् मर्त्त्येषु क्षिति देवताः ।

---

(१७४) गुरुवेदवाक्यार्थे इदमेवन्न भवत्येवेति विपर्यय-रूपा नास्तिक्यबुद्धिरश्रद्धा नास्तिकाश्चत्यक्तवेदप्रासाद्याः ।

यैः कृतः सर्वभक्षोऽग्नि रपेयश्च महोदधिः ।
क्षयी चाप्यायितश्चेन्दुः कःस्यात् पूज्यतमस्ततः।
पूर्वं पीतः समुद्रो यै र्विन्ध्यो वर्धन्निवारितः ।
यैश्चापि देवताः सृष्टाः कःस्यात्पूज्यतमस्ततः ।

---

सा च महानर्थमूलम् । ते हि जैनबौद्धकापालिकदिगम्बरादयः पाखण्डा उत्पथप्रवृत्ताः । स्वयन्नष्टा अन्यानपि नाशयन्ति । अत एव श्रुतिराह—अश्रद्धामनृते दधातन श्रद्धा सत्ये प्रजापतिरिति अत्रोपयुक्तानि वाक्यानि लिख्यन्ते—

पालनाच्च त्रयी धर्मः पाशब्देनेह कथ्यते ।
तं खण्डयन्ति ये मूढाः पाखण्डास्तेन ते स्मृता इति

पाखण्डसामान्यलक्षणम् सिद्धमपि ज्ञानादि पाखण्डसंसर्गात् नश्यति । साध्यस्य पुनः का कथेति ।

ईशोऽपि श्रद्धया साध्यस्तस्माच्छ्रद्धा विशिष्यते इत्युक्तेः ।
मनसापि न पाखण्डं तातो पेयाः कथंचन ।
यतः काष्टार्जितं ज्ञानं स्रवत्यामघटाम्बुवदिति ।
अन्तः शाक्ता बहिः शैवाः सभामध्ये तु वैष्णवाः ।
नानारूपधराः कौला विचरन्ति महीतल-

इत्युक्तविविधवाममार्गगा अपि त्रयी धर्मविरोधित्वादमीषु पाखण्डेष्वेवान्तर्भूताः । एतेष्वेव दाम्भिकानामपि अन्तर्भावः ।

विशुद्ध्यति सदा स्नानात् स्पर्शे रजकवाजिनः ।
पाखण्डस्य कृते स्पर्शे शुद्धिर्नैवास्ति कर्हिचिदिति ।

रजकवाजी गर्दभः । अतः पाखण्डाद्बिभियादन्यथा तत् संसर्गेण भागवतोऽपि धर्मो मलिनीस्यात् । धर्मान्तरंतु नश्येदेव चाण्डालादिनीचसंसर्गोऽपि तादृग्धर्मनाशको माभूद्यादृक् पाखण्डसंसर्ग इति । तदुक्तम् ।

पाखण्डिनो विकर्मस्थान् वैडालव्रतिकाञ्छठान् ।
हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेदिति ।

एतेषां लक्षणानि यथा—प्रतिषिद्धसेविनो विकर्मस्थाः । विडालो मार्जारः । तद्वद् वृत्तं यस्यासौ वैडालव्रतिकः ।

धर्मध्वजी सदालुब्धश्छाद्मिको लोकदाम्भिकः ।
वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ।

तर्कप्रधानयुक्तिबलेन सर्वत्र संशयकारी हैतुकः । यथोक्तं सन्देह कृद् हेतुभि र्यः सत्कर्मसु स हैतुक इति । बकवदस्य वर्तनमिति बकवृत्तिः ।

अधोदृष्टि र्नैकृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृत इति ।
लोकरञ्जनार्थमेव धर्मानुष्ठायी दाम्भिकः । तदुक्तम् ।
सदा जपपटो हस्ते मध्ये मध्येऽक्षिमीलितम् ।
सर्वं ब्रह्मेति वादश्च सद्यः प्रत्यय हेतवः ।
आमध्याह्नम् नदीवासः समाजे देवतार्चनम् ।
सततं शुचिवेषश्चे त्येते दम्भस्य जीवितमिति ।
अपहाय निजं कर्म ब्रह्मब्रह्मेति वादिनः ।
ते हरे र्द्वेषिणः पापा धर्मार्थं जन्म यद्धरेः ।
सर्वे ब्रह्म वदिष्यन्ति संप्राप्ते तु कलौ युगे ।
नानुतिष्ठन्ति मैत्रेय शिश्नोदरपरायणाः ।
वागुच्चारोत्सवं मात्रं तत्क्रियां कर्त्तुमक्षमाः ।
कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ।
सांसारिकसुखासक्तं सर्वं ब्रह्मेति वादिनम् ।
कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ।
अज्ञस्यार्धं प्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् ।

सह। निरयजालेषु स तेन विनिपातित इति ॥
निन्दितप्रकारो ब्रह्मवादश्च परिहरणीयः । खलेषु ब्रह्मवादं गोपायेदिति ब्रह्मवादस्य गोपनीयत्वोक्तेश्च बृहन्नारदीये—

यदि कामादि दुष्टात्मा देवपूजा परो भवेत् ।
दम्भाचारस्तु विज्ञेयः स वै पातकिनां वर इति ।

दम्भस्वरूपं प्रबोधचन्द्रोदये दर्शितम् । यथा—

गङ्गातीरतरङ्गशीतलशिला विन्यस्तभास्वद्वृषी संविष्टाः कुशमुष्टिमण्डितमहा दण्डाः करण्डोज्ज्वलाः । पर्यायग्रथिताक्ष-सूत्रबलयप्रत्येकबीजग्रह व्यग्राग्राङ्गुलयो हरन्ति धनिनां वित्ता न्यहो दाम्भिकाः ।

वेश्या वेश्मसु सीधुगन्धललना वक्त्रासवामोदितै र्नीत्वा निर्भरमन्मथोत्सवरसैरुन्निन्द्रचन्द्राः क्षपाः । सर्वज्ञा इति दीक्षिता इति चिरात् प्राप्ताग्निहोत्रा इति ब्रह्मज्ञा इति तापसा इति दिवा धूर्त्तैर्जगद्वञ्च्यत इति ।

धूर्त्तैर्वञ्चकैर्दिवा दिन एव प्रत्यक्षं जगन्नरनारी समुदायात्मकं वञ्च्यते । चौरैस्तु निशि प्रच्छन्नैरित्याशयः । तत्र कतिचन कथंचन शिश्नोदरनिरोधवन्तोऽपि पुनरेकादशीं सपत्नमातरमिव मन्तुमन्तो मन्यन्ते जिह्मचेतसा । कुटुम्बपोषणमात्रपुमर्थमानिनामर्थोपार्जने युक्तायुक्तविचारो रसातलमाविशत् । तथा चोक्तम् ।

जिह्वा दग्धा परान्नेन हस्तौ दग्धौ प्रतिग्रहात् ।
मनो दग्धं परस्त्रीभि र्जपसिद्धिः कथं भवेदिति ।
विषवृक्षसमाकारं मध्वास्यच्छुरिकोदरम् ।
दृष्ट्वा तु दाम्भिकं प्राज्ञः प्रणमेत् सूर्यं मञ्जसेति ।

अनया स्मृत्या दाम्भिकस्य पापीयस्त्वं स्पष्टाऽति स्पष्टम् ।

तस्मान्निन्दको वञ्चको धूर्त्तः खलो दूषकतामसी ।

एते नारकिनः प्रोक्ता दूरतः परिवर्जयेत्—

इत्युक्तेस्तत्संसर्गनिषेधात् स्वयं तद्विधो न भवेदित्यर्थो देवायाति। एतैः सह यत्किंचित् सहजसंभाषणादिकमपि महानर्थकरत्वेन विगर्हितं नानाख्यानैरितिहासपुराणादिषु।

अमी नूनं कलेः पुत्रा एवाऽऽधुनिकैः पामरैर्ब्राह्मणब्रुवैः क्षत्रबन्धुभिरितरैर्वा सहत्वं संभाव्यातिविश्वस्तैः पूज्यमानाः सद्धर्मं सत्पुरुषांश्च प्रद्विषन्त आत्मानं पुष्णन्ति। कियन्तश्च स्वधर्मनष्टिमविगणय्य विरुद्धाचरणे रतांल्लुब्धान् पाखण्डिनो निर्लज्जान् धूर्त्तान् पालयन्तो वेदपुराणनिन्दया वैष्णवजनानां क्रोधमुत्पाद्य युद्धाभिमुखे स्थिताः शुद्धाचारनिवारणे तत्परा विशुद्धाचरणसिन्धुभग्नादयाधर्मश्रद्धाभक्ति ज्ञानवैराग्यसत्यशीलदानपुण्य जपतपो व्रतनियमश्रवणमनन भगवत्सेवा सत्सङ्गरहिताः सर्वथान्यथैवाचरन्तो न त्रपन्ते प्रत्युत धूर्त्तया धिया सुधियो वयमित्यखर्वगर्वपर्वतमारूढा उच्चैर्गृध्रा इव निरीक्षन्ते। अहो दुःसङ्गादाचारोऽलुप्यत। संप्रदाय उदच्छिद्यत। मङ्गलमगलत्। धर्मचर्चा तु हंसीरूपेणोड्डीय मानससरः शिश्रिये। म्लेच्छप्रायमिव जगदाभाति। साधून् दीनान् कोऽपि नावेक्षते। तानेव उत बत लोकः पीडयति। दैवं च कालक्रमाद्विपरीतमभूत्। यतोऽसतोऽभिरमयत्सत एवोपतापयति। महात्मनां भगवद्भक्तानां पुंसां प्रसङ्गो हन्त दुर्लभ एवाकारि कलिना पापप्रियेण! मद्युगमध्योत्पन्नाः कृतयुगधर्मानुसारिणः किमिति। इति रोषादिव कलिना पीड्यन्ते साधवो जगति। एव मनार्यचरितोपात्तपाखण्डकोलाहलाकुले दुर्जनसंचारदुरालापदुर्व्यसनदुरितार्जनदुर्वर्त्मगसनदुश्चरित्रदुराग्रहदुश्चिन्ताकुले महादारिद्र्यार्त्तिपीड़ितप्रजावर्गे देवादिनिन्दकसमुदायोत् पाटितपुण्यक्षेत्रे सर्वोऽपि जनो विपरीतबुद्धिर्दृश्यते। कस्मै हितमुपदिशामः। केन सहभ-

क्किसुखमनुभवामः । अहो प्रतिक्षणं दुःखाद् दुःखतरं प्रतीमः । स्वप्नेऽपि सत्सङ्गसुखलवलेशगन्धमपि न परिचिनुमः । यस्मिन् देशे सन्तः सुखमाशते तदेव नगरमितरस्तु श्मशानायते यद्यपि देशे देशे कुलीना ब्राह्मणा ईश्वरविरचितपारम्पर्यागतसन्मर्यादामनुपालयन्तः सन्तः शतशः कथंचिद्धर्ममर्यादां वहन्तः सन्ति परं च न कोऽपि नरस्तेषां विद्यादरं करोति । प्रायेण सर्वोऽपि जनो विपरीतबुद्धिर्दृश्यते । सत्ययुगादारभ्य केऽपि विद्वांसः प्राग्व्यापाराऽसक्ता न श्रुताः किन्तु श्रुतव्यवसायिनो विद्याविनोदगमितदिनरात्रिक्षणाः शुभाः । अतस्तेषामन्नवस्त्रधनादिभिः पूजनं परमकल्याणकरम् । तेषां पूजाभावे ।

आयुः श्रियं यशोधर्म्मं लोकानाशिष एव च ।
हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ।
अपूज्या यत्र पूज्यन्ते पूज्यपूजा व्यतिक्रमः ।
त्रीणि तत्र प्रवर्त्तन्ते दुर्भिक्षं मरणं भयमित्याद्युक्तेः ।

प्रामाण्येन सता विदुषा मनादरान्न केवलं दुर्भिक्षमरणदारिद्र्यादिकभयमात्रमपि तु अन्ते नरकनिवासोऽनादर्त्तुः स्मर्यते । यथा भारते ।

सीदते द्विजमुख्याय योऽर्थिने न प्रयच्छति ।
सामर्थ्ये सति दुर्बुद्धिर्नरकायोप पद्यत इति ।
याचमानमधीयान माशावन्तमकिञ्चनम् ।
यो नार्चति यथाशक्ति स नृशंसो युधिष्ठिरेति ।
अदातारः सश्रद्धा ये द्रव्याढ्या लोभकारणात् ।
दीनानाथान्न पश्यन्ति ते वै निरयगामिनः ।
क्षान्तान् दान्तान् कृशान् मान्यान् दीर्घकालं सहोषितान्
त्यजन्ति कृतकृत्या ये ते वै निरयगामिन इति च ।
अन्वयमुखेनापि विद्वदादरो विधीयते । यथा—

क्रियानियन्त्रितान् साधून् पुत्रदारैश्च कर्षितान् ।
अयाचमानान् कौन्तेय सर्वोपायै र्निमन्त्रयेति ।

ईदृशं वस्तु किमपि दानार्हन्नास्ति यद् ब्राह्मणाय सत्पात्रायादेयमस्ति । अतएव तपो विद्यावन्तो ब्राह्मणाः क्षत्रियवैश्यशूद्राणां परमेश्वररूपेण पूज्याः । सर्वधर्मस्यापकत्वात् । ब्राह्मणानामाशीर्वादेनेतरे क्षत्रियादयो जना भुञ्जते हीति स्वाखण्डभोगार्थं ब्राह्मणादयः सदैव प्रसाद्यास्तेषां कोपे तूर्णं दारिद्र्यं प्राप्नोति कोपयिता । किंच ब्राह्मणेभ्यो मया दीयत इति या मतिः सा दुर्मतिरेवासुराणामुदेति । ब्राह्मणकृपयैव मया भुज्यत इति च बुद्धिः सुबुद्धिरेव देवानाम् । तदुक्तमितिहाससमुच्चये—

न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यन्तु रक्षितुमिच्छन्ति सुबुद्ध्या योजयन्ति तमिति ।

इदानीन्तनेषु नृसहस्रेषु मध्ये ज्ञानी कदाचिदेक एवोपलभ्येत द्वौ वा । न तृतीयस्तुर्ययुगे येन बहुवचनं पूर्येत । ज्ञानसिद्धये ऽवश्यं पुराणादिकं श्रवणीयन्तच्च ।

भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागम- इत्युक्तत्वादुत्कृष्टभाग्याभावात्सङ्गविरहान्न हि सर्वै र्जनैः पुराणादिकं श्रूयते । ज्ञानं विना संसारतरणं न स्यात् । पूर्वकाले एक एव वेनोऽभूदिदानीमनेके वेनसदृशा गर्जन्ति । वेनेन तु स्वदेश एव ।

न यष्टव्यं न दातव्यं न होतव्यं द्विजाः क्वचित् ।
इति न्यवारयद्धर्मं भेरीघोषेण सर्वश इति ॥

वचनान्निवारितं धर्माचरणम् । सम्प्रति तु वीथ्यां वीथ्यां जनं जनं प्रति ।

इत्यादीतिहासवादेषु यस्य तपो वलस्य स्तुति-स्तत्रास्मत्तात्पर्यमितिचेत् । तत्र मया पृच्छ्यते-इदं तपोऽपि भक्तिमार्गविरोधि चेत्याज्यमेव । ततो हि भगवदतुष्टेः ।

मन्ये धनाभिजनरूपतपः श्रुतौज स्तेजः प्रताप बलपौरुष बुद्धियोगाः । नाराधनाया हि भव-

---

न श्रोतव्या न श्रोतव्या न श्रोतव्या हरेः कथा ।

न दातव्यं न दातव्यं न दातव्यं कथंचनेति

शब्दः श्रूयते दिग्विदिक्षु ।

बुद्धिरुत्पद्यते तादृग्व्यवसायोऽपि तादृशः । सहायास्तादृशा-एव यादृशी भवितव्यतेति सत्यम् । अथापि कलिस्वभावमनुसृत्य पापे प्रवर्त्ततेति नास्ति कश्चिद्विधिः ।

सतां सत्ययुगं साक्षात् सदैव ह्यसतां कलिरित्युक्तेः ।

एक एव तु कालः स हीनवर्णो यथा शशी ।

छन्नो हि तमसा सोमो यथा कलियुगे तथा ।

पूर्णश्च तमसा हीनो यथा कलियुगे तथा ।

अर्थवादः परंब्रह्म वेदार्थ इति तं विदुरिति ।

हरिवंशे युगव्यवस्थाया अर्थवादावादाच्च । श्रीधरस्वामिना चोक्तम्–त्रेतादिषु पादेन पादेन व्येति ह्रसति पादेन पादेन वर्धमानेनाधर्मेण हेतुनाधर्मः । एतच्च स्वरूपकथनमात्रं वैराग्या-र्थेन्न तु धर्मसंकोचनार्थमिति ।

वपुरपीदमनित्यमासन्नध्वंस मविश्वसनीयमति जुगुप्सि-तं न मम ।

न्ति परस्य पुंसो भक्त्या तुतोष भगवान् गज यूथपायेत्युक्तेः ।

त एव नियमाः साक्षात्त एव च यमोत्तमाः ।
तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षज इत्याद्युक्तेश्च (१७५)।

वातरशना इत्यादि पद्यस्यार्थ स्त्वयथा गृहीतो भवद्भिः। अन्य ऋषयोऽपि अति कृच्छ्रेण ब्रह्माख्यं ते धाम यान्ति न तु त्वाम् । कथंभूता ऋषयो वातरशना वात एव रशना परिधान वस्त्रं येषान्ते । नग्ना इत्यर्थः । अतएव श्रमणाः शीतोष्णादि सहिष्णुतया श्रमयुक्ताः । पुनः । ऊर्ध्वमन्थिनः अस्खलितवीर्याः स्त्रीविषयसुखविवर्जिताः । पुनः ।

---

अनन्य ममता विष्णौ ममता प्रेमसंयुता ।
भक्तिरित्युच्यते पार्थ प्रह्लादोद्धव नारदैरिति ।

नारदपञ्चरात्रोक्तेर्भक्त्यात्मकतया भगवन्ममता प्रापणीया अन्यममता विवर्जिता भगवति ममता न|अन्यममता||ततः पर|मिथ्याभूतेऽस्मिञ्जगति यद्भवति तद्भवतु नाम । भगवान् दीनवत्सलो विश्वसाक्षी कमलाक्षी रमणोऽवश्यं शरणी करणीय इति सर्व संक्षेप इति ॥

(१७५) व्याधस्या चरणं ध्रुवस्य च वयो विद्यागजेन्द्रस्यका कुब्जायाः किमुनामरूपमधिकं किं तत्सुदाम्नो धनम् ॥

संन्यासिनोऽपरिग्रहा अतएव शान्ताः कामाद्यूर्मिरहिता अतोऽमलाः । एतादृशेनापि श्रमेण ते तव धाम यान्ति न तु त्वाम् ।
त्वत्सालोक्यमेव प्राप्नुवन्तीति तदर्थात् ।तथा च
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ।
भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परन्तपेति ।

---

वंशः को विदुरस्य यादवपते रुग्रस्य किं पौरुषं भक्त्या तुष्यति केवलं न च गुणै र्भक्तिप्रियो माधव इति ।
भक्त्यैवतुष्टिमभ्येति विष्णुर्नान्येन केनचिदिति ।
न साधयति मां योगो न सांख्यं धर्म उद्धव ॥
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जितेति ॥
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तन्न दक्षिणा ।
व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमाः ।
यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि मामिति ।
नालं द्विजत्वं देवत्वं ऋषित्वं च सुरात्मजाः ।
प्रीणनाय मुकुन्दस्य न वृत्तन्न बहुज्ञता ।
न दानन्न तपो नेज्या न शौचं न व्रतानि च ॥
प्रीयते ऽमलया भक्त्या हरिरन्यद्विडम्बन-
मित्यादयो वचननिचयाश्चात्रानुसन्धेयाः ॥ अस्य 'नालमि-त्यादि पद्यस्यार्थो यथा-मुकुन्दस्य मुक्तिदस्य भगवतः प्रीणनाय प्रसन्नत्वाय संतोषाय न द्विजत्वं पूर्णं समर्थन्तत्तु वेदाध्ययनायालम् ॥ न देवत्वन्तत्तु विषयभोगाय मखग्रहणायालम् ॥

भगवदुक्तेर्भक्ति शून्यतपोभिर्न भगवांल्लभ्य इति व्यक्तम् । भगवत्प्राप्तिरेव च परमपुरुषार्थः । तपो लक्षणन्तु द्वन्द्वसहनं व्रतानि च कृच्छ्रचान्द्रायणादिनीति ।

भक्तिं गौणीकृत्य प्रवर्त्तितस्य तपसस्तु ।
योगस्य तपसश्चैव न्यासस्य गतयोऽमला: ।
महर्जनस्तप: सत्यं भक्तियोगस्य मद्गतिरिति १७६

---

न हरिप्रीणनाय । ऋषित्वमपि न, तत्तु शापायानुग्रहाय वेदार्थज्ञानाय चालम् । हे असुरात्मजा इज्या अग्निहोत्रादीनि । दानादीनि न समर्थानि । तानि तु स्व स्वफलदानाय समर्थानि । हरिस्तु भक्त्या प्रीयते । प्रसन्नो भवति । कीदृश्या अमलया कर्मज्ञानाद्यनावृतया । तेषां स्पर्शे तु समला भक्ति स्तद्द्रहितैवामला । तथा भक्त्यन्यत्तु विडम्बनन्नटनमात्रं न कदापि तत्तोषकारणमिति ॥

( १७६ ) योगस्य निष्कामकर्मयोगस्य । तपसो वानप्रस्थधर्मस्थस्य कृच्छ्रचान्द्रायणादेः । चकारादष्टाङ्गयोगस्य । न्यासस्या ऽभेदज्ञानयोगस्य गतयोऽमला रजस्तमोमलशून्याः । अनुष्ठानतारतम्येन महाजनस्तपः सत्यलोकरूपाः अपि, नाऽविनाशिन्यः । ननु ।

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रति संचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमिति ॥

श्रुत्या सत्यलोकं गतानामनावृत्तिरेव श्रूयते इति चेत्सत्यम् किन्तु परमेश्वराभेदेन हिरण्यगर्भोपासनया निष्कामया सत्य-

भगवदुक्तेः सावधिफलत्वमेव । मद्गति र्भगवद्गतिः । सा च ।

आब्रह्मभुवनाल्लोकाः पुनरावृत्तिनोऽर्जुन ।
यद्गत्वा न निवर्त्तन्ते तद्धाम परमं ममेति ।

भगवता गीतासु निरवधिर्निर्दिष्टा ।
परीत्य भूतानि परीत्यलोकान् परीत्यसर्वा विदिशो दिशश्च । उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेशेति श्रुतेः (१७७) ।

---

लोकप्राप्तास्तत्र स्थिताः सन्तो भक्तिपरिपाकेन तेन सह मुच्यन्ते । तत्र स्थितानामन्येषां तु पुनरावृत्तिः । यद्वा ।

भवेत् क्वचिन् महाकल्पे ब्रह्माजीवोऽप्युपासनैः ।

क्वचित्तत्र महाविष्णु र्ब्रह्मत्वं प्रतिपद्यत इति पाद्मोक्तेः । नारायणो ब्रह्मत्वं प्रतिपद्यते यदा तदा तु तेन सह सर्वे मुच्यन्ते । यदा जीवः कश्चिद् ब्रह्मपदनियुक्तो भवति तदा सत्यलोकवासिनां पुनरावृत्तिः । एवं योगादीनां गतयो भक्तियोगस्य तु मद्गति र्मम पदगतिरिति ॥

( १७७ ) स मुनि र्भूत्वा प्राणिनो भगवद्विमुखाः संसारचक्रे भ्रमन्तीति परीत्य ज्ञात्वा सर्वलोकान् सत्यलोकादीन् क्षयिष्णुत्वेन परीत्य ज्ञात्वा विदिशो दिशश्च दुःखमयत्वेन ज्ञात्वा ऋतस्य कालत्रयाबाधितस्य विष्णोः प्रथमजां वाचं वेदलक्षणामुपस्थाय तद्विहितं भागवतधर्मं चाऽऽसेव्यात्मनान्यत्र विरक्तेन भगवदनुरागिणा मनसा आत्मानं भगवन्तं शरणमभिसंविवेश प्रविष्टवान् गतवानित्यर्थः । यथा वनं प्रविष्टो जीवः केनापि

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ।
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति
गीतोक्तेश्च (१७८)। इत्थं च
यशः (१७९)

---

वनरूपो न ज्ञायते किन्तु तद्भिन्न एवेति तथात्रापि मुक्तजीवो ब्रह्मरूपो भवति किन्तु पार्षदरूप एवेति श्रुत्यर्थो ज्ञेयः । एवमन्यत्रापि सर्वत्रबोध्यम् ॥

( १७८ ) ब्रह्मभूतो ब्रह्मस्वरूपः पुरुषो मे परान्निर्गुणां भक्तिं लभते प्राप्नोति तया भक्त्या मामभिजानातीति पुरा सात्त्विकाद्वैत ज्ञानेन ब्रह्माहमस्मीति अभेदान्वयेन तेनाहं ज्ञातः । पुनर्भक्त्या यावानपरिच्छिन्नः सच्चिदानन्दविग्रहो मां जानाति । पुनर्भक्तिप्रभावरूपेण निर्गुणज्ञानेन परया भक्त्या तत्त्वतो यथार्थतो नित्यसेव्यत्वेन मामद्वयन्नित्यसेवकत्वेन स्वात्मानं ज्ञात्वा तदनन्तरं मां विशते प्राप्नोति । वनं विशतीतिवत् । यथा यः कोऽपि वनं विशति न च वनरूपो भवति स, तद्वदत्रापि साधनरूपया भक्त्या ज्ञानं तेन प्रौढया भक्त्या भगवन्तं विशत इत्ययम्भाव इति ।

( १७९ ) अकीर्त्तिः कीर्त्यते येन यस्य कस्यापि देहिनः ।
स पतत्यधमाल्लोकान् यावच्छब्दः प्रसूयते ।
तस्मात् कल्याणवृत्तः स्यादनन्ताय नरः सदेत्यकीर्त्तिप्रत्यनीकं यश इति ॥

सत्यं (१८०)

---

( १८० ) सत्यं यथार्थभाषणमित्यनेनैव संतोषो न कर्त्तव्यः, सत्यं हि तद्भूतहितं यदेवेति श्रुत्या भूतहिंसाजनकसत्यस्यानादरात्। तादृशसत्येन क्वचिदघप्राप्ति दर्शनाच्च। यथा सत्यवादिनो मुनेः सत्यभाषणादधोगतिर्भारतेतिहासे प्रसिद्धा। तथा चायमर्थः। यत्र सत्येन धार्मिकादि पीड़ा स्यादसत्येन च तत् प्राणत्राणं भवेत्तत्रसत्यादनृतमेव विशिष्यत इति।

भवेत् सत्यन्न वक्तव्यं वक्तव्यमनृतं भवेत्।
यथानृतं भवेत् सत्यं सत्यं वाप्यनृतं भवेत्।
तादृशो बध्यते बालो यत्र सत्यमनुष्ठितम्।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित्।
शूद्रविट् क्षत्रविप्राणां यत्रर्त्तोक्तौ भवेद् बधः।
तत्रवक्तव्यमनृतं तद्धि सत्याद्विशिष्यते इत्याद्युक्तेः।

अतएव योगसूत्रभाष्ये व्यासपादाः–सत्यं यथार्थे वाङ्मनसे यथा दृष्टं यथानुमितं यथाश्रुतं तथा वाङ्मनश्चेति स्वबोध संक्रान्तये वागुक्ता सा यदि न वञ्चिका भ्रान्ता वा प्रतिपत्तिबन्ध्या भवेदित्येषा सर्वभूतोपकारार्थं प्रवृत्ता न भूतोपघाताय। यदि चैवमप्यभिधीयमाना भूतोपघातपरैवस्यान्न सत्यं भवेत् पापमेव भवेत्तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टं तमः प्राप्नुयात्तस्मात् परीक्ष्य सर्वभूतहितं सत्यं ब्रूयादिति।

परीक्ष्येत्यस्यायमाशयः–नानृतवदने दुष्येज्जीवनं चेत्तदधीनं न तु पापीयसो जीवनमिति गौतमोक्तेः प्रमादस्खलिताधर्मविषयत्वे न त्वत्यन्ताधार्मिकसन्धिकारस्तेनादि विषये हिंसानिवृत्तिनिमित्तमसत्यभाषणं प्रति प्रसूयते इति हिंसा या

दोषारोपौ परीक्ष्येति । तथा च कणादः—हीने परे त्यागः । समे आत्मत्यागः परत्यागोवेति । यद्यपि एते सूत्रे बधविषयके तथापि दुष्टहिंसायामिति सूत्रोपस्कारे हिंसायामिति निषिद्ध-कर्ममात्रोपलक्षणमिति शङ्करमिश्रोक्तेरन्यत्रापि न्यायसमानता नुसंधेया ।

प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत् ।
अर्थस्य रक्षणार्थाय परेषां धर्मकारणात् ।
स्त्रीषु नर्मविवाहेषु वृत्त्यर्थे प्राणसंकटे ।
गोब्राह्मणार्थे हिंसायां नानृतं स्याजुगुप्सितमिति ।

तु मिथ्यासाहयप्रयुक्तराजदण्डप्रणयनबोधन एव परिसमाप्त-न्न तु पापाभावबोधे तथा सति वाक्यभेदापत्तेः । प्रतिप्रसूता नृतभाषणेऽपि ।

न धर्मयुक्तमनृतं हि नस्तीति मनीषिणः ।
तथापि न च कर्त्तव्यं प्रसङ्गो ह्येष दारुण इति

लैङ्गे दोषघोषाच्च । तस्य वा एतस्याग्न्याधेयस्य सत्यमेवोपचारः । स यः सत्यं वदति यथाग्निं समिद्धं तमुदके नाभिषिञ्चेदेवं हैनं स जासयति तस्य कनीयः कनीय एव तेजो भवति श्वः श्वः पापीयान् भवति तस्मादु सत्यमेव वदेत । तदुहाप्यरुणमौपवेशिं ज्ञातय ऊचुः । स्थविरो वा अस्यग्नी आधत्स्वेति । सहोवाच । ते मैतद् ब्रूय । वाचं याम एवैधि । न वा आहिताग्निनानृतं वदितव्यन्न वदञ् जातु नानृतं वदेत तावत् सत्यमेवोपचार इति शतपथश्रुतौ सत्यभाषणं स्तुतम् । सत्यभाषणे राम स्तुतिर्यथा—

रामस्य पुरुषो लोके सत्यधर्मयशोगुणैः ।
समो न विद्यते कश्चिद्विशिष्टः कुत एव तु ।
दद्यान्न प्रति गृह्णीयात सत्यं वदति नानृतम् ।

दमः (१८१) शौचं (१८२) मार्दवं ह्रीरचापलम् ।

एतद् ब्रह्मण्यदेवस्य रामस्य व्रतमुत्तमम् ।
अनृतन् नैव रामस्य कदाचिदपि संमतम् ।
द्विः शरं नानुसंधत्ते द्विःस्थापयति नाश्रितान् ।
द्विर्ददाति न चार्थिभ्यो रामोद्विर्नाभि भाषत इति ।

स्वयं श्रीरामः श्रीमुखेनाह-

अनृतन्नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।
एतत्ते प्रतिजानामि सत्ये नैव शपामि ते इति ।

यथा काश्यां जन्तुरक्षार्थमनृतमपि भाषेत । पापस्याल्पत्वात् पुण्यस्य च बहुत्वान्नानृताद् भेतव्यम् तदुक्तं काशीखण्डे-

असत्यं नैव वक्तव्यं प्राणैः कण्ठ गतैरपि ।
अत्रत्यजन्तु रक्षार्थ मसत्यमपि भाषयेदिति ॥

सत्यभाषणस्यदिक् ।

(१८१) बाह्येन्द्रियाणिनिग्रहो दमः ।
सुखं दान्तः प्रस्वपति सुखं च प्रतिबुध्यते ।
सुखं पर्येति लोकांश्च मनश्चास्य प्रसीदति ।
अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते ।
अनर्थांश्च बहूनन्यान् प्रसृजत्यात्मकारणात् ।
कामं क्रोधं च लोभं च दर्पंस्तम्भं विकत्थनम् ।
रोषमीर्ष्याभिमानं च नैवदान्तो निषेवते ।
दान्तस्य किमरण्येन तथा दान्तस्य भारत ।
यत्रैव निवसेद्दान्तस्तदरण्यं स चाश्रम इति दमः प्रशस्तश्च॥

(१८२) शौचं द्विविधम् । बाह्यमाभ्यन्तरं चेति । यथा शास्त्रं मृज्जलादिभिर्देहादि शोधनं बाह्यम् । तदुक्तम्-

मृदा जलेन शुद्धिः स्यान्न क्लेशो न धनव्ययः ।

यस्य शौचेऽपि शैथिल्यं तस्य चित्तं परीक्षितमिति।

मनुष्याणां शरीरे द्वादशमलाः। ते यथा—

वसाशुक्रमसृङ्मज्जा मूत्रविड् घ्राणकर्णविड्।

श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मला इति।

एषां पूर्वे षण्मृत्तिकाजलाभ्यामपरे षट् केवलेन जलेनेति बाह्यं शौचविवेकः। कामक्रोधादि राहित्यात्मकं शमलक्षणमान्तरम्। अन्तरिन्द्रियनिग्रहो हि शमः।

यदि क्रोधादि दुष्टात्मा पूजा ध्यानपरो भवेत्।

न तदा तुष्यते विष्णु प्रयतो धर्मतः स्मृतः।

दानमिज्या तपः शौचं तीर्थं वेदाः श्रुतं तथा।

अशान्तमनसः पुंसः सर्वमेतदनर्थकम्।

रागद्वेषानृतक्रोध लोभमोहमदादिभिः।

सर्वदोषैर्विनिर्मुक्तो यः स हि शान्त इति स्मृत इति।

शमः प्रशस्तश्च।

(१८३) दानञ्चात्र।

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।

देशे काले च पात्रेच तद्दानं सात्त्विकं स्मृत-

मित्युक्तलक्षणमपि वृथा भवेत्।

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः।

दीयते चा परिक्लिष्टं तद्राजसमुदाहृतमिति।

राजसदानस्य लौकिकफलोपदर्शनात्।

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते।

असत्कृतमवज्ञातन्तत्तामसमुदाहृतमिति॥

तामसदानस्य चानिष्टस्वरूपत्वात्।

अथ दानविषये अन्यदपि किञ्चित् प्रसङ्गाल्लिख्यन्ते–

अभिगम्योत्तमं दानमाहूतं चैव मध्यमम् ।
अधमं याच्यमानं स्यात् सेवा दानं तु निष्फलम् ।
येन येन तु भावेन यद्यद्दानं प्रयच्छति ।
तत् तत्तेनैव भावेन प्राप्नोति प्रतिपूजितः ।
याचितो यः प्रहृष्येत दत्त्वा च प्रियवाग्भवेत् ।
तं दृष्ट्वाप्यथवा स्पृष्ट्वा नरः स्वर्गति माप्नुयात् ।

नैताः स्वयमपि मोक्ष्यसि मोक्ष्यसि जलदोषरे क्वापि । तत्किं तत्र न मुञ्चसि मुक्ता मुक्ता भवन्ति यत्रापि इति । ददातीतिदः डलयोरभेदाज्जलो जडः । जडश्चासौ दश्चेति जलद इति । जले जडे ददातीति जलद इति वा श्लेषेणार्थो ज्ञेयः ।

भवन्ति नरकाः पापात् पापं दारिद्र्य संभवम् ।
दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ।
यैर्न भुक्तं न च हुतं सुतीर्थे मज्जनं कृतम् ।
हिरण्यमन्नमुदकं ब्राह्मणेभ्यो न चार्पितम् ।
दीना विवसना रूक्षाः कपालाङ्कितपाणयः ।
दृश्यन्ते ते महाराज जायमानाः पुनः पुनः ।

स्वर्गं गतानामिह जीवलोके चत्वारि चिह्नानि भवन्ति तात । दानप्रसङ्गो मधुरा च वाणी देवार्चनाभ्यागतपूजनं च ।

तुङ्गत्वं प्राप्यते दानान्न वित्तस्य च संचयात् ।
गतिरुच्चैः पयोदानां पयोधीनामधोगतिः ।
अदाता पुरुषस्त्यागी धनं संत्यज्य गच्छति ।
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ।

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति । दातव्यं भोक्तव्यं

सति विभवे संचयो न कर्त्तव्यः। पश्येह मधुकरीणां संचितमर्थं हरन्त्यन्ये।

न दानादधिकं किञ्चित त्रिषु लोकेषु विद्यते।
दानेन प्राप्यते स्वर्गः श्रीर्दानेन च लभ्यते।
ग्रासादर्द्धमपि ग्रासमर्थिभ्यः किन्न दीयते।
इच्छानुरूपो विभवः कदा कस्य भविष्यति।
उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम्।
दत्तं वा दापितं वापि वाक् सत्या वाभिभाषिता।
अदत्तदानाच्च भवेद्दरिद्री दरिद्रभावाच्च करोति पापम्।
पापप्रभावान्नरकं प्रयाति पुनर्दरिद्री पुनरेव पापी।
न देवाय न विप्राय न बन्धुभ्यो न चात्मने।
कृपणस्य धनं याति वन्हितस्करपार्थिवैः।
सुपात्रदानाच्च भवेद्धनाढ्यो धनप्रभावाच्च करोति पुण्यम्।
पुण्यप्रभावात् स्वर्गं प्रयाति पुनर्धनाढ्यः पुनरेव भोगी।

दानपात्र लक्षणं च यथा–

जातकर्मादिभि र्यस्तु संस्कारैः संस्कृतः शुचिः।
वेदाध्ययनसंपन्नः षट् कर्म निरतो द्विजः।
न विद्यया केवलया तपसा वापि पात्रता।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितम्।
तथा चिरोषितं चापि संप्रेत्यागत मेव वा।
अपूर्वं चैव पूर्वं च तत्पात्रं मानमर्हति।
दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनम्।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः।
ब्राह्मणश्चेन्न विन्देत श्रुतवृत्तोपबृंहितः।
प्रतिग्रहीता दानस्य मोघं स्याद् धनिनो धनम्।
अन्धं स्यात् तम एवेदं न प्रज्ञायेत किंचन।

चातुर्वर्ण्यन्निवर्त्तेत धर्माधर्मावृतानृते ।
यदेव ददतः पुण्यं तदेव प्रति गृह्णतः ।
न ह्येकचक्रं वर्त्तेत इत्येवं मुनयो विदुः ।
ब्राह्मणा हि महात्मानो देवानामपि देवताः ।
तान् पूजयस्व सततं दानेन परिचर्य्यया ।
यच्छोभार्थं बलार्थं वा वित्तमस्ति तवानघ ।
तेन ते ब्राह्मणाः पूज्याः स्वधर्म मनुतिष्ठता ।
विद्या विनयसंपन्ने ब्राह्मणे गृहमागते ।
हृष्यन्ति संपदः सर्वा यास्यामः परमां गतिम् ।
सुलभा युधि विप्रर्षे ह्यनिवृत्ता स्तनुत्यजः ।
न तथा तीर्थ आयाते श्रद्धया ये धनत्यजः ।
सहस्रगुणमाप्नोति गुणार्हाय प्रदायकः ।
तारयेत तत्कुलं सर्व मेकोऽपीह द्विजर्षभः ।
गामश्वं वित्तमन्नं वा तद्विधे प्रतिपादयेत् ।
द्रव्याणि चान्यानि तथा प्रेत्यभावे न शोचति ।
विशेषतो महाराज स्वस्य न्यायार्जितस्य च ।
श्रद्धया विधिवत् पात्रे दत्तस्यान्तो न विद्यते ।
नष्टशौचव्रतभ्रष्टे विप्रे वेदविवर्जिते ।
दीयमानं रुदत्यन्नं किं मया दुष्कृतं कृतम् ।
खलानामुपकाराय असता मिह संपदः ।
पिचुमन्दः फलाढ्योऽपि काकैरेव हि भुज्यत इति ।
दानं विना कृतं कर्म निष्फलस्यान्न संशयः ।
तस्माद्दानं प्रकर्त्तव्यं प्रयत्नेन मनीषिभिः ।
न दान सदृशं किञ्चित् त्रिषु लोकेषु विद्यते ।
पत्रं पुष्पं फलं तोयं शाकं वा गुड़मेव च ।
लवणं तण्डुलं वापि दातव्यं नात्र संशयः ।

तपो ब्रह्मचर्य (१८४) मित्येतास्तन्नवो नवेति-

---

विप्राणां निग्रहं कृत्वा यो ददाति धनादिकम् ।

स्रक्ताम्बूलमथान्नं वा स यात्येतादृशीं गतिम् ।

पैशाचीम् ॥

यद्धि येस्येष्टतां याति स्वल्पं वा यदि वा बहु ।

तस्य तस्य च दातव्य मन्यथा नरकं व्रजेत ।

इच्छयाल्पं दत्तमपि अनन्तफलदं स्मृतम् ।

अनिच्छयानन्तमपि दत्तं भस्महुतं यथा ।

गुणानामज्ञाता प्रचुरधनदातापि न मुदे मुदे यो विज्ञाता भवति मितदातापि गुणिनाम् । दृशौ दत्ते ग्राम्या न हि तदव-धत्तेऽलि चतुरो दृशोः प्रान्तं दत्त्वा वशयति नितान्तं कुलवधूः ।

अल्पं दत्त्वापि यो ब्रूते निर्बन्धेन शृणोति च ।

न तत्फलमवाप्नोति नात्र कार्या विचारणेति ।

( १८४ ) स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्य भाषणम् ।

संकल्पोऽध्यवसायश्च क्रिया निर्वृत्तिरेव च ।

एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः—

इत्युक्तमष्टाङ्ग मैथुनं यत्तत् त्यागो ब्रह्मचर्यम् । अथ ब्रह्मचर्य्य प्रस्तावेन किञ्चिदुच्यते—

अहेरिव वनाद्भीतो मिष्टान्नाच्च विषादिव ।

राक्षसीभ्य इवस्त्रीभ्यः स विद्यामधिगच्छति ।

किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ।

किं विविक्तेन मौनेन स्त्रीभि र्यस्य मनोहृतम् ।

अस्य किं विद्ययेत्यादि पद्यस्यार्थो यथा—स्त्रीभिरिति बहु-वचनान्तं पदम् । मन इत्येकवचनान्तत्प्रयोगेऽयमाशयः ॥

चातुर्वर्ण्यन्निवर्त्तेत धर्माधर्मावृतानृते ।
यदेव ददतः पुण्यं तदेव प्रति गृह्णतः ।
न ह्येकचक्रं वर्तेत इत्येवं मुनयो विदुः ।
ब्राह्मणा हि महात्मानो देवानामपि दैवतम् ।
तान् पूजयस्व सततं दानेन परिचर्यया ।
यच्छोभार्थं बलार्थं वा वित्तमस्ति तवानघ ।
तेन ते ब्राह्मणाः पूज्याः स्वधर्ममनुतिष्ठता ।
विद्याविनयसंपन्ने ब्राह्मणे गृहमागते ।
हृष्यन्ति संपदः सर्वा यास्यामः परमां गतिम् ।
सुलभा युधि विप्रर्षे ह्यनिवृत्तास्तनुत्यजः ।
न तथा तीर्थे आयाते श्रद्धया ये धनत्यजः ।
सहस्रगुणमाप्नोति गुणार्हाय प्रदायकः ।
तारयेत तत्कुलं सर्वमेकोऽपीह द्विजर्षभः ।
गामश्वं वित्तमन्नं वा तद्विधे प्रतिपादयेत् ।
द्रव्याणि चान्यानि तथा प्रेत्यभावे न शोचति ।
विशेषतो महाराज स्वस्य न्यायार्जितस्य च ।
श्रद्धया विधिवत् पात्रे दत्तस्यान्तो न विद्यते ।
नष्टशौचव्रतभ्रष्टे विप्रे वेदविवर्जिते ।
दीयमानं रुदत्यन्नं किं मया दुष्कृतं कृतम् ।
खलानामुपकाराय असतामिह संपदः ।
पिचुमन्दः फलाढ्योऽपि काकैरेव हि भुज्यत इति ।
दानं विना कृतं कर्म निष्फलं स्यान्न संशयः ।
तस्माद्दानं प्रकर्त्तव्यं प्रयत्नेन मनीषिभिः ।
न दान सदृशं किञ्चित् त्रिषु लोकेषु विद्यते ।
पत्रं पुष्पं फलं तोयं शाकं वा गुड़मेव च ।
लवणं तण्डुलं वापि दातव्यं नात्र संशयः ।

तपो ब्रह्मचर्य (१८४) मित्येतास्तन्नो नवेति-

विप्राणां निग्रहं कृत्वा यो ददाति धनादिकम् ।

स्रक्ताम्बूलमथान्नं वा स यात्येतादृशीं गतिम् ।

पैशाचीम् ॥

यद्धि येस्येष्टतां याति स्वल्पं वा यदि वा बहु ।

तस्य तस्य च दातव्य मन्यथा नरकं व्रजेत ।

इच्छयाल्पं दत्तमपि अनन्तफलदं स्मृतम् ।

अनिच्छयानन्तमपि दत्तं भस्महुतं यथा ।

गुणानामज्ञाता प्रचुरधनदातापि न मुदे मुदे यो विज्ञाता भवति मितदातापि गुणिनाम् । दृशौ दत्ते ग्राम्या न हि तदव-धत्तेऽति चतुरो दृशोः प्रान्तं दत्वा वशयति नितान्तं कुलबधूः ।

अल्पं दत्वापि यो ब्रूते निर्बन्धेन शृणोति च ।

न तत्फलमवाप्नोति नात्र कार्या विचारणेति ।

(१८४) स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्य भाषणम् ।

संकल्पोऽध्यवसायश्च क्रिया निर्वृत्तिरेव च ।

एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणा-

इत्युक्तमष्टाङ्ग मैथुनं यत्तत् त्यागो ब्रह्मचर्यम् । अथ ब्रह्मचर्य्य प्रस्तावेन किञ्चिदुच्यते—

अहेरिव वनाद्भीतो मिष्टान्नाच्च विषादिव ।

राक्षसीभ्य इवस्त्रीभ्यः स विद्यामधिगच्छति ।

किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा ।

किं विविक्तेन मौनेन स्त्रीभि र्यस्य मनोहृतम् ।

अस्य किं विद्ययेत्यादि पद्यस्यार्थो यथा—स्त्रीभिरिति बहु-वचनान्तं पदम् । मन इत्येकवचनान्तन्तरप्रयोगेऽयमाशयः ॥

स्वमार्गं प्रति बहुभिराहृतं वस्त्वेकम् । तस्य विलुण्ठनाद् दुर्दशैव भवति यथा, तथा यस्य पुरुषस्य स्त्रीभिर्मनोहृतं तस्य विद्यया ब्रह्मोपासनया किम्फलम्। न किमपि मनसः स्त्र्याकार वृत्तेः तपसा स्वधर्मेण कृच्छ्रचान्द्रायणादिना किं तत्स्त्रीसङ्ग-कामात् । त्यागेन संन्यासेन किं सुखम् । नाल्पमपि । योषित् स्पर्शदोषानु संचयात् । अथवा त्यागेन दानेन किं तस्य फलम्। स्त्रीसङ्गिनां दानादन्यत्र श्रद्धाभावात् ॥ अन्येषां ब्राह्मणपण्डि-तानामश्रद्धया यद्दत्तं तस्य फलाभावात् । सर्वसाधनहेतुनाश्रुतेन श्रवणेन वा किम् । न किमपि । मनोवृत्तीनामनैकान्तिकत्वात। मौनेन वा किम् । सर्वसाधनानि तत्फलानि च स्त्रैणस्य व्यर्था-न्येव भवन्ति ॥ यथानटस्येति ।

स्वार्थस्याकोऽविदं धिङ्माम् मूर्खं पण्डित मानिनम् ।
योऽहमीश्वरतां प्राप्य स्त्रीभिर्गोखरवज्जितः ।
सेवतो वर्षपूगान् मे उर्वश्या अधरासवम् ।
न तृप्यत्यात्मभूः कामो वन्हिराहुतिभि र्यथा ।
पुंश्चल्यापहृतं चित्तं को न्वन्यो मोचितु प्रभुः ।
आत्मारामेश्वरमृते भगवन्तमधोक्षजम् ।
क्वायं मलीमसः कायो दौर्गन्ध्याद्यात्मकोऽशुचिः ।
क्व गुणाः सौमनस्याद्या ह्यध्यासो विद्यया कृतः ।
पित्रोः किं स्विन्नु भार्यायाः स्वामिनोऽग्नेः श्वगृध्रयोः ।
किमात्मनः किं सुहृदा मिति यो नावसीयते ।
तस्मिन् कलेवरे ऽमेध्ये तुच्छनिष्ठे विसज्जते ।
अहो सुभद्रं सुनसं सुस्मितं च मुखं स्त्रिय-

इत्येवं विरक्तोऽपि पुरूरवा अहो यज्ञं कृत्वा गन्धर्वलोकं प्राप्तः स्त्रैणवासनाप्राबल्यात् ।

स्तनौमांसग्रन्थी कनककलशावित्युपमितौ मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् । स्रवन् मूत्रक्लिन्नं करिवरकरस्पर्द्धिजघन महो निन्द्यं रूपं कविजनविशेषैर्गुरुकृतम् ।

त्वग्मांसरुधिरस्नायु मेदोमज्जास्थि संहतौ ।
विरमूत्रपूये रमतां क्रिमीणां क्रियदन्तरम् ।

व्याध्याधि पूर्णे कृमिराशि संकुले स्वभावगन्धे ऽप्यशुचौमलद्रवे कलेवरे मूत्रपुरीषभाजने रमन्ति मूढा विरमन्ति पण्डिताः ।

प्रभवति मनसि विवेको विदुषामपि शास्त्रसंभवस्तावत ।
निपतन्ति दृष्टिविशिखा यावन्नेन्दी वराक्षीणाम् ।

अन्यत्र भीष्माद् गाङ्गेयादन्यत्र च हनूमतः ।
कुरङ्गखुरमात्रेण चर्मणा मोहितं जगत ॥
न संभाषेत् स्त्रियं कांचित् पूर्वदृष्टां च न स्मरेत् ।
कथां च वर्जयेत्तासां न पश्येल्लिखिता मपि ।
न हीदृशमनायुष्यं त्रिषु लोकेषु विद्यते ।
यादृशं पुरुषस्येह परदारोपसेवनम् ।

लङ्केश्वरो जनकजाहरणेन, वाली च तारापहारकतया, रामेणहतः ॥ कीचको द्रौपद्याः स्पर्शाभिलाषाद् भीमेनहतः । तद्वन्येषां गणनैवका । इन्द्राणी स्पर्शकामनावान् नहुषोऽजगरोऽभूत् । तथा उड्छदेशाधिपः प्रवीणोऽपि वेश्यायामासक्तः प्रेतयज्ञं कृत्वा स समाजः प्रेतो बभूवेति प्रसिद्धिः । शस्त्रेण वेणी विनिगूहितेन विदूरथं वै महिषी जघान ।

विषयेऽष्वपि कष्टोऽयं विषयः स्त्रीति नामतः ।
जीवत्यन्यैः किलाकृष्टः स्त्रियाकृष्टो न जीवति ।
स्त्रीरत्नध्यानमात्रं तु ब्रह्मणोऽपि मनो हरेत् ।
किं पुनश्चेतरेषां तु विषयेच्छानुवर्त्तिनाम् ।

स्त्रीरत्नं मोहनं दृष्टं स्पृष्टमाशीविषोपमम् ।
यदीच्छेदात्मनः श्रेयो मनसापि न चिन्तयेत् ।
संसार तव निःस्तार पदवी न दवीयसी ।
अन्तरा दुस्तरानस्यु यदि रे मदिरेक्षणाः ।
न तथास्य भवेत् क्लेशो बन्धश्चान्यप्रसङ्गतः ।
योषित् सङ्गात्तथा पुंसो यथा तत्सङ्गिसङ्गतः ।
सत्यं शौचं दया मौनं बुद्धिः श्रीर्ह्रीर्यशः क्षमा ।
शमो दमो भगश्चेति यत्सङ्गाद्याति संक्षयम् ।
तेष्वशान्तेषु मूढेषु योषित क्रीड़ामृगेषु च ।
सङ्गन्न कुर्याच्छोच्येषु खण्डितात्मस्वसाधुषु ।
स्त्रीणां स्त्रीसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् ।
क्षेमे विविक्त आसीनश्चिन्तयेन् मामतन्द्रितः ।
तामात्मनो विजानीयात् पत्यपत्य गृहादिकम् ।
दैवोपसादितं मृत्यं मृगयोर्गायनं यथा ।

महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदो साधवो यइति

अस्य महत्सेवामित्यादि पद्यस्यार्थो यथा—महतां भागवतानां सेवामेव विमुक्तेर्द्वारमाहुर्वेदादयः । [तेषां लक्षणमेवाह—त एव, महान्तोऽपि समचित्ताः शत्रुमित्रोदासीनगजवृकव्याघ्रब्राह्मणशूद्रलाभालाभजयाजयमानापमानेषु सत्सु] समं चित्तं येषां ते समचित्ता यतः प्रशान्ता रागाद्यूर्मिरहिताः । तत् कुतो यतो विमन्यवो विगतक्रोधा निजापराधिन्यपि दयापरा इत्यर्थः । पुनः सुहृदः स्वोपकारानपेक्षोपकारपराः । यतः साधवः प्राणादिभिरपि परकार्यसाधकाः । यथोक्तम्—

एके सत्पुरुषाः परार्थ घटकाः स्वार्थं परित्यज्य ये

सामान्यास्तु परार्थमुद्यमभृतः स्वार्थो विरोधेन ये ।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये निघ्नन्ति निरर्थकंपरहितं तेके न जानीमह इति ।

एतादृशानां सेवनमेव मुक्तिद्वारम् । योषितां सङ्गिसङ्गमोद्वारं नरकद्वारम् । तस्मात् स्त्रैणानां सङ्गं दूरतस्त्यक्त्वा सत्सङ्ग एव कर्त्तव्यो हिताभिलाषिभिरिति ।

सौलभ्ये देवकन्यानां सुतानां च महीभुजाम् ।
विद्याधर गन्धर्वादि कन्यारत्न वृतस्य च ।
वश्यत्वं नैति कामस्य रामः कामजयी स्मृतः ।
वज्रायुतसमानात्मा कीटैः काम शरैरहम् ।
अविद्धोऽस्मि तदा भद्रे नैव जर्जरतां गतः ।
न रामः परदारांस्तु चक्षुर्भ्यामपि पश्यती-

त्यादि वचनैः प्रमाणितं जानकीत्यागानन्तरं सहस्रवर्ष पर्यन्तं श्रीरामो ब्रह्मचर्यं धारितवान् ।

इदानीन्तना नरास्तु पूर्वाघदुर्गन्धकामान्धा ममेयं गम्या गम्यावेति न विचारयन्ति न तादृशा रूपवन्तो न तादृशाः पराक्रमवन्तो न तादृशा विद्यावन्तो न तादृशाः धनवन्तो न तादृशायुष्मन्तस्तथाप्यंशावतीर्णमिवात्मानं मन्यमानाः कलि-कालोरगग्रासग्रस्ताः कामक्रोधादिविविधविपत्तित्रस्ता मद्य-मांसाद्यनाचारविध्वस्ताः साधुजनेषु तिरस्कृतसौहार्दाः कुटिल प्रकृतयः स्वर्गसाधनयोग्या अप्यहो आत्मानं घातयन्तश्च दृश्य न्ते । तत्रापि पुरुषगामिनस्त्वसुराः साक्षात्पापमूर्तयो ज्ञातव्याः तदेवाह ब्रह्माभगवन्तं प्रति—

ता इमा यभितुं पापा उपक्रामन्ति मां प्रभो इति ।

अस्य श्लोकार्धस्यार्थो यथा—ता इमाः प्रजा असुररूपाः पापा मां यभितुं मैथुनेन धर्षयितु मुपाक्रमन्ति । तस्माद्धे प्रभो

धर्मात्मकस्वरूपवतो भगवतस्तनुत्वेन प्रशस्तमपि तपो भक्तिपथे अप्रकल्पितं सत् न कर्मतमोनाशकम्। कर्मतमोनाशिका तु भक्तिप्रभैवेत्यतस्तपोऽप्येकादशी व्रतादि भक्त्यनुगुणमेवानुष्ठेयन्नान्यदिति सिद्धम्।

अतोऽकामैः सकामैर्वा स सेव्यः स्त्रीनरादिभिः।

---

मां त्रायस्वेति। हन्त यद्येवं तर्हि कस्मै हितमुपदिशाम । वस्तुतस्तु स्त्रीयानामपि जडानामुपदेशादिनिर्बन्धं चित्तविक्षेपहेतुत्वेन जह्यादेव विवेकी। उपदेशकोटिभिरपि कुटिलप्रकृतेः पटुर्तुमशक्यत्वात्। न हि शुनः पुच्छोवर्षपूगप्रयत्नेनापि केनचित् सरलीकर्त्तुं शक्यः। गीतं हि गीतासु—

प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यतीति।

यस्मादीश्वरेण संकल्पित एव पुरुष ईश्वरं वेत्ति। तं विदित्वैव च सर्वदुःखातिगो भूत्वा नित्यानन्तपरमसुखशेवधि महाराजधानी मध्यास्ते तस्माद्यत्र कुत्रापि वसद्भिः परमेश्वरनिष्ठैर्भवितव्यमिति। अत्र आवह्मानकालोपयोगितया ब्रह्मचर्यप्रसङ्गात् किञ्चिदुच्यते—भविष्यपुराणे षष्ठेऽध्याये—

प्राग्विद्यादीनुपादाय तैरर्थांश्च यथा क्रमम्।
विन्देत सदृशीं भार्यां शास्त्र दृष्टेन कर्मणा।
गृहाश्रमो हि निःस्वानां महत्येषा विडम्बना।
तस्मात् पूर्वमुपादेयं वित्तमेव गृहैषिणेति।
अलाभे चैव कन्यायाः स्नातकव्रतमाचरेदिति पैठीनसिः।

एको यत्सोऽपि सर्वेषां भुक्तिमुक्तिप्रदः स्मृत-
इत्युक्ते (१८५) यद्यपि सकामा अपि भगवद्भक्ता
भुक्तिमुक्तियोग्याः स्युरेव तथापि ते भगवत्प्रि-
यत्वाय न कल्पन्ते । तस्मान्नैष्काम्यमेव श्रेष्ठ-
म् । तदेवाह श्रीमुखेन गीतासु श्रीभगवान् ।
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ।
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पित मनोबुद्धि र्यो मद्भक्तः स मे प्रियः ।
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्ष भयोद्वेगै र्मुक्तो यः स च मे प्रियः ।
अनपेक्षः शुचि र्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी योमद्भक्तः स मे प्रियः ।
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ।
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ।
तुल्यनिन्दास्तुति र्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमति र्भक्तिमान् यः समे प्रिय इति

---

(१८५) अन्यैरपि सर्वकामैरकामैश्च श्री नरादिभिः स एव सेव्यः । यद्यतः स एकोऽपि सर्वेषां मुक्तिप्रदस्मृतः इति ॥

इत्यादिभि र्गुणै र्यो युक्तः स मद्भक्तो मत्प्रिय इति भगवतो भावः । स कामानां दोषस्तु पूर्वमुक्तः ।

मनसि सममेव नानाविषयकं प्रेम न स्थीयेत इत्यन्यत्र प्रेम विहाय भगवानेव भजनीयः । यथोक्तम् ।

तथा निष्कामभक्तेन तथा भूतेन भक्तिदः ।
सेव्यः श्रीराधिकानाथ स्तत्कथा श्रवणादिभिरिति

तथा भूतेन भगवद्‌ भूतेनेत्यर्थः ।

विमुञ्चति यदा कामान् मानवो मनसि स्थितान्
तर्ह्यैव पुण्डरीकाक्ष भगवत्त्वाय कल्पते ।
त्रिधाप्येकं सदाऽगम्यं गम्यमेकप्रभेदनैः ।
प्रेमप्रेमी प्रेमपात्रं त्रितयं प्रणतोऽस्म्यहमित्याद्युक्तेः
प्रेमलक्षणन्तु–
काम्यलाभेऽपि यस्तावन्न निवर्तेत कर्हिचित् ।
विवर्धते प्रत्युत स्यात् प्रेमनामा रसात्मक इति ।

प्रेमग्रन्थे प्राचीनैरुक्तम् । काम्यश्च विषयः । विषयलाभेऽप्य निवर्त्यो भावः प्रेमेति यावत् । तच्च पामराणां कामिन्यादिषु दृष्टमेवेति । तेन कामिन्यादि विषयसङ्गैः एतै रुपद्रुतो नित्यं जीव लोकः स्वभावजैः । न करोति हरे र्नूनं कथामृत निधौ रतिमिति ज्ञेयम् ।

एतदेवोक्तलक्षणं प्रेमात्मा रामाणां भगवति भवति। तच्च विषयप्रेमापेक्षया उत्कृष्टम्। भगवत्प्रेमपुष्टाः पुरुषा ब्रह्माविष्टचित्ता इत्युच्यन्ते ते च चतुर्धा यथा—

नित्यं प्रेमपरीतात्मा कदाचित् प्रेम मोहितः।
कृत्रिमप्रेमयुक्तश्च प्रेमोदारश्चतुर्थकः।
चत्वारः प्रेमभक्ताः स्युस्तत्रादौ गोपिकागणः।
नैतस्य विप्रलम्भोऽस्ति कृष्णप्रेम समाधिना।
द्वितीयः शुकदेवादिः समाधिच्छेद दर्शनात्।
इह प्रेम्णि हठाच्चित्तं चिरं येन निवेश्यते।
स स्यात्तृतीयः सोऽपि स्याद् द्विविधस्तत्र चादिमः
विषयस्य विरोधेना ऽविरोधेनापि चेतरः।
प्रहलादादि मुखस्त्वाद्य अर्जुनादि स्तथा परः।
गोपी मुखानां भक्तानां मध्ये नैकतरोऽप्यहम्।
इति शोचति यो नित्यं प्रेमोदारः स उच्यत इति

यद्यपि प्रेमैकविधमेव तथापि स्वाधारेन्द्रियवृत्तिविक्षेपविभेदेन भिन्नवद्भाति। स्वाधारः प्रेमाधारः। स कामो निष्कामो वा। तस्येन्द्रिय वृत्तिविक्षेपविभेदेन प्रेमापि भिन्नभूतमिव भवद्भातीति। तदुक्तम्।

एकापि सा द्विधा भाति स्वाधारेन्द्रियवृत्तिभि-

रिति। परन्तु सकामभक्त्यापि रागाङ्कुरोच्छेदात् सज्जनैः सुबुद्धिसारथिभिरभ्यासवशाद्विषयेन्द्रियसंयोगसंकोच पुरस्कारेणातिबल तरलतर कच्चरमनस्तुरगवेगं निरोध्य विक्षेप निवृत्तिपूर्वकं परमेश्वरप्रेमसिद्धये तन्निवेदितनिष्कामस्वधर्माचरणेनैव भगवान् सेवनीय इति निर्णयः।

निष्कामभजनं विना मुक्ति र्न भवत्येव।

अकामादपि, ये विष्णोः सकृत्पूजां प्रकुर्वते।
न तेषां भवबन्धस्तु कदाचिदपि जायत इति

वचनादकामभजनेनैव मुक्तिलाभोक्तेः। अकामादपीत्यत्र, अपि शब्दस्य सकृदित्यनेनान्वयः। तेन सकृदपि ये पूजां प्रकुर्वत इत्यर्थः।

अत्रज्यायांसोऽपीदमुदीरयां बभूवुः–निष्कामभगवद्भक्त्यैव मुक्तिर्नेतरथेति। (१८६)।

---

(१८६) तस्मादिहातिदुःसहानेकविध दुर्जनघूकघोरघूत्कारप्रतिभयाकारभवाटवीमण्डले परिजाज्वलयमानं कलिप्रचण्डाग्निधूमधूमायित मस्ति येषां मनस्तैस्त्यक्तेतरविषयादरैः परमानन्दपदलाभाय निश्चितमतिभिर्भावुकै र्भगवद्भक्तिरेव संसाधनीया। न तु स्थूलमतिविनोदेन जन्मनिपातनीयमिति भावः। उक्तं चाभियुक्तैः–

नैव दिव्यसुखभोगसम्पदे नापवर्गमपि नाथ कामये।
सान्तु कर्णविवरे दिने दिने कृष्णकेलिचरितामृतानि मे।

अतो दारसुतापुत्राद्यासक्तिं सर्वदुःखदाम् ।
त्यक्त्वा श्रीवल्लभे भक्तिः कर्त्तव्या स्त्रीनरादिभिरिति

ननु भक्त्यामुक्तिरित्युक्तिः परम्परया तन्मुक्तिसाधनत्वाभिप्रायेण स्तुत्या वा नेया । शास्त्रेषु मुक्तेर्दुस्साध्यत्वदुर्लभत्वयोरुक्तिविरोधात् । तादृक्सूक्तयश्च–

---

त्वयि जनार्दन भक्तिरचञ्चला यदि भवेदफल प्रवणा मम ।
अभिलषाम्यपवर्गपराङ्मुखः पुनरपीह शरीरपरिग्रहम् ।
नन्दनन्दनकैशोर लीलामृत महाम्बुधौ ।
निमग्नानां किमस्माकं निर्वाणलवणाम्भसेति । पृथुनाचोक्तम् ।
न कामये नाथ तदप्यहं क्वचिन्न यत्र युष्मच्चरणाम्बुजासवः ।
महत्तमान्तर्हृदयान् मुखच्युतो विधत्स्वकर्णायुतमेष मे वर इति।

अस्य न कामय इत्यादि पद्यस्यार्थो यथा–नन्वन्यवरान् मायागुणजन्याननित्यान् मत्वा नेच्छसि, तदुपपन्नम् । तर्हि कैवल्यं वृणिवति चेत्तत्राह । हे नाथ यस्मिन्युष्मच्चरणाम्बुजासवो मोक्षफलं नास्ति तत्कैवल्यमपि न कामये । तव यशोविधुरात् कैवल्यात्तु संसारं वरं मन्ये । नाथेत्यनेन तदनाथप्रियत्वमुक्तं भवति । कीदृशश्चरणाम्बुजासवः महत्तमानां भागवतानामन्तर्हृदयान् मुखमागत्य तस्मान् मुखाच्च्युतः । तस्मादासवान्न कैवल्यमधिकं न सम्मितं। सुखानुभवाभावात् । तस्मात्तच्छ्रवणाय कर्णायुतं विधत्स्व । एष एव तु मे वरः । यतो गृहस्थानां भगवत्प्राप्तौ परमसाधनं हरिकथाश्रवणमेव । हरिकथाश्रोतृगृहास्तु भगवत् प्राप्त्यात्मकमुक्ति साधकत्वात्तीर्थभूता भवन्ति न बन्धन हेतव इति ।

रजोभिः समसंख्याताः पार्थिवैरिह जन्तवः ।
तेषां ये के च नेहन्ते श्रेयो वै मनुजादयः ।
प्रायो मुमुक्षवस्तेषां केचनैव द्विजोत्तम ।
मुमुक्षणां सहस्रेषु कश्चिन् मुच्येत सिद्ध्यति ।
मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ।

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् । न येषु जिह्ममनृतं न माया चेत्यादयः । सत्येन लभ्यस्तपसेत्यत्र तपः शब्देन मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तप इत्युक्तलक्षण योगस्यैव विवक्षितत्व मिति बोध्यम् ।

अथ मुक्तेर्दुःसाध्यत्वे तत्साधनं किं तवाभिमतमिति पृच्छ्यते चेदुच्यते । अष्टाङ्गो योग इति । यमनियमासनप्राणायाम प्रत्याहार धारणाध्यान समाधयोऽष्टावङ्गानि योगस्य (१८७) ।

---

(१८७) अहिंसा सत्यास्तेय ब्रह्मचर्या ऽपरिग्रहा यमाः । शौचसंतोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः । स्थिरसुखमासनम् । तस्मिन् सतिश्वासप्रश्वासयोर्गति विच्छेदः प्राणायामः स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणाम् प्रत्याहारः । सर्वतश्चित्तमाकृष्य सामान्याकारेण मनसो धारणं धारणा ॥ प्राणायामै र्देहेद्दोषान् धारणाभिश्च किल्बिषमि-

त्यादिवचनमत्रानुसंधेयम् । विशेषतो रूपादि चिन्तनं ध्यानम् । ध्येयमात्रस्फुरणं समाधिरिति ।

अत्र प्रसङ्गादहिंसा विषये किञ्चित संगृह्य प्रदर्श्यते—अहिंसायाः परमोत् कृष्टत्वं यथा युधिष्ठिरभीष्मसंवादे—युधिष्ठिर उवाच ।

प्रायशः पुरुषा लोके नृशंसाः प्राणिहिंसकाः ।
मांसेषु श्रद्धा दृश्यन्ते रौद्रा रक्षोगणा इव ।
तस्य ये भक्षणे दोषा मुनिभिः परिकीर्त्तिताः ।
विवर्जने गुणाश्चैव वक्तुमर्हसि तान्मम ।

भीष्म उवाच—

अहोनुखलु शोच्यास्ते नरा विषयलोलुपाः ।
एवं दोषाकरे मांसे मूढाः पश्यन्ति ये गुणान् ।
रसनोशन संयोगात् तृष्णानन्द विमोहिताः ।
वडिशेन यथा मीना विनाशं यान्ति बालिशाः ।
मांसाशिनोऽपि दृश्यन्ते रोगार्त्ता भृशदुर्बलाः ।
अमांसभोजिनो ऽरोगा बलवन्तः सुखान्विताः ।
न हि मांसं तृणात् काष्ठा दुपलाद्वापि जायते ।
हत्वा जन्तून् भवेन्मांसं तस्मात तत्परिवर्जयेदिति ।

हिंसादोषमाह मनुः ।

मांस भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ।
एतन् मांसस्य मांसत्वं प्रवदन्ति मनीषिण इति ।
यावन्ति पशुरोमाणि तावतकृत्वो हि मारणम् ।
वृथा पशुघ्नः प्राप्नोति प्रेत्यजन्मनि जन्मनि ।
ये भक्षयन्ति मांसानि भूतानां जीवितैषिणाम् ।
भक्ष्यन्ते तेऽपि भूतै स्तै रिति ब्रह्मा ऽब्रवीत स्वयम्भू ।
धनेन क्रयिको हन्ति खादकश्चोप भोगतः ।

घातको वधबन्धाभ्या मित्येष त्रिविधो वधः ।
सर्वमांसानि यो राजन् यावज्जीवं न भोजयेत् ।
स्वर्गे स विपुलस्थानं प्राप्नुयान्नात्र संशय इति ।

अथापरिग्रहसंबन्धेन धनदोषदिग्दर्शनेन प्रदर्श्यन्ते—श्रुतिवाग्दृष्टिहरणी लक्ष्मीः कुरुते नरस्य को दोषः । गरलसहोदर जाता तच्चित्रं यन्न मारयति । प्रथममियं सुभटखड्गमण्डलोत्पलवनविभ्रमभ्रमरी लक्ष्मीः । क्षीरसागरात् जडतां पारिजातपल्लवेभ्यो रागम् इन्दुशकलादेकान्तवक्रताम् उच्चैः श्रवसश्चञ्चलतां कालकूटान् मोहनशक्तिं मदिराया मदं कौस्तुभमणेरतिनैष्ठुर्यमित्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वैवोद्गता। न परिचयं रक्षति। नाभिजनमीक्षते। न रूपमालोकयति ॥ न कुलक्रममनुवर्त्तयति। न शीलं पश्यति । न वैदग्ध्यं गणयति न धर्ममनुरुध्यते न त्यागमाद्रियते । न विशेषज्ञतां विचारयति । नाचारं पालयति । न सत्यमवबुध्यते । गन्धर्वनगरलेखेव पश्यत एव नश्यति । कमलिनीवनसंचरणात् पादयोर्लग्ननलिननालकण्टकेव न क्वचिन्निर्भरमाबध्नाति पदम् । सरस्वतीपरिगृहीतमीर्ष्ययैव नालिङ्गति गुणवन्तम् । उन्नतिमादधानापि नीचस्वभावता माविष्करोति । तोयराशिसंभवापि तृष्णामावर्धयति । अकालप्रावृट् सर इव गुणकलहंसानाम् । पुरुषोत्तम रतापि खलजनप्रिया ।
हालाहलं नैव विषं विषं रमा जनाः परं व्यत्ययमत्र मन्वते ॥
निपीय जागर्त्ति सुखेन तं शिवः स्पृशन्निमां मुह्यति निद्रयाहरिः॥

शिशोरङ्कुशशून्यस्य पातितस्याऽपथेविटैः ।
क्षणक्षयोपयोगेन स्वप्नेनेव धनेन किम् ।
लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम् ।
शेषे धराभराक्रान्ते शेते नारायणः स्वयमिति ॥

योगश्च चित्तवृत्तिनिरोधलक्षणः । सा न कामयमाना निरोधरूपादिति नारदसूत्रे निरोध शब्दः । कामनानिरोधपरो व्याख्यातचरो न तु चित्तवृत्तिनिरोधपरः । यद्वा निरोधस्तु लोकवेदव्यापारसंन्यासः । तस्मै अनन्यता तद्विरोधिषूदासीनता चेति नारदसूत्रोक्त एव निरोधपदार्थो वेदितव्यः । संन्यास स्त्यागमात्रमत्राभिप्रेतं न तु प्रव्रज्या । तस्यां वृत्तिनिरोधावस्थायां द्रष्टुः स्वरूपेवस्थानम् । तेन स्वरूपसाक्षात् काराद्देहात्मबुद्धिभ्रान्ति निवृत्तिरिति नितान्तं चित्तप्रलक्षालनम् । ततो मुक्तिरिति योगान् मुक्तिरित्येव सुष्ठु । योगसिद्धे र्दुष्करत्वात्तया दुर्लभाया अपि मुक्तेः सिद्धिसंभवात् । तथा चोक्तम्—

त्यक्त्वा सर्वविकल्पांश्च स्वात्मस्थं निश्चलं मनः ।
कृत्वा शान्तो भवेद्योगी दग्धेन्धन इवानलः ।
तस्यैव कल्पनाहीन स्वरूपग्रहणं हि यत् ।
मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते ।
शान्तसंसारकलनः कलावानपि निष्कलः ।
यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उच्यत-
इति । एवं भूतः साधकः सचित्तो ऽप्यचित्त इव सचक्ष रप्यचक्षरिव सकर्णोऽप्यकर्ण इव विज्ञोऽप्य

विज्ञ इव प्रबुद्धोऽपि निद्राण इव जनै र्न लक्ष्यते। एवं यथोक्तदशामापन्नः सद्य इहैव किमपि सुख मास्वादयति । तथा च श्रुतिः—

समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखम् । न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तः करणेन गृह्यत इति ।

मूकास्वादनवदिति भावः । ऋतंभरा तत्र प्रज्ञा प्रसंख्यानेऽप्य कुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेधः समाधिरिति पातञ्जलसूत्रे (१८८) च । एतस्मिन् समाधावभ्यस्यमाने क्षणमात्रोऽपि कालः शताश्वमेधफलभूतं धर्मं मेघ इवाभिवर्षति । क्षणमेकं क्रतुशतस्यापीति श्रुतेरित्यन्वर्था धर्ममेघसंज्ञा ।

समाधिश्च द्विविधः । सविकल्पनिर्विकल्पभेदात् । तत्राद्यः संप्रज्ञात इत्युच्यते । द्वितीयोऽसंप्रज्ञात इति । असंप्रज्ञातसमाधि रेव ऋतम्भरा प्रज्ञेत्युच्यते । तदुदये चित्तवृत्तिनिरोधाभ्यासः कर्त्तव्यः ।

---

(१८८) तत्र तस्मिन् समाध्युत्कर्ष जन्ये ऽध्यात्मप्रसादे सति, ऋतं सत्यं वस्तुयाथात्म्यं बिभर्त्ति प्रकाशयतीत्यृतम्भरा । ततश्च कृतार्थोऽसावात्मविद् विभ्रष्टसकलद्वैतविभ्रमोऽनुपमानन्द पदे निमज्जति । प्रसंख्याने आत्मस्वरूपज्ञानाकारायां वृत्तौ । अकुसीदस्य प्रार्थनाशून्यस्येति ॥

अभ्यासेन स्थिरं चित्तमभ्यासेनानिलो वशः ।
अभ्यासेन पुरानन्दो ह्यभ्यासेनात्मदर्शनमित्युक्तेः।
अभ्यासवैराग्याभ्यां तन्निरोध इत्यादि पातञ्जल
सूत्रे योगसाधनक्रमश्चैतत्प्रसङ्गे तत्रैवद्रष्टव्यः ।

स्मरन्ति चात्र—

लोकवासनया जन्तोः शास्त्रवासनयापि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ।
ज्ञानवान् वासनाहीनः शान्तिमाप्नोति शाश्वतीम्
अज्ञानी वासनाधीनः क्लेशौघैः परिभूयते ।
मनसो निग्रहायत्त मभयं सर्वयोगिनाम् ।
दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव चेति ।

पश्वादिभिश्चाविशेषादिति शङ्कराचार्योक्तेः । कामक्रोधादि वृत्तिवासनाभि र्वशीकृतः । पण्डितोऽपि पुमान् स्वार्थाद् भ्रश्यतीति तत्त्वज्ञानाभिनिवेशेन ज्ञानाद्यभियोगेन च वासनाः क्षीयन्ते । क्षीणासु तासु निर्वृत्तिकं मनो लीयते । लीने च मनसि तत्त्वज्ञानं (मात्मस्वरूपज्ञानात्मकं) उदेति । एतत्त्रयं सहैवाभ्यसनीयम् ।

वासनाक्षयविज्ञान मनोनाशा महामते ।
समकालं चिराभ्यस्ता भवन्ति फलभागिन.
इत्युक्तेः । तत्र तत्त्वज्ञानस्य साधनं श्रवणमनना-

दि । मनो नाशस्य प्राणायामप्रत्याहारादि । वासनाक्षयस्य प्रतिकूलवासनोत्पादनमिति ॥ तत्र च तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ज्ञानाभ्यासं विदुर्बुधा इत्युक्तलक्षणस्य ज्ञानाभ्यासस्योपयोगः । श्रवणमननयोरुत्तरं निदिध्यासनाख्यस्य योगस्य ॥ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतौ विधानान्न मुक्तये परोक्षमात्मज्ञानं प्रधानमपि तु योग एवेति ज्ञानाभ्याससंभवः।
श्रोतव्यादीनि राजेन्द्र नृणां सन्ति सहस्रशः ।
अपश्यतामात्मतत्त्वं गृहेषु गृहमेधिनामिति ।
श्रीमद्भागवतोक्तेर्हिताहितज्ञानार्थं तत्त्वज्ञानार्थं च शास्त्रश्रवणं कर्त्तव्यम् । शास्त्रश्रवणं विना हि अज्ञाननाशाऽभावाद्व दुर्गति रेवोत्तरोत्तरमनुवर्त्तत इति (१८९) ।

अथातः स्वाध्यायप्रशंसा । प्रिये स्वाध्यायप्रवचने भवतो युक्तमना भवत्यपराधीनो ऽहरऽहरर्थान् साधयते सुखं स्वपिति परमचिकित्सक आत्मनो भवतीन्द्रिय संयमश्चै कारामता भवतीति शतपथश्रुतौ स्वाध्यायशब्दशब्दितश्रवणेन

(१८९) अज्ञानस्य तत्फलनिन्दया निन्दा यथा—

करोति पापं योऽज्ञानान्नात्मनो वेत्ति च क्षयम् ।
प्रद्वेष्टि साधुवृत्तांश्च स लोकस्यैति वाच्यताम् ।
अज्ञानान्निरयं याति तथा ज्ञानेन दुर्गतिम् ।
अज्ञानात् क्लेशमाप्नोति तथापत्सु निमज्जति ।
अज्ञान प्रसवं ह्मीदं यद्दुःख मुपलभ्यते ।
रागो द्वेष स्तथा मोहो हर्षः शोकोऽभिमानिता ।
कामः क्रोधश्च दर्पश्च तन्द्री चालनमेव च ।
इच्छा द्वेषस्तथा तापः परवृद्ध्युपतापिता ।
अज्ञानमेतन्निर्दिष्टं पापानां चैव याः क्रियाः ।
अज्ञानं चाति लोभश्चाप्येकं जानीहि पार्थिव ।
लोभप्रभवमज्ञानं वृद्धं भूयः प्रवर्त्तते ।
स्थाने स्थाने भवेत् क्षीण मुपैति विविधां गतिमिति ।

महाभारते । अन्यत्र च ।

यः करोति नरः पापं तस्यात्मध्रुवमप्रियः ।
पापस्य हि फलं दुःखं तद्भोक्तव्य मिहात्मना ।
कथं ते पापनिरता नरा रात्रिषु शेरते ।
मरणान्तरिते तेषां नरके तीव्र यातना इति ।
परलोक विरुद्धानि कुर्वाणं दूरतस्त्यजेत् ।
आत्मानं योऽतिसंधत्ते स परस्य कथं हित इति ।
वरं शरावहस्तस्य चाण्डालागारवीथिषु ।
भिक्षार्थमटनं राम न मौर्ख्यहतजीवितमिति

योगवासिष्ठे । अज्ञानिनां दुर्गतिरूपमुक्तं गारुडे—

दोषग्राही गुणा ऽश्लाघी गुणवत्सु च मत्सराः ।
नीचानुरागिणो मूढाः सत्सङ्गति पराङ्मुखाः ।
तीर्थसज्जनसत्कर्म गुरुदेवविनिन्दकाः ।

पुराणवेदमीमांसा न्यायवेदान्तदूषकाः ।
न शृण्वन्ति हितं वाक्यं शास्त्रवार्त्तां कदापि न ।
हर्षिता दुःखितं दृष्ट्वा हर्षिते दुःखदायकाः ।
दुष्टवाक्यस्य वक्तारो दुष्टचित्ताश्च ये सदा ।
एते चान्ये च बहवः पापिष्ठा धर्मवर्जिताः ।
गच्छन्ति यममार्गे हि रोदमाना दिवानिशम् ।
पापिष्ठास्ते प्रपश्यन्ति यमरूपं भयङ्करम् ।
दण्डहस्तं महाकायं महिषो परिसंस्थितम् ।
प्रलयाम्बुदनिर्घोषं कज्जलाचलसन्निभम् ।
विद्युत्प्रभायुधैर्भीमं द्वात्रिंशद्भुज संयुतम् ।
योजनत्रयविस्तारं वापी तुल्यविलोचनम् ।
दंष्ट्रा करालवदनं रक्ताक्षं दीर्घनासिकम् ।
मृत्युज्वरादिभि र्युक्त श्चित्र गुप्तोऽपिभीषणः ।
सर्वे दूताश्च गर्जन्ति यमतुल्यास्तदन्तिके ।
यतस्त्वं धर्महीनोऽसि सततं ताड्यसे भृशम् ।
क्षमापराधं कुरुते भगवान् हरिरीश्वरः ।
वयं तु सापराधानं दण्डदा नात्र संशयः ।
एवमुक्त्वा च तं दूता निर्दयं ताड्यन्ति तान् ।
केवलेन स्वधर्मेण कुटुम्ब भरणोत्सुकः ।
याति नीचोऽन्धतामिस्रं चरमं तमसः पदम् ।
ब्रह्मघ्नाश्च सुरापाश्च स्त्रीघ्ना वा बालघातकाः ।
स्त्रीघाती गर्भपाती च पञ्च प्रच्छन्नपापिनः ।
ये ऋणं न प्रयच्छन्ति ये वै न्यासापहारकाः ।
विश्वासघातका ये च सविषान्नेन मारकाः ।
ये हरन्ति गुरोर्द्रव्यं देवद्रव्यं द्विजस्य वा ।
स्त्रीद्रव्यहारिणो ये च बालद्रव्य हराश्च ये ।

मातरं येऽवमन्यन्ते पितरं गुरुमेव च ।
आचार्यं चापि पूज्यं च वैतरण्यां पतन्ति ते ।
पतिव्रतां साधुशीलां कुलीनां विनयान्विताम् ।
स्त्रियं त्यजन्ति ये द्वेषाद् वैतरण्यां पतन्ति ते ।
सतां गुणसहस्रेषु दोषानारोपयन्ति ये ।
तेष्ववज्ञां च कुर्वन्ति वैतरण्यां पतन्ति ते ।
राजभार्याभिलाषी च परदारापहारकः ।
कन्यायाः कामुकश्चैव सतीनां दूषकश्च यः ।
एते च बहवः पापा निषिद्धाचरणोत्सुकाः ।
विहितत्यागिनो मूढा वैतरण्यां पतन्ति ते ।
कूटसाक्षिप्रदातारः कूटधर्मपरायणाः ।
छलेनार्जनसंसक्ताश्चौर्यवृत्त्या च जीविनः ।
शिवं शिवां हरिं सूर्यं गणेशं सद्गुरुं बुधम् ।
न पूजयन्ति ये मन्दास्ते वै निरयगामिनः ।
मित्रद्रोही कृतघ्नश्च ये च विश्वासघातकाः ।
ते नरा नरकं याति यावच्चन्द्रदिवाकरौ ।
अग्निं दद्यान्महापापी गृहे ग्रामे तथा वने ।
स नीतो यमदूतैश्च वह्निकुण्डेषु पच्यते ।
वह्निना दग्धगात्रोऽसौ यदा छायां प्रयाचते ।
नीयते च तदा दूतैरसिपत्रवनान्तरे ।
खड्गतीक्ष्णैश्च तत्पत्रैर्गात्रच्छेदो यदा भवेत् ।
तदोचुः शीतलच्छाये सुखनिद्रां कुरुष्व भोः ।
पानीयं पातुमिच्छन्वै तृषार्त्तो यदि याचते ।
पानार्थं तैलमत्युष्णं तदा दूतैः प्रदीयते ।
पीतमात्रेण तेनैव दग्धगात्रा पतन्ति ते ।
कथञ्चित् पुनरुत्थाय प्रलपन्ति सुदीनवत् ।

विवशा उच्छ्वसन्तश्च ते वक्तुमपि नाशक्नुवन्निति ।
अध्यात्मविद्यादातारं नैव मन्यन्ति ये गुरुम् ।
तथा पुराणवक्तारं ते वै निरयगामिन इति ।

श्रीमद्भागवते ।

आदीपनं स्वगात्राणां वेष्टयित्वोल्मुकादिभिः ।
आत्ममांसादनं क्वापि स्वकृतं परतोऽपि वा ।
जीवतश्चान्त्राभ्युद्धारः श्वगृध्रैर्यमसादने ।
सर्पवृश्चिकदंशाद्यै र्दशद्भिश्चात्म वैशसम् ।
कृन्तनं चाऽवयवशो गजादिभ्यो भिदापनम् ।
पातनं गिरिशृङ्गेभ्यो रोधनं चाम्बुगर्त्तयोः ।
एताः संसृतयः सर्वा भवन्ति नरकान्तर इति ।

बाल्मीकीये ।

मातरं पितरं विप्रमाचार्यं योऽवमन्यते ।
स पश्यति फलं तस्य प्रेतराजवशं गतः ।

पापिनां यमपुरे गमनागमनप्रकारो यथा—प्रथमं तु हस्तस्थितकोदण्डै र्वागुरासंग्रथनव्यग्रैः प्रचण्डै र्यमदूतै र्यदा जीवो बद्धो भवति तदा कस्त्वं किमर्थं त्वया बद्धोऽस्मि मुञ्चमामिति विषीदन्तं मुहुराहन्यमानं प्रति यमदूता अब्रुवन् । मूढ़ त्वद्ग्रहणाय बहव एते ऽपरिमिता मादृशाः समुपदिष्टा स्तदद्य पुण्यै र्मया समासादितोऽसि । त्वां धर्मराजपादमूले नेष्यामि । यथा स्वां प्रकृतिं भज्यसि । एवं निर्भर्त्स्यं मुहुराहन्यमानः केवलमुच्चैश्चीत्कारमेवाकरोत् । अनन्तरं विण्मूत्रादि दुर्गन्धपूरिते नरके निरुद्धो मनस्यकरोत् । अहो मे दारुणः पापकर्मणांविपाकः । महासंकटे पतितोऽस्मि । न पिता न भ्राता न पुत्रो न बन्धुर्नसखा न भार्या न मित्रम् । केन सह दुःखं साधारणं करोमि । को मे नरकबन्धनान् मोचयेत् । अहो यदेवं विधं दुःखं ॥

सर्वएवेश्वरविमुखस्यानियतेन्द्रियस्यैवदोषः । प्रथमं गर्भे एव सहस्रधा किन्न विदीर्णोऽस्मि । यस्य जन्मनोऽयमीदृशः परिणामः । भो भगवन्न ऽशरणशरण चरणपञ्जरे रक्ष मां महानरकपातात् । भो जगदीश ! मां त्रायस्व । त्वयैव संवर्धितोऽस्मि । त्वयैव पालितोऽस्मीति ।

यास्तामिस्रान्धतामिस्रा रौरवाद्याश्च यातनाः ।
भुङ्क्ते नरो वा नारी वा मिथः सङ्गेन निर्मिताः ।
पञ्चभ्य एव मात्राभ्यः प्रेत्य दुष्कर्मिणां नृणाम् ।
शरीरं यातनार्थीय मन्यदुत्पद्यते ध्रुवम् ।
तेनानुभूय ता यामीः शरीरेणेह यातनाः ।
तास्वेव भूतमात्रासु प्रलीयन्ते विभागशः ।
यदि तु प्रायशो ऽधर्मं श्रयते धर्ममल्पशः ।
तै र्भूतैः संपरिष्वक्तो यामीः प्राप्नोति यातनाः ।
यामीस्ता यातनाः प्राप्य सजीवो गतकिल्बिषः ।
तान्येव पञ्चभूतानि पुनरप्येति भागशः ।
तामिस्रादिषु चोग्रेषु नरकेषु विवर्त्तयन् ।
असिपत्र वनादीनि बन्धनच्छेदनानि च ।
विविधाश्चैव संपीडाः काकोलूकैश्च भक्षणम् ।
करम्भवालुकातापान् कुम्भीपाकांश्च दारुणान् ।
संभवांश्च वियोनीषु दुःख प्रायासु नित्यशः ।
शीतातपविघातांश्च विविधानि भयानि च ।
असकृद् गर्भवासेषु वासं जन्म च दारुणम् ।
बन्धनानि च कष्टानि परप्रेर्यत्वमेव च ।
बन्धुप्रिय वियोगांश्च संवासं चैव दुर्जनैः ।
द्रव्यार्जनं च नाशं च मित्रामित्रस्य चार्जनम् ।

जरां चैवा ऽप्रतीकारां व्याधिभिश्चो पपीड़नम् ।
क्लेशांश्च विविधांस्तांस्तान् मृत्युमेव च दुर्जयम् ।
यादृशेन तु भावेन यद्यत् कर्मनिषेवते ।
तादृशेन शरीरेण तत्तत् फलमुपाश्नुत इति ।

यद्यपि जानन्न ऽजानन्नपि पुमान् पापमनुतिष्ठति ।
नानाहेतुभिः । सत्यम्, तथापि परमार्थज्ञानवानप्रमत्तो जाग-र्त्ति । ततः कुशली संपद्यते । अन्यथा तु पापान्नरकभोगानन्तर-सम्यारोहावरोहौ दुष्परिहरौ जीवस्य प्रमत्तस्य । तथा च व्यासः—संयमनेत्वनुभूयेतरेषामारोहावरोहौ । तद्गति दर्श-ना दिति ।

अस्य संयमन इत्यादि वेदान्तसूत्रस्यार्थो यथा—पापिनां तु नायं पूर्वोक्त आरोहावरोहक्रमः किन्तु यमदूतैर्नीयमानाना मतिदुःखार्थं याम्ये पुरे प्रवेशः । ततो नानाविधदुःखान्यनु-भूय भगवतो वैवस्वतस्य संकल्पमात्रेण सद्यो नीचयोनिप्रवेशः। यदि ज्ञानन्न प्राप्तं सतकर्म च नानुष्ठितं भवति तदा ते विविध-नरकभोगान् भुक्त्वा कीटगोमयादिस्थानेषु क्रिमयो भवन्ति पत-ङ्गाश्च । यदिदं दन्दशूकमुपदंशनशीलं दंशमशकपन्नगादि दृश्यते तत्सर्वं कर्मतारतम्यतो भवति । एतावांस्तु विशेषः । यदि पापमुत्कटं तदात्रापि दुःखमनुभूय याम्ये पुरे प्रवेशस्तत्र पुनर्दुःखमनुभूय यमसंकल्पमात्रेण वृक्षादिर्वा पशुपक्ष्यादिर्वा भवति । संयमने त्वित्यत्र तु शब्दो निषेधार्थः । यदि तु कथं चिन्मार्कण्डेयादि मुखत इव भगवत्स्मरणादिक मपि स्यात्तदा तत एवोर्ध्वगमनमपि भवति । अनिष्टादिकारिणां परवित्तकल-त्रापहारक वञ्चक भूतद्रोहि देहमात्रम्भर पक्षिघातक गुरुजनद्रोहि स्वधर्मत्यागि कुन्यायि मूर्ख जीवघातक व्यर्थान्नभोजि, अन्नाद्यप-हारक निषिद्धस्त्रीगामि पश्वादिगामि सज्जनमर्याद भञ्जक शौचा-

नेन्द्रियसंयमादुत्तरमेकाराममतोक्तेश्च। ज्ञानादुत्तरं योगान् मोक्षः सिद्ध्यति । यथोक्तम् ।

स्वाध्यायाद्योगमासीत योगात् स्वाध्यायमामनेत्
स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशत इति।

श्रवणादुत्तरं संशयविपर्ययपदवाच्ययोरसंभावनाविपरीतभावनयोरात्मज्ञान प्रतिबन्धकयो निरासार्थं मननस्यात्यावश्यकता ।

भावना विपरीता या या च संशय भावना ।
कुरुते प्रतिबन्धं सा खलु ज्ञानस्य नापरमिति ।

पराशरोक्तेः । पाञ्चभौतिके देहपिण्डे आत्म-

---

चारहीनं निन्दितपशुपालक दाम्भिकरेतोद विषदाऽग्निद मिथ्या प्रलापि सुरापायि स्वाधिकावज्ञाकारक पुरुषमेधादिना भैरवपूजक विश्वासघातक भूतोद्वेजक कुसूलगुहादिषु भूतादिरोधक स्वगृहागताऽतिथिविद्वेषक धनादिगर्वितानां कथितप्रकारा वारोहावरोहौ नस्तः । कुतः अनुभूयसंयमने तद्गति दर्शनात्। इह हानिभयकलङ्कादि दुःखमनुभूय संयमने भूमेरधस्ताज्जलावरणादुपरि यमालये तेषामनिष्टादिकारिणां गतेर्गमनस्य दर्शनात् । तथा संयमने तामिस्राऽन्धतामिस्र रौरव महारौरव कुम्भीपाक कालसूत्राऽसिपत्रवन सूकरमुखाऽन्धकूप क्रिमिभोजन सन्दंश तप्तभूमि वज्रकण्टक शाल्मली वैतरणी पूयोद प्राणरोध विषाशन लालाभक्ष सारमेयादाऽवीचि रयःपातन क्षारकर्दम रक्षोगणभोजन शूलप्रोत दन्दशूकाऽवनिरोधन पर्यावर्त्तन सूचीमुख प्रभृति नरकदुःखमनुभूयाऽत्र पृथिव्यामूर्ध्वं वा यथाकर्म तेषां गतेर्दर्शनादित्यर्थः । एतत् प्रदर्शनस्य च तात्पर्यं भोगेभ्यो विरज्य योगे यतनीयमित्यत्रेति ॥

बुद्धिर्विपरीत भावना । आत्मा देहपिण्डमात्रो ऽन्यो वा कश्चिच्चेतन इत्याकारकः संशयोऽसंभावना।वेदान्तसूत्रानुसारिणं श्रुत्यनुकूलतर्कैरात्मतत्त्वविवेचनं मननम् । न्यायचर्चेयमीशस्य मननव्यपदेशभागित्युक्तेः। मननान्निश्चयोत्तरं तत्साक्षात्काराय योगो निदिध्यासनमितिहिक्रमः।निदिध्यासनोत्तरमात्मस्वरूपविज्ञानाज्जीवन् मुक्तिः। यस्मिन्काले स्वमात्मानं योगी जानाति केवलम्। तस्मात्कालात् समारभ्य जीवन् मुक्तो भवेदसावित्युक्तेः ।

ज्ञानसिद्ध्यनुगुणं चित्तप्रसादनं च मध्येऽपेक्षितम् । चित्तप्रसादनोपायश्च—मैत्री करुणामुदितोपेक्षाणां सुखदुःखपुण्यपापविषयाणां भावना । तया हि असंभावनाविपरीतभावनयो र्निःशेषपरिहारसंभवः (१९०) ।

---

(१९०) मैत्रीकरुणामुदितोपेक्षाणां विवरणं यथा—सुखिप्राणिष्वेते मदीया इति मैत्री । दुःखिप्राणिषु यथा मम दुःखं माभूत्तथान्येषामपि दुःखं माभूदिति करुणा । यद्ययं पुण्यात्मसु मुदितां भावयेत् पुण्या एते साधुकुर्वन्तीति तदा तद्वासनया स्वयमेवाप्रमत्तः । पुण्यकर्म्मणि प्रवर्त्तते । तथा पातकिनोऽमीदूरतो वर्जनीया इति पापिषूपेक्षां भावयन् स्वयमपि पापान्निवर्त्तते । एवं भावयतोऽसूयेर्ष्याद्यखिलदोष निवृत्तौ

शास्त्रसज्जनसंपर्कात्तु उभयी उन्मूलिता भवति मनीषिणाम् । प्रथमनिवृत्तौ द्वितीयानिवृत्तिः स्वयमेव भवतीति निश्चयः ।

ननु ध्यानं योगाङ्गमुक्तम् । तत्र युञ्जानः कंध्यास्यतीति चेत् । उच्यते—यथाभिमतध्यानाद्वेति पातञ्जलसूत्राद् यदेवाभिमतं तदेव ध्याये दित्यत्रनाग्रहः । यदि विशेषेण ईश्वरध्यान एव निर्बन्धस्तर्हि तं ध्यायेत् । ईश्वरप्रणिधानाद्वा; समाधिसिद्धिरीश्वर प्राणिधानादिति पातञ्जलसूत्राभ्याम् । प्रणिधानं भक्तिरिति व्यासपादाः । प्रणिधानं ध्यानात्मकं भजनमिति हि तदर्थः । तस्मादेव पूर्वमेवोक्तं भक्तिरपि परम्परया साधनमिति । अर्थेन प्रलोभ्यमानं हि मनः

---

चित्तनैर्मल्याज्ज्ञानभाजनतामभिसंपद्यत इति। आह च कृष्णमिश्रः । तत्र मैत्रीवाक्यम् ।

ध्यायन्ति मां सुखिनि दुःखिनि चानुकम्पां पुण्यक्रियेषु मुदितां कुमतावुपेक्षाम् । एवं प्रसादमुपपास्यति रागलोभद्वेषादिदोषकलुषोऽप्ययमन्तरात्मेति ।

असूया निवृत्तिश्च श्लाघ्या ।

असूयोपेतमनसां भक्तिदानादि कर्म यत् ।
अवेहि निष्फलं ब्रह्मं स्तेषां दूरतरो हरिः ।
तपः पूजा ध्यानरतो यस्त्वसूयापरो भवेत् ।
तत् तपः सा च पूजा च तद्ध्यानं च निरर्थकमित्याद्युक्तेः॥

शनैरन्तर्मुखं भवति। अन्यथा कपिचपलत्वा-दुत्प्लुत्य संसारविपिनमेवाभिनिविशते। ध्याना च्छ्रान्तो जपात्मकमपि भजनं कुर्वीत ।

जपाच्छ्रान्तः पुनर्ध्यायेद् ध्यानाच्छ्रान्तः पुनर्जपेत्
जपध्यानाभियोगेन पश्येदात्मानमात्मनीत्युक्तेः।

दिवि भुवि सुखनिरपेक्षास्तत्त्वनिमग्नाश्च सत्त्व संपन्नाः। मानामानसमानास्ते तव भक्ता जपा-सक्ता इति गोविन्दगुणानन्दे जपस्यापि भक्त-लक्षणेषु पठितत्वाज्जपोऽपि भवति भजनम्। पतञ्जलिनाप्येतदनुमोदितम्। यथा क्लेशकर्म्म-विपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः। तस्य वाचकः प्रणवः। तज्जपस्तदर्थभावनम्। ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाऽभावश्चेति॥

ननु वृत्तिलयेनैव मोक्षाङ्गीकारे किमिति अष्टा ङ्गयोगप्रयासः। गानेनापि तस्यानायासमेव स-म्पाद्यत्वात्।

वीणावादनतत्त्वज्ञः स्वरजाति विशारदः।
तालज्ञश्चाप्रयासेन मोक्षमार्गं स गच्छतीति।
याज्ञवल्क्योक्तेः (१९१)।

---

(१९१) अप्रयासेनेति। साधनं विनैव अष्टाङ्गयोगसा-धनं विनैव। गातुः श्रोतुर्द्वयोरपि समाधिफललाभात्। भगवति

नेत्युच्यते । मोक्षमार्गारोहमात्रसाधनत्वाद् गानस्य । न तु योगवत् लयाभिप्रायेण मोक्षसाधनत्वोक्तिस्तस्येति ।

---

चित्तानुरागहेतुत्वाच्चाऽप्रयासेनेत्युक्तम् । न चैतद् याज्ञवल्क्यवचनमब्राह्मणविषयमिति भ्रमितव्यम् ।

ब्राह्मणो वासुदेवाख्यं गायमानोऽनिशं नृप ।

हरेः सालोक्यमाप्नोति रुद्रगानाधिको भवेत ।

अन्यथा नरकं गच्छेद् गायमानोऽन्यदेवहीति

ब्राह्मणस्यापि गानविधानात् ।

तच्च गानं साधुसंस्कृतशब्दैनैव कर्त्तव्यं श्रोतव्यं च । न तु प्राकृतादि भाषाप्रबन्धेन । न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द इति श्रुतौ वैयाकरणपातञ्जलमहाभाष्ये चापशब्दोच्चारणस्य निषिद्धत्वादिति चेदसाध्वेतत् ।

तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत् ।

स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपीति

प्रतिपदोक्तमेव प्राकृतशब्दैरपि स्तुतिगानविधानात्तन्निषेधाप्रवृत्तेः । तन्निषेधस्तु यज्ञादि विषय इति ज्ञेयम् । तस्मात्सिद्धं यया कयापि भाषया भगवतो गुणनामगानकीर्त्तनादि कर्त्तव्यमिति प्राकृतादिभाषा प्रबन्धेन सर्वथा निषेधे तु असंस्कृतज्ञान् प्रति भगवद्धर्मोपदेशो दुर्घट आपद्येत । तेऽपि च भक्त्यधिकारिणो हि । सर्वेऽधिकारिणो भक्तेरिति शास्त्रेषु निर्णय इत्युक्तेः । श्रीमद्भागवतादीनामपि संस्कृत एव ग्रथितत्वात्तद्द्वारा संस्कृतभाषया असंस्कृतज्ञान् प्रति तेषां बोधनस्याशक्यत्वाच्च । अबोधने च स्त्रीशूद्रद्विजबन्धूनामित्यादि वचनमचरितार्थं चरितार्थं वा स्यात । अत एव लिखितं नानकचन्द्रोदये—

ग्रन्थास्ते भाषया सन्तु मन्दानां प्रतिपत्तये ।
पात्रेण येन केनापि पयः पानं हि तृप्तिदम् ।
किमधीतै र्महाग्रन्थै रभिमानविवर्धनैः ।
भक्ति र्न मयि चेज्जाता प्रयाता नाप्यहं कृतिः ।

सन्त्येव सर्वोपनिषत् प्रबन्धाः सूत्राणि भाष्याणि तदर्थकानि।
स्त्रीशूद्र बोधाय च बालिशानां ज्ञानाय नानावचनै र्यतस्व।
भाषाप्रबन्धान् भवता प्रणीतान् ये भक्तिवैराग्यविबोधदातॄन् ।
पठेयुरेते कृतिनो भवेयु र्भ्रश्यन्तु विद्वेषकरा नरा य इति ।

गानप्रसङ्गेनात्रापेक्षितं किंचित् पुरस्क्रियते । विष्णुधर्मे भगवदुक्तिः ।

रागेणाकृष्यते चेतो गान्धर्वाभिमुखं यदि ।
मयि बुद्धिं समास्थाय गायेथा मम सत्कथा इति ।

लिङ्गपुराणे ऋषयऊचुः—

कृष्णस्तुष्यति केनेह सर्वदेवेश्वरेश्वरः ।
वक्तु मर्हसि चास्माकं सूत सर्वार्थ विद् भवान् ।

सूत उवाच ।

पुरा पृष्टो महातेजा मार्कण्डेयो महामुनिः ।
अम्बरीषेण विप्रेन्द्रा स्तद्वदामि यथातथम् ।
पुरा त्रेतायुगे कश्चित् कौशिको नाम वै द्विजः ।
वासुदेवपरो नित्यं सामगानरतः सदा ।
भोजनाशनशय्यासु सदा तद्गतमानसः ।
विष्णुस्थलं समासाद्य हरेः क्षेत्रमनुत्तमम् ।
अगायत हरिं तत्र लयतालसमन्वितम् ।

इत्यादिना भगवद् गुणगायकस्य कौशिकस्य तदन्नदातुः पद्माक्षस्य नित्यं तद्गानं शृण्वतां तच्छिष्याणां राजन्यवैश्य

विप्राणां गानविद्याधिकानां वासुदेवपरायणानां तद्गानं शृण्व तो गालवनामकस्य वैश्यस्य सभार्यस्य विष्णुपरायणस्यान्येषां ब्राह्मणानां शृण्वतां स्वगुणगानार्थं कलिङ्गराजेन कृतेऽपि निग्रहे विष्णुगुणव्यतिरिक्तगाननिवृत्तानामेतेषां सर्वेषां कालगतिं गतानाम् ।

चेष्टितः स्वगुणै राजन् ब्रह्मा प्राह च तान् सुरान् ।
कौशिकादीन् द्विजानद्य वासुदेव परायणान् ।
गानयोगेन ये नित्यं पूजयन्ति जनार्द्दनम् ।

ताना ऽऽनयत भद्रं वो यदि देवत्वमिच्छथेत्यादिना विष्णु लोकनयनं भगवदनुग्रहश्च श्रूयते इत्यादि । अम्बरीषं प्रति–

तस्मात्त्वया महाराज विष्णुक्षेत्रे महाभुज ।
अर्चाद्यं गान नृत्यादि वाद्योत्सव समन्वितम् ।
कर्त्तव्यं विष्णु भक्तैर्हि पुरुषैरनिशं नृप ।
श्रोतव्यं च त्वया नित्यं स्तोतव्योऽसौ हरिस्त्वयेति ।
विष्णुस्तोत्रं तथा विद्वान् कारयेद् भक्तिसंयुतः ।
गाननृत्यादिकं चैव विष्ण्वाऽऽख्यानकथां तथा ।
जातिस्मृतिं च मेधां च तथैव परमोन्नतिम् ।
प्राप्नोति विष्णुसालोक्यं सत्यमेतन्नराधिपेति ।

ततोऽप्यग्निसाध्याये कौशिकादीनां गानयोगेन भगवदनुग्रहमवलोक्यानुतप्तो नारदस्तपस्तप्त्वाकाशवाचानियुक्तो ज्ञानबन्धुमुलूकेन्द्रं प्रति गतः। उलूकेन्द्रमाह–शृणु सर्वं यथा तथमित्युपक्रम्य–

यद्दत्तं यद्धुतं चैव यद्वाचा श्रुतमेव च ।
यदधीतं मया सर्वं कलां नार्हति षोड़शीम् ।
विष्णो र्माहात्म्य युक्तस्य ज्ञानयोगस्य वै ततः ।

योगसिद्धिः कलौ नास्ति ज्ञानं भूरिश्रमै रिह ।
मुक्तिदेकैव यद्भक्तिः स मुकुन्दोऽस्मदाश्रयः ।

इत्यादि वचनन्न योगस्य मुक्तिसाधनत्व निरासपम् अपि तु तत्समर्थसाधकालपत्वख्यापनपरमेव । यो हि कलावपि समर्थः स्यात् स तु योगे यतमानस्तदापि कृतार्थो भवेदेवेति ।

एवम्प्राप्ते ब्रूमः—भक्तिः परम्परया मुक्तिसाधनमित्युक्तिर्गीतावचनाद्विप्रतिपद्यते । तत्र हि तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः

---

तथा पाद्मे कार्त्तिक माहात्म्ये—

नाहं वसामि वैकुण्ठे योगिनां हृदये न च ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारदेति ।

संगीत कल्पद्रुमे—

सामवेदरतो ब्रह्मा वीणा सक्ता सरस्वती ।
गोपीपतिरनन्तोऽपि वंशीध्वनि वशं गतः ।
तस्य नादस्य माहात्म्यं के प्रशंसितु मीशिरे ।
धर्मार्थ काममोक्षाणामिदमेवैकसाधनमिति ।

अत्र भगवद्भक्तैर्गानार्थं संस्कृते भजनमेकमुल्लिख्यते । यथा—
सत्यं ज्ञानमनन्तं वन्दे । त्वं मन्मानसमधुकरसर्पयनिजपदपङ्कजमकरन्दे । यदपि समाधिषु विधिरपि पश्यति न तव नखाग्रमरीचिम् । इदमिच्छामि तथापि तवाच्युत कृपार्णवाद्भुतवीचिम् । भक्तिरुदञ्चति यद्यपि माधव न त्वयि मम तिलमात्री । परमेश्वरता तदपि विभो तव दुर्घट घटनविधात्रीति ॥

कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन।
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतइति।
योगिभ्योऽपि भक्तानामाधिक्यकथनात्।
तथा च शाण्डिल्यसूत्रम्–तदेव कर्मिज्ञानियोगिभ्य आधिक्य शब्दादिति (क)।

योग एवोत भक्त्यै कल्पते।
अनेक जन्मसंसार चिते पापसमुच्चये।
तत्क्षीणे जायते पुंसां गोविन्दाभिमुखी मतिः।
जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते।
अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः।

पुरेहभूमन् बहवोऽथ योगिन स्त्वदर्पितेहा गुणकर्मलब्धया। विबुध्यभक्त्यैव कथोपनीतया प्रपेदिरे ऽञ्जो ऽच्युत ते गतिम्परामित्याद्युक्तेः।
यत्तूक्तं भक्तिनिरपेक्षेणापि योगेन यथाभिमत-

---

(क) तदेव भजनं मुख्यं तस्या भक्ते र्वा मुख्यत्वम्। एतत् सर्वथैव निश्चितं यस्मादेवं शब्द्यते तपस्विभ्योऽधिको योगीत्यादि। अत्र विशेषणानां तप आदीनामाधिक्यनिबन्धनं विशेष्याणामाधिक्यं क्रमादिति मन्तव्यम्। न खल्वङ्गस्य मुख्यादाधिक्यमुत्पद्यते। तस्माद्भक्तिः प्रधानमिति।

ध्यानाद्योगी सिध्यतीति; तन्न । भक्तिं विना भगवतोऽपरितोषात् ।

त एव नियमाः साक्षात् त एव च यमोत्तमाः ।
तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः ।
एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः
सर्वतो मन आकृष्य मय्यद्धा ऽऽवेश्यते यथा ।
वैकुण्ठपदसंप्राप्ति र्भक्त्या केवलया हरौ ।
न ज्ञानेन न योगेन भवेज्जन्मशतैरपीति-

वचनेभ्यः । वैकुण्ठपदप्राप्तिरेव मुक्तिरिति स्थापयिष्यमाणत्वाच्च । भगवत्यभक्तानां तु योगादिभिरपि स्वाधीनं कृतं मनः संसारबन्धनसाधनमेवोत जायते ।

युञ्जानाना मभक्तानां प्राणायामादिभि र्मनः ।
अक्षीण वासनं राजन् दृश्यते क्वचिदुत्थितम् ।
इत्युक्तेः ।

ननूक्तमीश्वरप्राणिधानाद्वेति भक्तेर्योगाङ्गत्वमिति । तन्न । गौण्या तु समाधिसिद्धि रिति शाण्डिल्यसूत्रात् । (१९२) ।

---

(१९२) ईश्वरप्रणिधानाद्वेति पातञ्जलयोगसूत्रे प्रणिधानं गौणी भक्तिरेव । न प्रधानम् । तथा च तया गौण्या समाधिसिद्धिरिति ॥

एकाग्रमनसा यो मां ध्यायते हरिमव्ययम् ।
हृत्पङ्कजे स्वमात्मानं स मुक्तो नात्र संशय इत्युक्तेः
रमन्ते योगिनो यस्मिन् स राम इति कीर्त्तित-
इति रामपदनिर्वचनाच्च(क) ।

स एव ध्येयो नान्यो मुक्तये । यथाभिमतध्या-
नाद्वेति तु मुक्तीतरसाध्यसाधनविषयतया नेयम्
जीवात्मज्ञानध्यानादेरप्यस्त्वन्यत्रोपयोगः। कर्त्त-
व्यत्वेन तु भगवद्ध्यानमेव ।

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदेति ।
वचनेन निर्णीय विधीयते ।

अन्यत्रोपयुक्तस्यापि भगवदन्यध्यानस्य न स-
मीचीनत्वम् ।

हरिणा ये विनिर्मुक्तास्ते मुक्ता भवसागरे ।
ये निरुद्धास्त एवात्र मोदमायान्त्यहर्निशम् ।
इत्युक्त्या भगवत् सम्बन्धस्यैव सर्वत्र परिणाम-
रमणीयत्वात् ।

यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते ध्याय-

---

(क) तदुक्तं पाद्मे—
रमन्ते योगिनोऽनन्ते सत्यानन्दचिदात्मनि ।
इति रामपदेनासौ परब्रह्मा भिधीयत इति ।

ति वन्दते ऽजनम् । मुहुः श्वसन्वक्ति हरे जगत्
पते नारायणेत्यात्मगति र्गतत्रप इत्यत्र(१९३) ।

---

( १९३ ) यदा ग्रहग्रस्त इव । न ग्रहग्रस्तः किन्तु श्रीकृष्णचन्द्रग्रहाधीन इति भावः । क्वचिद्धसति क्वचित् सदा स्वतन्त्रमपराजितं भगवन्तं भक्ताधीनमाश्रित्य स्वानामुत्कर्षानन्देन हसति । क्वचित् स्वात्मनो गोचरमाकलय्य भोस्त्रिलोकसुन्दर पाखण्डतमोदिवाकर स्वभक्ताघसंसाराऽसारकर राधिकारमण सधुमथन सच्चिद्घन सर्वमनोमोहन जानकीजीवन दीनबन्धो दयासिन्धो राधिकावल्लभ साधनश्रमदुर्लभ सर्वेश्वर महापराधिनि मयि कृपां कुरु त्वां सुधापारावारमनादृत्यविषयगरलपल्वलोदके मग्नं मां क्लेशभागिनं मीनमिवदीनमुद्धरेत्याक्रन्दते । क्वचिद्ध्यायति । सितासितनीलपीतरक्तद्रव्यगुणेषु चराचरेषु भगवतः स्मितचन्द्रिकावदन रदन केशाङ्गालङ्काराम्बर नेत्रकर पदतल नखानि ध्यायति । यथा इक्ष्वाकुः ।

पक्षयोस्तेन तन्नाम्नि मृगे पद्मे च तद्दृशि ।
बभार मेघवर्णे च बहुमानमतिन्नृपेत्युक्तेः ।

इदमेव ध्यानं सम्मानबहुमानेत्यादि शाण्डिल्यसूत्रे बहुमानशब्देन विवक्षितमिति ज्ञेयम् । तेन ध्यानेनायं भगवान् नीलनीरदसुन्दरः श्रीवल्लभ इति मत्वा सर्वज्ञनं वन्दते तथापि तत्र तत्र भगवत् साक्षात्कारसुखानुभवाभावात्तद्विरहाग्निना दग्धः परमभावाश्रयो भक्तमणिर्मुहुः श्वसन् हे हरे जगत्पते नारायणेति वक्ति । कीदृशः । आत्मगतिरात्मा भगवानेव गतिः शरणं यस्य सः । पुनः कीदृशः । गतत्रपो विवशः । ईदृशोयदा भवति तदाऽधोक्षजं समेतीत्युत्तरश्लोकगतेन पदेनान्वयः ।

पक्षयोरित्यादि पद्यस्यार्थो यथा—इक्ष्वाकु र्नृपस्तेन भा·

अजनमितिच्छेदः । न जायत इत्यजनो विष्णुः। यद्वा जनमित्येव वा अस्तु च्छेदः । तथा च जनं यं कंचन वा भगवद्भावेन वन्दत इत्यन्वयः । आत्मगतिरित्यत्र तु आत्मशब्दो भगवद्वाचक एव । यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धन इत्यत्र गीतासु यज्ञो वै विष्णुरिति श्रुतेर्यज्ञशब्दस्य विष्णुरूपस्यार्थस्यैव । संप्रदायाध्वना ह्यस्यैवार्थस्य परम्परया प्राप्तत्वात् । गतिः शरणम् ।

तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः । निदग्ध बीजानुशयो महीयसा भक्तिप्रयोगेन समेत्यधोक्षजमित्युक्त्या (१९४) । स्वस्मिन्ननीश्वरभावापनोदपूर्वकेश्वर भावानयननिमित्तन्तु स्वात्मध्यानमपि भक्तावुपयुज्यत

---

वेन तस्मिंस्तस्मिन्नर्चनरूपां मतिं बभार । कस्मिन् कस्मिन् । पक्षयोर्मध्ये तस्य कृष्णस्य नाम्नि पक्षे तन्नाम संबन्धात् । यथा कृष्णनाम्नि कृष्णपक्षे । तद्दृशि दृगुपमे पद्मे मृगे च । तद्वर्णे मेघे वर्णोपम इति ॥

(१९४) पुमान् तदाधोक्षजं समेति । कथंभूतः पुमान् मुक्तसमस्तबन्धनः मुक्तानि समस्तानि बन्धनानि माया बन्धनानि यस्य सः । पुनः किंविशिष्टः । महीयसा भक्तिप्रयोगेन निदग्धो नितरां दग्धो बीजानुशयोऽविद्यारूपलिङ्गदेहो यस्य सः । अतस्तद्भाव-

भावानुकृताशयाकृतिः तस्य भगवतो भावश्चेष्टादिस्तस्य भावो भावना तेन भावेन ध्यानेन तदनुकृते आशयानुकृती मनः शरीरे यस्य सः । एतादृशो यदा भवति तदाधोक्षजं समेति ।

अयं भावः—श्रीहरेर्जन्मकर्मगुणलीलारूपा कृति स्मित विलासानां भावनया तत्तदाकारे चेष्टारूपे मनः शरीरे भवत इतीयमेव भावभक्तिरिति । भावरूढानामन्यान्यपि वृत्तानि यथा—विचिक्युरुन्मत्तकवद्धनाद्धन मिति । रुरुदुः सुस्वरं राजन्निति । विक्षिप्तमनसो नृपेति ।

ऋषभदेव चरितेऽपि—जडान्धमूकवधिरपिशाचोन्मादकवदवधूतवेशोऽभि भाष्यमाणोऽपि जनानां गृहीतमौनव्रतस्तूष्णीम्बभूव । जड़भरतोऽपि तथा—तयेत्थमविरतपुरुषचर्यया भगवति परिवर्धमानानुरागभरद्रुतहृदयशैथिल्यः प्रहर्षवेगेनात्मन्यवधीयमानरोमपुलककुलकऔत्कण्ठ्य प्रवृत्तप्रणयवाष्पनिरुद्धावलोकनयन एवं निजरमणा रुणचरणारविन्दानु ध्यानपरिचितभक्तियोगेन परिप्लुतपरमाह्लादगम्भीरहृदयह्रदावगाढ धिषणस्तामपि क्रियमाणां भगवत् सपर्यान्न सस्मारेति । उद्धवः—मुक्तकण्ठो रुरोदहेति । श्रुतदेवोऽपि—धुन्वन्वासो ननर्त्तहेति । अक्रूरोऽपि—तद्दर्शनाह्लादविवृद्धसंभ्रम प्रम्णोर्द्धरोमाश्रुकलाकुलेक्षणः । रथादवस्कद्य सतेष्वचेष्टत प्रभोरमून्यङ्घ्रिरजांस्यहो इतीति ।

एतदादीन्येव भक्तिपरिशुद्धि लिङ्गानीति ज्ञातव्यम् । तथा च शाण्डिल्यसूत्रम्—तत्परि शुद्धिश्च ज्ञेया लोकवल्लिङ्गेभ्य इति । अस्य तत्परिशुद्धिरित्यादि सूत्रस्यार्थो यथा—तत्तस्याभक्तेर्दृढतरसंस्कारलक्षणापरिशुद्धिर्लिङ्गेभ्यो हेतुभूतेभ्यो लिङ्गै रित्यर्थः। तैः सात्त्विकभावाख्यैः स्तम्भस्वेदरोमाञ्चस्वरभङ्गवेपथुवैवर्ण्याश्रुप्रलयैर्ज्ञेया । तत्र दृष्टान्तो लोकवदिति । यथा लोके पुत्रादौ

स्नेहतारतम्यं तत्कथाश्रवणादश्रुपुलकादिभि र्गम्यं तथा भगवत्कथाश्रवणादावपीत्यर्थः । लिङ्गप्रादुर्भावं विना भक्ति र्न हि गम्यते । अन्यान्यपि संमानादीनि लिङ्गानि शाण्डिल्यसूत्रे पठितानि । यथा—संमानबहुमानप्रीतिविरहेतरविचिकित्सा-महिमख्यातितदर्थप्राणस्थानतदीयतासर्वतद्भावाप्रातिकूल्यादीनि च स्मरणेभ्यो बाहुल्यादिति । सम्मानो यथार्जुनस्य ।

प्रत्युत्थानं तु कृष्णस्य सर्वावस्थो धनञ्जयः ।
न लङ्घयति धर्मात्मा भक्त्या प्रेम्णा च सर्वदेति ।

बहुमानं, इक्ष्वाकोरुक्तपूर्वः । बहुमानस्य पराकाष्ठा यथा—

यज्ञेशाच्युत गोविन्द माधवानन्तकेशव ।
कृष्ण विष्णो हृषीकेशेत्याह राजा स केवलम् ।
नान्यज् जगाद मैत्रेय किञ्चित् स्वप्नान्तरेष्वपीति ॥

प्रीति र्यथा विदुरस्य ।

या प्रीतिः पुण्डरीकाक्ष तवागमनकारणात् ।
सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनामिति ।

विरहो यथा गोपीनाम् ।

गुरूणामग्रतो वक्तुं किं ब्रवीमि न नः क्षमम् ।
गुरवः किं करिष्यन्ति दग्धानां विरहाग्निनेति ।

इतर विचिकित्सा यथा श्वेतद्वीपनिवासिनां नारददर्शनेऽपि विघ्नबुद्धिः ।

इमे ह्यऽनिन्द्रियाहारा मद्भक्ताश्चन्द्र वर्चसः ।
एकाग्राश्चिन्तयेयु र्मान् नैषां विघ्नो भवेदिति ।

महिमख्याति र्यथा यमस्य—

नरके पच्यमानस्तु यमेन परिभाषितः ।
किं त्वया नार्चितो देवः केशवः क्लेशनाशन इति ।

तदर्थप्राणस्थिति र्यथा हनूमतः ।

यावत् तव कथा लोके विचरिष्यति पावनी ।

तावत् स्थास्यामि मेदिन्यां तवाज्ञा मनुपालयन्निति ।

तदीयता भावस्तु वसोरुपरिचरस्य—

आत्मा राज्यं धनं चैव कलत्रं वाहनं तथा ।

एतद्भागवतं सर्व मिति तत प्रेक्षते सदेति ।

सर्वभूतेषु तद्भावो यथा प्रह्लादस्य प्रसिद्धः ।

एवं सर्वेषु भूतेषु भक्तिरव्यभिचारिणी ।

कर्त्तव्या पण्डितै र्ज्ञात्वा सर्वभूतमयं हरि मिति

तेनोक्तम् । अप्रातिकूल्यं यथा हन्तु मागतेऽपि भगवति भीष्मस्य । तेनैवोक्तम्—एह्येहि देवेश जगन्निवास नमोऽस्तु ते शार्ङ्गगदासि पाणे । प्रसह्य मां पातय लोकनाथ रथादुदग्राद् भुतशौर्य संख्य इति । आदिपदादुद्धवाक्रूरादि चेष्टितान्युक्त पूर्वाणि द्रष्टव्यानि। एवं पृथुध्रुवाम्बरीष शुकसनकादिभजनाचारा अपि द्रष्टव्याः । अत्र उपमन्युतण्डिदधीचि मार्कण्डेयादीनां शैवानामपि भजनाचारा उदाहार्याः । उपमन्यो र्यथेतरविचिकित्सा—

अपि कीटः पतङ्गो वा भवेयं शङ्कराज्ञया ।

न तु शक्र त्वया दत्तं त्रैलोक्यमपि कामय इति ॥

श्रीमद्भागवते—एवं व्रतः स्वप्रियनामकीर्त्या जनोऽनुरागाद् द्रुतचित्तउच्चैः । हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोक बाह्य इति ।

अस्यार्थः स्पष्टः ।

शृण्वन्सुभद्राणि रथाङ्गपाणे र्जन्मानि कर्माणि च तानि लोके ।
गीतानि नामानि तदर्थकानि गायन् विलज्जो विचरे दसङ्ग इति।

तदर्थकानीति तत्तस्य भगवतो जन्मकर्म एवार्थो येषान्तानि नामानीति । एतेन भाषाकृतगानमपि संगृहीतम् ।

क्वचिद्रुवन्त्यच्युतचिन्तया क्वचिद्धसन्ति नन्दन्ति वदन्त्यलौकिकाः।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं भवन्ति तूष्णीं परमेत्यनिर्वृताइति

अस्य क्वचिद्रुदन्तीत्यादि पद्यस्यार्थो यथा—अच्युतचिन्तया अच्युतवियोगेन क्वचिद्रुदन्ति । किमित्येतावन्तं कालं वृथैवोपेक्षितोऽस्मीति । क्वचिद्भक्ताधीनं मां ज्ञात्वा ऽऽनन्देन हसन्ति । क्वचित् स्फूर्तिगोचरं दृष्ट्वा नृत्यन्ति । क्वचिदानन्देन गायन्ति । नन्दन्ति ॥क्वचिदजं हरिमनुशीलयन्ति । तल्लीलामभिनयन्ति । वदन्ति । एवमलौकिकास्ते परमेश्वरमजं समेत्य प्राप्य निर्वृताः सन्त स्तूष्णीं भवन्तीति।

अपरञ्च—निशम्य कर्माणि गुणानतुल्यान् वीर्याणि लीलातनुभिः कृतानि । यदाति हर्षात्पुलकाश्रुगद्गद प्रोत्कण्ठ उद्गायति रौति नृत्यतीति ।

निशम्येत्यादि पद्यस्यार्थो यथा—लीलातनुभिर्लीलावतारै र्नृसिंह वामन रामकृष्णाद्यवतारैः कृतानि निशम्य यदा हर्षपुलकाश्रुगद्गदं यथास्यात्तथा प्रोत्कण्ठो भगवद्दर्शनोत्कण्ठो भक्त उद्गायति उच्चैर्गायति। क्वचिद्वियोगाद्रौति । क्वचित् स्फूर्त्ति गोचरं भगवन्तं ज्ञात्वा नृत्यत इति ।

स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम् ।
भक्त्या संजातया भक्त्या बिभ्रत्युत् पुलकान्तनुमिति ।

अस्य स्मरन्त इत्यादि पद्यस्यार्थो यथा—अघौघहरं हरिं स्मरन्तः स्मारयन्तश्च भक्त्या साधनभक्त्या जातया फलरूपेण प्रादुर्भूतया भक्त्या परया भक्त्या उत्पुलकां तनुं बिभ्रति । पुलकमित्युपलक्षणं पराया भक्तेर्यल्लक्षणं तद्रोदनादिकं सर्वमित्यर्थः

तत्परिशुद्धिश्चेत्यादि शाण्डिल्यसूत्रे पराभक्तेरपि प्रस्तावप्रसङ्गे-
नात्र तल्लिङ्गमप्युपन्यस्य प्रदर्शितम् ।

यस्या उदाहरणानि पूर्वमुपन्यस्तानि सा भावभक्ति र्निष्ठा रतिपराभावप्रेमाङ्गा मुनिदुर्लभेत्युक्तचतुरङ्गभक्तिमध्ये भावाख्या तृतीयेति ज्ञातव्यम् । एतस्यालाभोपायश्च यथा—

अत्र शास्त्रं तथा कर्म अनुकूलमपेक्ष्यते ।
तद्भावलिप्सुना कार्या व्रजलोकानुसारत इति ।

भक्तिरितिशेषः ।

ततश्च तद्भावप्राप्त्युपायपरि जिज्ञासायां शास्त्रापेक्षा भवे-
च्छास्त्र एव हि तत्प्राप्त्युपाय लेखनान्नान्यत्र । तच्च शास्त्रम् भगवद्भजनप्रतिपादकं श्रीमद्भागवतमेवेत्युक्तपूर्वम् । व्रजलोका-
नुसारत इत्यस्यायं भावः—द्वारकाध्यानादि रुक्मिण्यादि पूजा-
दिकमपि निजभावप्रातिकूल्यादागमादि शास्त्रविहितमपि न कार्यम् । भक्तिमार्गे हि किञ्चिदङ्गवैकल्येऽपि दोषाभाववचना-
दिति । भगवति भावभक्तियुक्तो भुवनम्पुनातीति श्रीमुखेनैव भगवतोद्गीतम् । यथा—

वाग्गद्गदा द्रवते यस्य चित्तं हसत्यभीक्षणं रुदति क्वचिच्च ।
विलज्ज उद्गायति नृत्यते च मद्भक्ति युक्तो भुवनं पुनातीति ।

अस्य वाग्गदगदेत्यादि पद्यस्यार्थो यथा—यस्य भगवत् स्मरणमात्रेण चित्तं द्रवते तेन वाग्गद्गदा च भवति स भक्ति युक्तो भुवनम्पुनाति । देहगेहादिकं पुनातीति किं वक्तव्यम् । उक्तं च पाद्मे ।

कुलं पवित्रं जननी कृतार्था वसुन्धरा भागवती च धन्या ।
स्वर्गेऽपि तेषां पितरश्च तृप्ताः येषां कुले वैष्णवनामधेयमिति

भक्तिमाहात्म्यं तु वाचोऽगोचरमेवेति भावः । त्रिलोक्यामपरा-

जितं स्वतन्त्रं मां भक्तजनाधीनं श्रुत्वा सजातीयानामुत्कर्षा नन्देनाभीक्ष्णं वारं वारं हसति जितं जितमिति। स्फूर्त्तौ सदा सान्निध्यवर्त्यपि मयि प्रेमवैचित्र्यात् क्वचिद्वियोगस्फुरणेन रुदति रोदिति रोदनं करोति। यथा लौकिकप्रेमाणं लौकिकविषयोपाधिभि र्भ्रातृव्यादयो बाधन्ते तथेश्वरप्रेमाणं ते बाधितुं समर्था न भवन्ति यतो भगवद्वियोगदुःखसागरे सर्वाणि सांसारिक दुःखानि सर्वस्पदं हस्तिपदे निमग्नमिति न्यायेन निमज्जन्ति। पुनः क्षणान्तरे ऽन्तः करणे मां दृष्ट्वा नृत्यति विलज्जः सन्नुद्गायति। एतादृशो मद्भक्तो भुवनं ब्रह्माण्डं पुनाति। तदुक्तं नारदसूत्रे। कण्ठावरोधरोमाञ्चाश्रुभिः परस्परं लपमानाः पावयन्ति कुलानि पृथिवीं चेति।

जाग्रद्भगवद्भक्तमाहात्म्यान्यन्यान्यपि वचनानि यथा—

कुलेऽस्माकं पुमान् कश्चिन्नारायण परायणः।
भवेत् कदेति पितरः शान्ता आशासते सदा।
तावद् भ्रमन्ति संसारे पितरो भाण्डतर्पिताः।
यावद्वंशे सुतो रामभक्तियुक्तो न जायते।
आस्फोटयन्ति पितरो नृत्यन्ति च मुहुर्मुहुः।
मद्वंशे वैष्णवो जातः स मे त्राता भविष्यति।
त्रिःसप्तभिः पिता पूतः पितृभिः सह ते ऽनघ।
यत्साधो ऽस्य गृहे जातो भवान् वै कुलपावनः।
यो विष्णुभक्तान्निष्कामान् भोजयेत् सुसमाहितः।
त्रिःसप्तकुलसंयुक्तः स याति हरिमन्दिरम्।
न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः।
सन्मन्त्रोपासकानां च सतां स्नानावगाहनात्।
युष्माकं मोक्षणं पापा दृर्शनात् स्पर्शनात्तथा।

पृथिव्यां यानि तीर्थानि सन्त्यसंख्यानि सुन्दरि ।
भविष्यन्ति च पूतानि मद्भक्तस्पर्शदर्शनात् ।
भ्रमणे सर्वतीर्थानां यत्फलं स्नानतो भवेत् ।
हरिदासस्य विप्रस्य तत्फलं दर्शनाल्लभेत् ।
कृष्णमन्त्रोपासकानां सद्यो दर्शनमात्रतः ।
शतजन्मार्जितात् पापान् मुच्यते नात्र संशयः ।

नाग्निर्न सूर्यो न च चन्द्रतारका न भूर्जलं खं श्वसनोऽथ वाङ्मनः
उपासिता भेदकृतो हरन्त्यघं विपश्चितो घ्नन्ति मुहूर्त्तसेवया ।

दर्शनं वैष्णवानां च देवा वाञ्छन्ति नित्यशः ।
न वैष्णवात्परः पूतो विश्वेषु निखिलेषु च ।
मद्भक्ता यत्र तिष्ठन्ति पादं प्रक्षालयन्ति च ।
तत्स्थानं तु महातीर्थं सुपवित्रं भवेद् ध्रुवम् ।
भ्रमन्ति भारते भक्ता लब्ध्वा जन्म सुदुर्लभम् ।
मद्गुणश्रवणश्लाघ्य गानैर्नित्यं मुदाञ्चिताः ।
ते यान्ति च महीं पूत्वा नराः शीघ्रम्ममालयम् ।
आराधनानां सर्वेषां विष्णोराराधनं परम् ।
तस्मात्परतरं देवि तदीयानां समर्चनमिति ।

भगवद्भक्तानां वासोऽन्नदानादिना सेवनानुकूलतया वर्त्तमानाः कृतिनो जना ऊर्ध्वमारोहन्ति तान्द्विषन्तस्त्वधः पतन्तीत्याह श्रुतिर्यथा—तस्य पुत्रादायमुपयन्ति सुहृदः साधुकृत्यांद्विषन्तः पापकृत्यामिति । स्वभक्तानां पाण्डवानां सम्बन्धे स्वयमाह श्रीमुखेन—

यस्तान् द्वेष्टि स मां द्वेष्टि यस्ताननु स मामनु ।
ऐकात्म्यं मां गतं विद्धि पाण्डवै धर्मचारिभिरिति ॥

एव। अहं ब्रह्मास्मि तत्त्वमसीत्यादि श्रुतिभ्यः (१९५)।

भगवद् ध्यानं च रत्याख्यभक्तिविबोधार्थमिति बोध्यम्। ध्यानेष्टरूपगोचरत्वं हि रतेर्लक्षणम्। तया च भगवत् प्राप्तिः।
स्मरतः पादकमलमात्मानमपि यच्छतीत्युक्तेः।
अस्तु भक्त्यङ्गमेव योगस्तथापि स तत्साधनत्वेनानुष्ठेय एवेति चेदत्रोच्यते। योगे महानायासो न हि स सुकरः। गीतासु—
एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमा—
इत्यर्जुन प्रश्ने—
मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः।
ये त्वक्षरमनिर्देश्यं कूटस्थ मचलं ध्रुवम्।
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः।

---

(१९५) भावारूढभक्तभावप्रकाशनपरे इमे श्रुती; न तु जीवस्य सर्वांशेन परमात्मप्रतिपादनपरे इति ज्ञेयम्। भावारूढ एव वामदेवः अहं मनुरभवमित्याद्युक्तवान्। न तु ब्रह्माभेददृष्ट्येति। तथा श्रीमद्भागवते—

कृष्णोऽहं पश्यतगतिं ललितामिति तन्मना इत्यादि।

क्लेशोऽधिकतरस्तेषा मव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यत इति भगवत् प्रतिवचनात् ( १९६ ) ।

यमादिभिर्योगपथैः कामलोभहतो मुहुः ।
मुकुन्दसेवया यद्वत् तथात्माद्धा न शाम्यतीति ।

( १९७ ) योगपथानां साफल्यस्य संशयग्रस्तत्वाद्भक्तिपथस्य न मद्भक्तः प्रणश्यतीति श्रेयस्करत्वध्रौव्याच्चेति ।

ननु योगस्यासाधने संसारो भक्तं बाधेतेति चेन्न ।
हरिध्यान पराणां च कः समर्थः प्रबाधितुम् ।
हरिभक्ति परो यत्र तत्र ब्रह्मा हरिः शिवः ॥
तत्र देवाश्च सिद्धाश्च नित्यं तिष्ठन्ति सत्तमा इत्याप्युक्तेः ।

---

( १९६ ) अत्र क्लेशोऽधिकतरस्तेषामव्यक्ता हि गतिर्दुःखं यथा तथा देहवद्भि रवाप्यत इति वदता भक्तधनेन दयानिधिना भक्तक्लेशासहिष्णुत्वं स्वस्य सूचयता भगवतैव तावद्व्यक्तोपासन मन्तत इदानीमननुमतम् । एतादृशकरुणा समुद्रः स्वामी को नामान्योऽस्ति यत्र जनो विमुह्यति । अहो मोहमहिमा यदेतादृशं दयासुधानिधि मनादृत्य विषयगरलपल्वलोदके मज्जन्तीति ॥

( १९७ ) मुकुं मुक्तिन्ददातीति मुकुन्दः । मुञ्चति मोचयतीति मुकुन्द इत्यन्ये । मुञ्चते रौणादिक डुकुन्द प्रत्यञ्चेच्छन्ति ते । मुकुन्दस्य सेवया यद्वद्यथा आत्मा मनः अद्धा साक्षाद्धा-

तन्नः समादिशोपायं येन ते चरणाब्जयोः ।
स्मृति र्यथा न विरमेदपि संसरतामिहेति
प्रार्थनावचनोत्तरे भक्तेरेव निगमनीयत्वात् ।
भगवच्चरणस्मरणे सति घोरसंसारो ऽपि भगवत्
प्राप्तिं प्रत्यन्तरायो न भवति प्रत्युतोपकारक
एवेति तदाशयाच्च । ततः प्रत्यक् चेतनाधिग-
मोऽप्यन्तराया ऽभावश्चेति सूत्रे पतञ्जलेरप्ययमे-
वार्थोऽभिप्रेतः ।

शय्यासनाटनालाप क्रीड़ा स्नानाशनादिषु ।
न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतस-
इत्यादौ व्यक्तमेव च तत् (१९८) ।

---

म्यति सेवासुखोदयाद्भगवन्निष्ठो भवति । शमो मन्निष्ठता बुद्धे रिति भगवदुक्तेः । तथा मुहुः कामलोभहत आत्मा योगपथै- र्न शाम्यति । तद्वृत्तिनिरोधात् । कीदृशै र्योगपथै र्यमादिभि- र्यमनियमासनप्राणायामप्रत्याहार धारणाध्यानसमाधिभिरष्टा- ङ्गैरविकलैरित्यर्थः । अतस्तत्तेषामप्रयोजनमिति ॥

( १९८ ) तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोग इति पातञ्जल योग सूत्रोक्तः क्रियायोगोऽत्र विवक्षितः । तत्र व्यासपादभाष्यं यथा—अनादिकर्मक्लेशवासनाविषयप्रत्युपस्थित विषयजाला चाशुद्धिर्नान्तरेण तपः सम्भेदमापद्यत इति तपस उपादानम् । तच्च चित्तप्रसादमबाधमानमनेनासेव्यमिति मन्यते । स्वाध्यायः प्रणवादि पवित्राणां जपो मोक्षशास्त्राध्य- यनं वा । ईश्वरप्रणिधानं सर्वक्रियाणां परमगुरावर्पणान्तत्फल-

संन्यासी वेति । एव मुक्तविधं भक्तं मनस्याभिसन्धायैव व्यासपादेनोक्तं नियमयोगसूत्रभाष्ये—शय्यासनस्थो ऽथ पथि व्रजन्वा स्वस्थः परिक्षीणवितर्कजालः । संसारबीजक्षयमीक्षमाणः स्यान्नित्यमुक्तो ऽमृतभोगभागीति । तच्चित्तप्रसादमबाधमानमित्यस्य वाचस्पतिविवरणं यथा—तावन् मात्रमेव तपश्चरणीयं न यावता धातु वैषम्यमापद्यत इति । बृहन्नारदीये—

कर्मणा मनसा वाचा सर्वलोकहितेरतः ।
समर्चयति देवेशं क्रियायोगः स उच्यते ।
नारायणं जगद्योनिं सर्वान्तर्यामिणं हरिम् ।
स्तोत्राद्यैः पूजयेद्यस्तु क्रियायोगः स उच्यते ।
उपवासादिभिश्चैव पुराणश्रवणादिभिः ।
पुष्पाद्यैः पूजनं विष्णोः क्रियायोग इति स्मृतः ।
तस्मात्सर्वात्मकं विष्णुं शमादिगुणतत्परः ।
मुक्त्यर्थं मर्चयेत् सम्यक् क्रियायोगपरो नर इति ॥

क्रियायोगलक्षणमुक्तम् । क्रियायोगफलं चैव तत्रोक्तम् । यथा

एवं भक्तिमतां पुंसां क्रियायोगरतात्मनाम् ।
सर्वपापानि नश्यन्ति पूर्वजन्मार्जितानि वै ।
पापक्षयाच्छुद्धमति र्वाञ्छति ज्ञानमुत्तमम् ।

ज्ञानं हि मोक्षदं ज्ञेय मित्यादिना ।

क्रियायोगाभावे प्रत्युत विघ्न संभवः ।
दोग्ध्री धेनु र्यथा नीता दुःखदा गृहमेधिनाम् ।
तथैव ज्ञानवान् विप्रो देवानां दुःखदो भवेत् ।
त्रिदशास्तेन विघ्नन्ति प्रविष्टा विष्टपन्नृणाम् ।

इति शिवगीतोक्तेः ।

यद्वा नवधाभक्तिरेव क्रियायोगः । अन्यत्रापि नवधाभक्तिमान्स्तुतो यथा—

न मे ध्यानरताः सम्यग्योगिनः परितुष्टये ।
तथा भवन्ति देवर्षे क्रियायोगरता यथेति ।
योगिनमनादृत्य क्रियायोगं च प्रशस्य ।
येन केनाप्युपायेन स्मृतो नारायणोऽव्ययः ।
अपि पातकयुक्तस्य प्रसन्नः स्यान्न संशय इति
भक्तेरद्भुतप्रभावोक्तेर्भगवत् परितोषहेतोर्भक्ते
रेवोत्कर्षाच्च भक्तिरेव ज्यायसीति सिध्यति ।
शृण्वतां गदतां शश्वदर्चतान्त्वाऽभिवन्दताम् ।
नृणां संवदतामन्त र्हृदि भास्यमलात्मना मिति
वचनाद्भजनेनानायासेनैव हृदये भगवद्ध्यान-
स्फूर्तेः संपाद्यत्वाच्च कृतं कष्टमयेनाष्टाङ्गयोगे
नेति । अत एव श्रुत्योक्तम् । यथा-भक्तिरेवैनं
नयति भक्तिरेवैनं पश्यति भक्तिरेवैनं दर्शयति ।
भक्तिवशः पुरुषो भक्तिरेव भूयसीति (१९९) ।

---

यशः शृण्वन् गायन् स्मृति पथमदो (रूपं) यन्नविरतं
हरेः सेवां कुर्वन् सरस कुसुमाद्यैरभियजन् ।
नमन् पादौ दास्यं मनसि गमयन् सख्य मथवा
स्वमात्मानं यच्छञ्जयति सुतरां कोऽपि सुकृतीति ।

अन्यच्च-ध्यायन्सादरमानसेन सुयशो गायंस्तवास्मि
ब्रुवन् पश्यन्नादृतया दृशा हितवचः शृण्वन्ननन्सादरम् । सत्
कृत्याहितमाचरन्न भजतां सङ्गं त्यजन् दूरतः स्वेशं स्वेशपराय-
णश्च सततं धन्यो नरः सेवत इति ॥

(१९९) एनं परमात्मानं भक्तिरेव स्वाधारं भक्तं प्रति

तच्छ्रद्दधाना मुनयो ज्ञानवैराग्य युक्तया ।
पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतयेति
श्रीमद्भागवतपद्येनापि समर्थितः स एवार्थः २००

भक्त्या भक्तहृदयं गतो भगवान् पुनस्ततो न कदाप्यपसरतीति महांल्लाभ इति । तथा चोक्तम्—

येतु त्वदीयचरणाम्बुज कोशगन्धं जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् । भक्त्या गृहीत चरणः परया च तेषां नापैषि नाथ हृदयांबुरुहात् स्वपुंसामिति ।

अत्र भक्त्या गृहीतचरणेत्यनेन न कर्म ज्ञानयोगादिकं नाहृतं किन्तु साक्षाद् भक्त्या श्रवण

नयति प्रापयति । एवकारान्नज्ञानमित्यर्थः । भक्तिरेवैनं पश्यति न योगः । भक्तिरेवैनं दर्शयति न कर्म विरागादयः । अत्र एवकारस्य त्रिरावृत्त्या कर्मयोगवैराग्यज्ञानादिभिरितरैर्भक्तिनिरपेक्षैः साधनैर्न नयनादि साध्यते । भक्तिस्तु तन्निरपेक्षापि नयनादि साधयत्येवेति स्पष्टमिति ॥

( २०० ) भक्त्या तत्कथादि रुचेरेव परा काष्ठा । ज्ञानवैराग्ययुक्तयेति स्वात्मजाभ्यां ज्ञानवैराग्याभ्यां सेवितयेत्यर्थः । तस्माद्भक्तिर्निरपेक्षा स्वसाध्यसाधने । ज्ञानवैराग्ये तु भक्तिसापेक्षे इति लभ्यते । सन्तु संसरतः पुंसो बहवो मोक्षमार्गा स्तपो योगादयः । समीचीनस्त्वयमेव भक्तियोगः सिद्धान्त इति ।

कीर्त्तनादि रूपयैव गृहीतचरणेत्यभिप्रेतमुक्तम् ।
भगवति निश्चलचित्तस्य च मुक्तिलाभो ध्रुवः ।
यथा ते निश्चलं चेतो मयि भक्तिसमन्वितम् ।
तथा त्वं मत्प्रसादेन निर्वाणं पदमाप्स्यसीत्युक्तेः।

अत्र मत्प्रसादेनेत्यस्यायं भावः-यद्यपि न परिलषन्ति केचिदपवर्गमपीति मोक्षकामनाया अभावान्न मोक्षः संभवति किन्तु भगवत् प्रेमैव स्वतः । परमपुरुषार्थ रूपम् । भक्तेः पञ्चमपुरुषार्थ रूपत्वात् ।

अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसीत्युक्तेः तथापि परमकारुणिको भगवान् स्वयमेव प्रसाद्य द्रवीभूतहृदयः स्वभक्तानां संसारदुःखासहिष्णुत्वेन संसारदुःखनिवृत्तिलक्षणं मोक्षं प्रयच्छति । जीवस्य मोक्षप्राप्तिस्तु केवलन्तदनुग्रहादित्युक्तेः। अयंभावः-यथा केवलमित्रादि भावेनाध्यासेवितो राजा तदीय दुःखासहिष्णुस्तस्मै धनादिकं ददात्येव तद्वद् भक्त्यैव सर्वं सेत्स्यतीति । चित्त वृत्तिनिरोधो योग इति तु योगिनां परिभाषैव । वस्तुतस्तु भगवदेकपरत्वमेव योगः सन्न्यासश्चेति वेदविद्भिर्व्याख्यातत्वात् तदेव योगलक्षणम् मुख्यम् । जीवन्मुक्तलक्षणं च ।

वासुदेवं परात्मान मुपासकभवच्छिदम् ।
सर्वात्मना प्रपन्नो यः स जीवन्मुक्त उच्यत इति विष्णुपुराणोक्तमेवेति दिक् ।

समाधिपर्यन्तादपि स्मरणात् कैमुत्येन कीर्त्तनस्यैव गरीयस्त्वं श्रीविष्णुपुराणे दर्शितम् । यथा—

अविच्छिन्न स्मरणं विष्णोर्बह्वायासेन साध्यते ।
ओष्ठस्पन्दनमात्रेण कीर्त्तनन्तु ततो वरमिति ॥

भगवद्भक्त्या अनायासेन योगफललाभे प्रमाणं च यथाग्निपुराणे—

पूजितं पूज्यमानं वा यः पश्येद्भक्तितो हरिम् ।
श्रद्धया मोदयेद्यस्तु सोऽपि योगफलं लभेदिति ।
न चार्थवादोऽयम् । पुराणानामर्थवादोक्तेः ।
पुराणेषु द्विजश्रेष्ठाः सर्वधर्मप्रवक्तृषु ।
प्रवदन्त्यर्थवादत्वं ये ते नरकभागिन इति ।

दोषोक्तेः । योगो भक्त्यङ्गमित्यत्रान्ये प्रत्यवतिष्ठन्ते; आरुण्यन्यायेन योगस्य भक्तेश्चोभयोरपि साक्षाज्ज्ञानाङ्गत्वात् ।

तद् बुद्धय स्तदात्मान स्तन्निष्ठा स्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषा इति श्री भगवदुक्तेः ।

अत्र तद्बुद्धय इत्यादिना योगस्तन्निष्ठा इत्यादिना च भक्तिरेवाभिसंहिता। ताभ्यां जातेन ज्ञानेना ऽज्ञानरूपकल्मषनाशे अपुनरावृत्तिलक्षणो मोक्षः सिध्यतीति श्लोकार्थ इति चेन्नेत्युच्यते।

अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि च शं तनोति। सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं सविज्ञानविरागयुक्तम्।

इत्यत्राविस्मृतिलक्षणस्य योगस्य सत्त्वशुद्धिद्वारा भक्त्यामुपयोगोक्तेर्न योगो भक्तिसमः। परमात्मनि कृष्णे प्रेमलक्षणां भक्तिन्तनोतीति मुख्यं फलमन्यानि त्वानुषङ्गिकाणीति।

ननु ऋते ज्ञानान्न मुक्तिः। तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय। ज्ञानादेव हि कैवल्यमिति वेदान्तडिण्डिम इत्यादि श्रुति स्मृतिभि(२०१) र्मुक्तिसिद्धये ज्ञानमेव प्रधानं साधनन्नभक्तिः।

---

(२०१) निचाय्य तं मृत्यु मुखात् प्रमुच्यते इति। इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदीर्महती विनष्टिः। य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्तीत्यादयश्च श्रुतयोऽत्रानुसंधेयाः। इहैव सन्त इत्यादि श्रुत्या अर्थो यथा—वयमिहैव सन्तस्तद्विद्मो जानीमस्त्वं चेद्यदि नावेदीरात्मतत्त्वं न विदितवांस्तर्हि तव महती विनष्टिर्हानि जंन्समरणादिरूपा महती

युक्तियुक्तं चैतत् तत्त्वाज्ञानेन हि संसृतिः । सा च तत्त्वज्ञानादेव निवर्त्तेत । निमित्तापाये नैमित्तिकापायात् दिति न्यायात् । अज्ञानात् संसृतिरित्यत्र प्रमाणं च यथा—

अज्ञानसंज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् । अजस्रचित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनीति (२०२) ।

आत्मान मेवात्मतया विजानतां तेनैव जातं

---

संसृतिः स्यात् । कुतः ये तद्विदुस्ते अमृता जन्ममरणादि दुःखाद्विमुक्ताः परमानन्द रूपा भवन्ति । इतरे अज्ञा दुःखमेवापियन्ति प्राप्नुवन्तीति ।

( २०२ ) तस्मिन्नात्मनि विचार्यमाणे सति भवबन्धमोक्षौ द्वौ नामेति प्रसिद्धावज्ञानसंज्ञौ अज्ञानेन संज्ञा ययोस्तौ अतो ज्ञानाज्ञाने मूलाज्ञानस्याङ्गे; विद्याविद्ययोर्मायाङ्गत्वात् । यत ऋतज्ञभावादन्यौ न स्तः । ऋतश्चा ऽसौ ज्ञश्च ऋतज्ञ आत्मा । तस्य भावो धर्मः सत्ता । तस्माद्भावादन्यौ न स्तः । तस्यैवाज्ञानाद् बन्धमोक्षरूपे अज्ञानज्ञानात्मके भवतः । कस्मिन्विचार्यमाणे अजस्रचिति अखण्डचैतन्यात्मके । पुनः केवले अभेदज्ञानघने यत आत्मनि व्यापके । तत्र यथानुरूपं निदर्शनम् । तरणौ रवौ रात्र्यहनी इव । अयं भावः । सूर्यमण्डलदर्शनादर्शनाभ्यां रात्र्यहनी । तन्मण्डले तु न रात्रिर्न दिवा । नित्यप्रकाशरूपत्वात । तद्वदात्मदर्शनादर्शनाभ्यां बन्धमोक्षौ । तस्मिन्नज्ञानाभावेन नित्यमुक्तत्वान्न बन्धो न मोक्ष इति ॥

निखिलं प्रपञ्चितम् । ज्ञानेन भूयोऽपि च तत्प्रलीयते रज्ज्वामहे र्भोगभवाभवौ यथेति(२०३) ।

ननु ज्ञानेन संसृतिनिवृत्तिमात्र न्न तु मुक्तिरपि परमानन्दाऽवाप्तिलक्षणो मोक्ष इति मुक्तिलक्षण समय इति नैष दोषः। जीवोऽध्यासादऽनादि संसारदुःखेन संबध्यते । तत इदं लभ्यते तत्त्वसाक्षात्कारलक्षणेन ज्ञानेनाऽध्यासलक्षणा ऽज्ञाननिवृत्तौ स्वस्वरूपावाप्ति र्मोक्ष इति ।

मुक्ति र्हित्वा ऽत्मनो रूपं स्वरूपेण व्यवस्थिति रित्युक्तेः । तच्चात्मतत्त्वं सच्चिदानन्दमिति न समयविरोधः ।

आत्मानं चेद्विजानीयादय मस्मीति पूरुषः ।

---

(२०३) आत्मानं स्वात्मानमात्मतया चिन्मात्रया निर्विशेषाद्वैततया ऽविजानतां पुंसान्तेनैवाज्ञानेन निखिलं प्रपञ्चितं देहादिकं सर्वं विश्वं जातं भूयोऽपि पुनरपि तदात्मज्ञानेन तत्तस्मिन्नात्मनि प्रलीयते । प्र शब्दात् पुनः संसारो न भवति। यथा रज्ज्वामहेर्भोगभवाभवौ । अयं भावः—रज्ज्वज्ञाने तस्यां सर्पदेहस्य भवस्तज्ज्ञाने तस्यां तस्य लयः । ननु रज्ज्वज्ञानं तज्ज्ञानं च ते उभे किं नित्ये न हि न हि । ज्ञानाज्ञाने द्वे अप्यज्ञानकल्पिते इति । तदेवोक्तम ऽज्ञानसंज्ञौ भवबन्धमोक्षावित्यादि ॥

किमर्थं कस्य कामाय शरीरमनु संज्वरेदिति ।
श्रुतेः (२०४) ।

एतदेव हृदि कृत्वा श्रुतिराह-आत्मलाभान्न परं विद्यत इति ।

यदोदेति परं ज्ञानं तदैव द्विजपुङ्गव ।
क्लेशाः सर्वे प्रणश्यन्ति सुखं चोत्पद्यते महदिति

शातातपस्मृतिश्च । तच्च ज्ञानमेकात्मदर्शनलक्षणम् ।

शब्दमायावृतो यावत् तावत् तिष्ठतु पुष्करे ।
भिन्ने तमसि चैकत्व मेकमेवानुपश्यतीत्युक्तेः(२०५)

---

( २०४ ) सच्चिदानन्द आत्मा देहादिव्यतिरिक्तोऽयमहमस्मीत्यात्मानं चेद्यदि पुरुषो जीवो विजानीयात्तर्हि किमिच्छन् किमात्मातिरिक्तं वस्त्वन्तरमस्ति तदिच्छन् कस्य कामाय शरीरमनु संज्वरेत् । शरीरोपाधिकृतसुखदुःखरागद्वेषभयाभिमानादिभिः संतप्तो भवेत् स्वार्थाद् भ्रश्येदित्यर्थ इति ॥

( २०५ ) सन्माया मोहितधियः पुरुषाः पुरुषर्षभ ।
श्रेयो वदन्त्यनेकान्तं यथा कर्म यथा रुचीत्युक्तेर्नानामतप्रतिपादिका या शब्दमाया तया यावदावृतो जीवस्तावत् पुष्करे बन्धने तिष्ठतु । तद्रूपे तमसि भिन्ने तद्विनाशे सतीत्यर्थः । स एव मुक्तः सन् विश्वस्यैकत्त्व मनु वारं वारं पश्यतीति ॥

तस्य लाभः श्रवणात्। यस्य पुरुषस्य निष्कामकर्मानुष्ठानादिभिः शमादिभिश्च चित्तं शुद्धं तस्य श्रवणादेव दशमस्त्वमसीति वाक्यश्रवणात् सद्यः खेदनिवृत्तिसंवलितानन्दलाभ इव साक्षादात्मलाभाज्जीवन् मुक्तिः। विस्मृतकण्ठचामीकरचेतयितृवचनादिव वा । स्वात्मनोऽभिन्नत्वाच्च न शब्दादपरोक्षज्ञानासंभवः। यस्य पुरुषस्य केनापि प्रतिबन्धेन श्रवणेन परोक्षमेव ज्ञानं जातन्न तु विज्ञानम्। तथापि तेनाप्रामाण्यशङ्का तु विगलिता । तस्य आत्मा साक्षी कर्त्ता वा। साक्षित्वेऽपि स बुद्ध्या वेदितुं शक्यते न वा। शक्यत्वेऽपि तद्वेदनमात्रेण मुक्तिर्भवति न वेत्यादि संशयात्मकासंभावना निवृत्तये मननमावश्यकम्।

मननं विना ह्युपदेशश्रवणेऽपि फलालाभात्। तदुक्तं सांख्यसूत्रेनोपदेशश्रवणेऽपि कृतकृत्यः। परामर्शादृते विरोचनवदिति (२०६)।

---

(२०६) विरोचनो ह्युपदेशं श्रुत्वैव गृहं गतो न मननादि कृतवान्। अतो नामुच्यत। इन्द्रस्तु मननादिकं कृतवानतो ऽमुच्यतैवेति छान्दोग्योपनिषदि सप्तमप्रपाठके द्रष्टव्यम् ॥

मननेन निश्चितमपि क्वचिद्विक्षेपादिभिस्तत्त्वज्ञानम्प्रतिबद्धं भवति। तेन च पुनर्दुःखमनुवर्त्तते। तथा च नारदसूत्रम्।

तत्त्वविस्मरणे भेकीवदिति (२०७)।

अतो निदिध्यासनात्मको योगः कर्त्तव्यः। यस्य सकृच्छ्रवणादिना न कृतार्थता तेन ज्ञानोत्पत्तिं यावद् ऽसकृच्छ्रवणमनननिदिध्यासनानि कर्त्तव्यान्येव। तथा च सांख्यसूत्रम्—

आवृत्तिरसकृदुपदेशादिति (२०८)।

---

(२०७) कश्चित् नृपो मृगयां गतो वने सुन्दरीं कन्यामपश्यत्। स तामपृच्छत्। का त्वमिति। सा प्राह तम्—राजदुहिताहमिति। राजा ताम्प्राह—मां भजस्वेति। सा प्राह—बाढम्। किन्तु समयं कुरु। त्वया जलं मम न दर्शनीयमिति। एवमस्त्वित्युक्त्वा तस्याः पाणिं जग्राह राजा। एवं गते काले क्रीडया पिपासिता कुत्र जलमिति राजानं पप्रच्छ राज्ञी। राजापि संभ्रमात् समयं विस्मृत्य जलमदर्शयत्। सा च भेकराजदुहिता जलस्पर्शात् पुनर्भेकी बभूव। राजापि जालादिना जले तामन्विष्याप्राप्य बहुदुःखमनुबभूव। तस्मात् सुधिया तत्त्वविस्मरणन्न कार्यमिति॥

(२०८) तीव्रवैराग्याणां तत्त्वश्रवणमात्रान् मोक्षो भवति. मन्दवैराग्याणां निरन्तरमुपदेशावृत्तिः श्रवणावृत्तिः करणीया। उपदेश उपलक्षणम्। श्रवणाद्यावृत्तिः कर्त्तव्येत्याशयः। अतस्त-

तथा च निदिध्यासनेन देहात्मभ्रान्तिरूपविपरीतज्ञानापनोदः । यदि त्वेकस्मिञ्जन्मनि आवृत्तिभिरपि न सिद्धिस्तदा जन्मान्तरे सेत्स्यतीति। यथोक्तं सांख्यसूत्रे-न कालनियमो वामदेववदिति (२०९) ।

यस्याभ्यासवैराग्यादिभिरेव योगः सिध्येत् ।

---

दङ्गानि शान्ति दान्तिप्रभृतीन्यप्यभ्यसनीयानि । प्रमादादिना नोपेक्षणीयानि ।

नाविरतो दुश्चरितान्नाशान्तो ना समाहितः ।
नाशान्त मानसो वापि प्रज्ञानेनैन माप्नुयादिति,

शान्तो दान्त उपरत स्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येदित्यादि श्रुतिबोधितानां ज्ञानाद्यङ्गानामप्यसकृदावृत्तिः कार्येत्यर्थः । न तु सकृत्कृते कृतः शास्त्रार्थ इति न्यायेन सकृदेव श्रवणमननादि कृत्वा तेभ्यो विरन्तव्यमिति । यद्यप्यात्मप्रमा श्रुति त एव भवति न तत्र साधनान्तरापेक्षा तथाप्यप्रामाण्यशङ्का संभावनाविपरीतभावनाविषयवासनाभिः कलुषीकृता सा न फलाय कल्पत इति । आवृत्तिरसकृदुपदेशादिति सूत्रवेदान्तसूत्रेष्वपि अस्ति ॥

( २०९ ) ऐहिकसाधनादेव सिद्धिर्भवतीत्यादि । ज्ञानोदये कालनियमो नास्ति । वामदेववत् । वामदेवस्य जन्मान्तरीयसाधनेभ्यो गर्भेऽपि यथा ज्ञानोदयस्तथान्यस्यापीत्यर्थः । तथा च श्रुतिः—तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति ॥

तस्य न भजनापेक्षा । यस्य तु भक्तिवासनास्यात् स भक्त्या ज्ञानं संपादयतान्नाम । भवति चात्र निगमः-

यस्य देवे परा भक्ति र्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इति ।

तथा चानाद्यज्ञानपाशनिबद्धो जीवः कथंचित् प्राक्तनानेक शुभादृष्टबलाद्विविदिषया सद्गुर्वाश्रयणेन तस्मिन्नीशत्वबुध्या तद्भजनेन तत्कृपया स्वस्य साक्षात्कारं लभेत । तेन चाज्ञानपाशनिवृत्तिरत आत्मसाक्षात्कारोत्तरं कृतं भक्त्येति ॥

एव मात्मज्ञानमात्रेण मुक्तिपूर्वपक्ष उत्थापिते ब्रूमहे । न केवलमात्मज्ञानमात्रेण मुक्ति, रपि तु आत्मज्ञानोत्तरमपि भक्तिरनुवर्त्तयितव्यैव ।

नवाऽवस्था हि देहस्य तद्भिन्नं च विलक्षणम् ।
ज्ञात्वात्मरूपमात्मानं कर्त्तव्या रतिरात्मनि ।
ज्ञात्वा ज्ञात्वाथ ये वै मां यावान्यश्चास्मि यादृशः ।
भजन्त्यनन्यभावेनते मे भक्ततमा मता इत्याद्युक्तेः ।

आत्मसाक्षात्कारोत्तरं भक्तिर्नानुवर्त्तनीयेति त्वसिद्धम् ।

समाश्रिता ये पदपल्लवप्लवं, महत् पदं पुण्ययशो

मुरारेः । भवाम्बुधिर्वत्सपदं परं पदं पदं पदं यद्विपदां न तेषामिति ब्रह्मोक्तेः (२१०)।

योगज्ञानवैराग्यसंवलिता भक्तिः क्षेमाय कल्पते; यत उक्तम् ।

ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ।
क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयमिति २११

यद्यपि भगवतो ह्यभजने ब्राह्मणब्रह्मचारि गृहस्थादयः सर्वे नित्यं संसारित्वेन जीवसामान्येन दुरन्तसंसारसन्तापसन्तप्ताः स्युरेव। मृत्वा पुनर्मृत्युमापद्यन्ते अद्यमानाः स्वकर्मभिराशार्तिकाः क्रिमय इवेति श्रुतेः तथापि भगवद्भजनमकुर्वन् यतिस्तु कुक्षिम्भरिरुभयाश्रमधर्म विदूषकत्वेन भ्रष्टत्वान्नरकेषु पच्यते । हर्यभक्तः पतत्यध इत्युक्तेः। एतेन त्यागेनैकेनामृतत्वमानशुरिति श्रुत्युक्तस्त्यागोऽपि भगवद्भक्तियुक्तः सन्न्यासो न

---

(२१०) ननु समुद्रपारे सति प्लवरूपानादरो दृष्टस्तथा मुक्तेरुत्तरं हरेः पदस्य किम् । नेत्याह शुकः । समाश्रिता य इति पदपल्लवाश्रयमात्रेण स एव पारभूतः परमसेव्यो भवतीति भावः ॥

(२११) योगिनोऽत्र भगवद्भक्ताः सर्वेऽपि न तु यतय एवेत्याग्रहः कार्यः । मानाभावात् ।

तु शुष्कज्ञान्यभिमतः स इति व्यक्तम् । यदा ज्ञानलाभोत्तरमपि भगवद्भक्तिरनुवर्त्तनीयेति सिध्यति तदा किमु वाच्यं ज्ञानात् पूर्वमपि सा कर्त्तव्येति ।

श्रेयः सृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये । तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनाम् (२१२) ।

येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः । आरुह्य कृच्छ्रेण परं पदं ततः

---

(२१२) हे विभो अपरिच्छिन्न ते तव भक्तिमुदस्य त्यक्त्वा ये केवलबोधलब्धये कैवल्यात्मज्ञानलाभाय क्लिश्यन्ति क्लेशं कुर्वन्ति यतमानास्तेषां जनाना मऽसौ बोधः । क्लेशल एव शिष्यते क्लेशलपदमात्रोऽवशिष्टो भवति । कीदृशीम्भक्तिम् । श्रेयस्सृतिम् श्रेयसां परममङ्गलानां मोक्षादीनां सृतिः प्रवाहो यस्याः सकाशात् सा ताम् । श्रेयसाम्मार्गभूतामिति वा । ननु तथाप्यद्वैतज्ञानश्रमे स्वर्गादिसमकक्षसुखं स्यादेवेति चेत्तत्राह । नान्यदिति । न स्वर्गादिसमकक्षसुखमपि स्यात् । तत्र दृष्टान्तः । यथा स्थूलतुषावघातिनामिति । स्थूलतुषावघातिनां यथा श्रम मात्रमेव भवति । नान्यत्तद्वद्भक्तिहीनानामपीत्यर्थः । कणशून्यं धान्यबीजं तुषः । सकणाल्पप्रमाणधान्यावघाते कियानपि लाभोऽस्त्येव न तु स्थूलतुषावघात इति स्थूलपदप्रयोगाभिप्राय इति ।

पतन्त्यधो ऽनादृतयुष्मदङ्घ्रय इति (२१३)। वचनाभ्याम् । तथा च यदि दैवादङ्गीकृत तुरीयाश्रमो ज्ञानार्थं क्लिश्यमानो यतमानोऽपि पुरातनवृजिननिरुद्धाधिकारान्न ज्ञानं प्राप्नोति किन्तु सुशीलत्वादीश्वराद्भीतो ऽन्तः सन्तप्यते तर्हि तेनाभिमानमुत्सृज्य भागवतैः संगम्य भगवद्भक्तिरेवाभ्यसनीया । ततो भयान्मुच्यत इति ।

---

( २१३ ) हे अरविन्दाक्ष राजीवलोचन तव भक्तिवर्जिताः परं पदम् अविद्यानिवृत्या जीवन्मुक्तिरूपं सुस्वरूपं सत्कुल जन्म विद्यादि वा कृच्छ्रेण बहुजन्मभि र्महता तपोयोगसमाध्याद्यायासेन परमदुःखमयेन आरुह्य पुनस्ततोऽधः पतन्ति स्वर्गेऽपि न तिष्ठन्ति तत्र तदाश्रयाभावात् । कुतः। यतो विमुक्तमानिनः। भगवद्भजने त्वज्ञानामधिकारोऽस्ति न नो,मुक्तानां यतो वयमेव ब्रह्मभूताः सजातीयविजातीयस्वगतभेदशून्या इति कृत्वा अविमुक्तमेवात्मानं विमुक्तं मन्यन्त इति विमुक्तमानिनः। ते तु उतभगवद्भजनं क्रियात्मकमिति मत्वा तदनुष्ठाने कर्तृत्वाभिनिवेश इत्युक्ता तेनैवात्मानमज्ञानावृतं मन्यन्ते । न पुनश्शब्दादि विषयसेवनेन ।

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।

अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यत इत्यादि

वदन्तः तेन विषयसेवनेन चाशुद्धबुद्धय एव वर्त्तन्ते । विषयसेवाया वासनानामनपायात । न विशुद्धा बुद्धिर्येषान्ते तथा। तस्मादशुद्धबुद्धित्वादनाहत युष्मदङ्घ्रयः । एतादृशानां भक्तिविधुराणा मधो नरके पतनमुचितमेवेति भाव इति ॥

ननु ज्ञानन्नात्मज्ञान मात्र मपि तु ब्रह्मज्ञानं मुक्तय इत्युच्यते ।

तं दुर्द्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठम्पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहातीति श्रुतेः ।

अधीत्य चतुरो वेदान् धर्मशास्त्राण्यशेषतः ।
ब्रह्मतत्त्वन्न जानाति दर्वी पाकरसं यथेति-
ब्रह्माविदुषो निन्दनाच्च (२१४) ।

अस्तु ब्रह्मज्ञानं मुक्तये, परम् परम्परयैव। साक्षात्तु भक्त्यैव सेति चेन्न ।

---

(२१४) अत्र, यस्य नाहं कृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वापि स इमांल्लोकान् नायं हन्ति न हन्यते । हयमेधशतसहस्राण्यथ कुरुते ब्रह्मघातलक्षाणि । परमात्मविन्न पुण्यैर्न च पापै र्लिप्यते विमलः । तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम् । ज्ञानसमकालमुक्तः कैवल्यं याति हतशोक इत्यादि स्तुतेश्चेति शेषेण पूरणीयम् ।

काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ।
स याति नरकान् घोरान् महारौरव संज्ञकान् ।
तितिक्षाज्ञानवैराग्य शमादिगुणवर्जितः ।
भिक्षामात्रेण यो जीवेत् स पापी यतिवृत्तिहा ।

परिव्राड् ज्ञानहीनस्तु चाण्डालीं योनिमाप्नुयादित्यादीन्यन्यान्यपि दुष्यति निन्दावचनान्यत्रानुसंधेयानीति ॥

अथापि ते देव पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि। जानाति तत्त्वं भगवन्महिम्नो न चान्य एको ऽपि चिरं विचिन्वन्निति (२१५)। भजनोत्तरमेव तत्त्वज्ञानमिति नियमोक्तेः।

---

(२१५) आत्मानमेवात्मतयाऽविजानता मिति अज्ञान संज्ञौ भवबन्धमोक्षाविति द्वाभ्यां श्लोकाभ्यां यादृशं ज्ञानं मयोक्तं तादृशं जगदभावानुभवस्वरूपं केषां चिदपि न स्यात् प्रत्यक्षगोचरत्वात् प्रत्यक्षस्य च जनक सामग्रीसत्त्वेऽपरिहार्यत्वात्। न च सुषुप्तौ समाधौ वा जगदभावमनुभवत्येवेति वाच्यम्। तस्मिन् समयेऽपि कार्त्स्न्येन जगदभावानुभवाभावात् यतः सूक्ष्मवासनारूपेण तदाप्यस्ति तत्। अन्यथा पुनर्जाग्रद्व्युत्थानादिकाले प्रत्यक्षं तदनुभवो माभूत्। अतो जगदभावानुभवं विना जगदभावकथनाद्द्वैतज्ञानसिद्धिस्वीकारस्तु शुकाध्ययनवद् वाङ्मात्रेण बोद्धव्यः। न तु सांप्रतिपत्तिकः। यदि जगदभावानुभवरहितेन शुकाध्ययने नैवाद्वैतज्ञानपाठेन संसारनिवृत्तिस्तदा एकेनापि केनापि सकृत्पाठेन सर्वमुक्तिप्रसङ्गः स्यात्। तस्मिन् सति शुको मुक्तो वा वामदेव इति वेदवाक्ये ऽल्पजनमुक्तिलाभबोधके मिथ्यात्वापातः। समाधौ जगदभावानुभवस्वीकारेऽपि मनसो लयं विना जगदभावानुभवासंभवः। निरन्तरं परब्रह्मचिन्तनात्मकध्यानं विना न मनसो लयः। मनः शुद्धिं विना च न निरन्तरं ब्रह्मचिन्तनं घटेत। मनः शुद्धि हेतुश्च कामक्रोधादि दुष्टवृत्तिनिरोध इति क्रमः। अनेन क्रमेण शुद्धेनापि मनसा निराकारस्य ब्रह्मणो ध्यानं न संभवत्येव। निर्विशेषस्य तस्य ध्यानास्पदत्त्वासङ्गतेः। नागृहीतविशेषणा बुद्धि-

भक्तिरेव भगवत् स्वरूपानन्दतां गता सैव तदानीं ज्ञानमुच्यत इति दृष्ट्या तु मुक्ता अपि लीलाविग्रहं कृत्वेत्यादि आत्मारामश्चेत्यादि चोक्तं युक्तम्। अन्यथा भक्तिर्ज्ञानाय कल्पत इत्यादि प्रसिद्धिविरोधः (२१६)।

---

विशेष्यमुपसंक्रामतीति न्यायात्। न च निर्विकल्पसमाधित्वेन तत्स्वीकारेण निर्वाहः। परमात्मनो जीवात्मनो भेदाभेदसिद्धान्तात्। अभेदेन निर्विकल्पसमाधौ भेदांशसंस्कारसंस्कृतस्य मनसो मुहुर्मुहु रुद्बोधात् लयाभावाद् बाधकत्वात्। अतो मनसो लयाभावे समाध्यभावः। समाध्यभावे कैवल्यज्ञानाभावोऽपि सुतरां सिद्धः। अथापि महता कृच्छ्रेणानेकजन्मसु विवेकवैराग्यादिभि रभ्यासात् परमयोगसमाधिभिर्हस्तप्राप्यमिव यथोक्तं कैवल्यज्ञानमपि जातं तथापि भो देव अचिन्त्यालौकिक क्रीड़ापर ते तव पदाम्बुजद्वयस्य मध्ये एकदेशस्यापि यः प्रसादलेशस्तेनानुगृहीत एव भक्तो भगवतस्तव महिम्नस्तत्वञ्जानाति। नान्यः तादृशानां मुक्तानां मध्ये कश्चिदपि चिरं विचिन्वन्नपि अतदंशापवादेन विचारयन्नपि वेत्ति। अतो मुक्ता अपि भगवद्भक्तिं विना भगवन्महिम्नस्तत्वन्न जानीयु रेवेति। भक्तिप्रभावरूपं भगवद्विषयज्ञानं तु भक्त्या भवतीत्याह सूतः—

स वेद धातुः पदवीं परस्य दुरन्तवीर्यस्य रथाङ्गपाणेः।
योऽमायया सन्ततया ऽनुवृत्या भजेत तत्पादसरोजगन्धमिति।
भक्तिपथे चित्तशुद्ध्युपायश्च सुकरः।

यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्य गाथाश्रवणाभिधानैः।
तथा तथा पश्यति वस्तु सूक्ष्मं चक्षु र्यथैवाञ्जनसम्प्रयुक्तमित्युक्तेः।

(२१६) चतुर्थी कारके क्लृपि संपद्यमाने चेति वार्त्तिको

भक्त्या मामभिजानाति यावान्यश्चास्मि यादृशः
ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरमिति

भगवतैव भक्तेर्ज्ञानसाधनत्वोक्तेश्च ।

योगो भक्तिश्चोपासनाशब्दार्थः । वेदे तद्विधानानन्तरं ज्ञाननिरूपणाज्ज्ञानमेव मुख्यं मुक्तिसाधनमिति निर्द्वैधं निर्गलति चेति ।

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ।

इत्युक्ते ज्ञानात् संचितक्रियमाणकर्मनाशे प्रारब्धभोगसमनन्तरं तत्त्वविदो मुक्तिरित्यत्र क्रमे स्थिते मध्ये कुत्र भजनानुकूलक्रियानुष्ठानावकाशः । तथा चोक्तं वार्त्तिककृद्भिः ।

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किंचित्कर्त्तव्यमस्ति चेन्न स तत्त्वविदिति

अथवा भक्त्यैव ज्ञानमित्यत्रापि वयं विप्रतिपद्यामहे—यस्य देवे परा भक्तिरित्यादिश्रुत्या भक्तिर्ज्ञानसाधनमित्येव बोध्यते न तु ज्ञानसा-

---

दाहरणे भक्तिर्ज्ञानाय कल्पत इत्युदाहृतम् । व्याख्यातं च मनोरमायाम्—ज्ञानाय कल्पते ज्ञानात्मना परिणमत इत्यर्थः । अत्रात्मशब्दस्तद्वृत्तिधर्मपरः । तथा च ज्ञानत्वेन प्रकाशत इत्यर्थः ॥

धनं भक्तिरेवेत्यवधार्यते वाक्यभेदापत्तेः (२१७)।

गुरुणा विदुषादिष्टं यस्तु पन्थानमाश्रितः।
निर्मानमात्मवान् धीरः स तत्त्वं वेत्ति नेतरः

इत्यत्र निर्मानत्वादि विशेषणविशिष्टस्य शिष्यस्य विद्वद् गुर्वाश्रयस्तदुपदेशानुसारेणानुष्ठानं चोभे तत्वज्ञानसाधने समुच्चिते पुष्कले इत्युपदर्शितत्वाच्च। यत एवं ततः कश्चिदेव ब्रह्मज्ञो ब्राह्मण आत्मानं भगवन्तं ज्ञातुमर्हति नान्यः सामान्यबुद्धिरात्मनो दुर्ज्ञेयत्वादिति।
जीवन् मुक्तस्य प्रारब्धभोगकाले आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन। अभयं वै जनक प्राप्तोऽसीत्यादि श्रुत्युक्ताभयब्रह्मानन्दस्यैव भक्त्याख्यया पर्यायत्वे तु नः किञ्चिदनिष्टम्। पूर्वम्भक्तिवासनाया अभावेऽपि आत्मज्ञानादुत्तरं ब्रह्मानन्दाविर्भावस्यापरिहार्यत्वमित्येव भक्तिमार्गाद्विशेषः।

देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम्।
आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते

इत्युक्तेः। अत एवात्मब्रह्मानन्दात्मज्ञानी भक्त एव च।

---

(२१७) संभवत्येकवाक्यत्वे वाक्यभेदो हि दूषणमिति वचनाद्वाक्यभेदस्य दूषणत्वादिति भावः॥

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्त्तो जिज्ञासु रर्थार्थी ज्ञानी च भरतर्षभ ।
तेषां ज्ञानी नित्ययुक्त एकभक्ति र्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थ महं स च मम प्रियः ।
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मत इति

गीतासु भगवता स्तुतः । श्रुत्या च यथा—आत्मैवेदं सर्वमिति । स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवतीति (२१८) ।

मुक्तानामस्माकं ज्ञानिनां परमेश्वरभजने किं प्रयोजनन्न किमपीति च न वाच्यं यतस्तेषां तु तदेव प्रयोजनम्—

ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च संमतः ।

---

(२१८) आत्मा ब्रह्मैवेदं विश्वमिति मन्वानः पुरुष एवं पश्यन्नेवं विजानन्साक्षात् कुर्वाण आत्मनि ब्रह्मणि रतिर्भक्तिर्यस्य स आत्मरतिः । आत्मनि मनसि क्रीडनं यस्य स आत्मक्रीडः । आत्मना भगवता मिथुनं स्वामिसेवकत्वलक्षणं द्वितीयत्वं यस्य स आत्ममिथुनः । एवं भूतो भगवदीयो भवतीति श्रुतावात्मरतिरूपाया भक्तेः पश्यन्निति दर्शनस्याङ्गत्वेन प्रतिपादनाद्भक्त्यङ्गमेव ज्ञानमिति चेन्न । स स्वराड् भवतीति ज्ञानस्यैव प्रकरणादात्मक्रीड इत्यत्र त्वया जीवात्मनि आत्मशब्दार्थ योजने प्रक्रमभङ्गाच्चेति ।

स्वर्गश्चैवापवर्गश्च नान्यो ऽर्थो मदृते प्रिय इ-त्युक्तेः (२१९)।

तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः।
न ज्ञानन्न च वैराग्यं प्रायः श्रेयो भवेदिहेति वचने तु (२२०)।

---

( २१९ ) ज्ञानिस्त्वहमेव प्रेष्ठ इष्ट उत्तमः। स्वार्थोऽपि स्वस्य प्रियोऽर्थस्तत्साधनं चाप्यहमिति भावः। स्वर्गः स्वर्गादिश्च। अपवर्गो मोक्षश्चाप्यहमेव। तेषां मदृते मद्रूपं विना नान्यः प्रियोऽर्थः। एवं मन्निष्ठ एव ज्ञानी। अन्यस्त्वज्ञानगृहं ज्ञान-साधनव्याजेन द्रव्यप्रतिष्ठाद्युपार्जकोऽघकिङ्कर एवेति।

( २२० ) यतोऽहम्भक्तिप्रियस्तस्मान् मद्भक्तियुक्तस्य प्रा-यो ज्ञानं वैराग्यं चेह श्रेयो न भवेत्। प्रत्युताश्रेय एव। अनु-रागबाधकत्वात्। ज्ञानमिति कैवल्यज्ञानं भक्तिबाधकं वैराग्यं च शुष्कं पूर्वं पूर्वपक्षत्वेनोपन्यस्तमत्रोभे ज्ञेये। न तु भक्त्यङ्गे ज्ञानवैराग्ये निन्दिते ॥ तयो र्भगवदनुरागानुबन्धित्वात्साहा-यकादविरोधात्। कीदृशस्य योगिनः—मद्रूपध्याननिष्ठस्य। यतो मदात्मनः। मयि आत्मा मनो यस्य स तस्य भक्तियोग एव हि सर्वसाधनं तत साध्यफलोत्तमं चेति।

ननुसाधनान्तराभावे तत्तत फलानामप्यभावः स्यात्तर्हि कथमुच्यते भक्तस्य ज्ञानं वैराग्यं च न श्रेयस्करमिति चेत्तत्र समाधानं यत्कर्मभिरित्यादिना भगवतैव दत्तम्। तस्मात्तेषां कर्मादीनां त्यागेन भगवति भक्तिरेव कर्त्तव्येति सिध्यतीति। तदुक्तं बृहन्नारदीये—

भक्ति र्भक्त्यैव कर्त्तव्या तथा कर्माणि भक्तितः।

कुड्यादिवज्जडात्मस्थित्यात्मको नैयायिकाद्यभिमतो मोक्ष स्तदनुकूलमेव शुष्कं ज्ञानं च निन्दितमिति ज्ञेयम् । तादृशज्ञानेन ज्ञानित्वाभिमानिनश्च व्यङ्गेन ।
मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने-
इत्यत्रोपालब्धाः ।

इत्थं ब्रह्मज्ञानस्य मुक्तिसाधनत्वे उद्भाविते उत्तरम्–यद्यज्ञानात् संसृतिः स्यात्तर्हि ज्ञानात् सा निवर्त्तेत । संसृतिस्तु अभक्तेः । संसृतिरेषा-

---

यथा लोके हि जन्तूनां चेष्टा कारणतां गतः ।
तथैव सर्वसिद्धीनां जीवनं भक्तिरिष्यते ।
यथा भूमिं समाश्रित्य सर्वे जीवन्ति जन्तवः ।
तथा भक्तिं समाश्रित्य सर्वकार्याणि साधयेत् ।
हरिभक्तिः परा नृणां कामधेनूपमा स्मृता ।
तस्यां सत्यां पिबन्त्यज्ञाः संसारगरलं ह्यहो ।
भक्त्यैव पूज्यते विष्णु र्वाञ्छितार्थफलप्रदः ।
तस्मात् समस्तलोकानां भक्तिर्मातेति गीयते ।
जीवन्ति जन्तवः सर्वे यथा मातरमाश्रिताः ।
तथा भक्तिं समाश्रित्य सर्वे जीवन्ति धार्मिकाः ।
मेरुमात्र सुवर्णानां कोटिः कोटि सहस्रशः ।
दत्ता चाप्यर्थनाशाय यतो भक्तिविवर्जिता ।
अश्वमेधसहस्रं वा कर्मवेदोदितं कृतम् ।
तत्सर्वं निष्फलं ब्रह्मन् यतो भक्तिविवर्जितमित्यादि ।

**मभक्तेः स्यान्नाज्ञानात्कारणासिद्धेरिति शाण्डिल्य सूत्रात् (२२१)।**
**हरावभक्तेर्जीवानां संसृतिः स्यान्न चान्यथा।**

---

(२२१) एषां जीवानां भगवद्भक्तेर्हेतोस्संसृतिः संसारो भवति। न अज्ञानात्। कुतः। कारणासिद्धेः। अज्ञानस्य संसृतिकारणत्वा सिद्धेरित्यर्थः। कारणेति भावप्रधानो निर्देशः। यथा जनकाज्ञानान्न पुत्रस्य पशुत्वमापतति स्वस्य पुरुषत्वाज्ञानान्न स्त्रीत्वं कदापि च तथेश्वराज्ञानात् स्वस्वरूपाज्ञानाद्वा न संसारः। न च जलाज्ञाने तदग्निर्भूत्वा दन्दह्यते। अग्न्यज्ञाने वा स शैत्यं ददाति तथेश्वरोऽपि न स्वविषयकाज्ञानात् कस्यचित् संसारित्वं ददीत। सर्वसमत्वात्। घृणाधारत्वाच्च।

किंच अज्ञानमितिशब्दे प्रयुक्तो नञ् तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिता इत्युक्तेषु षट्स्वर्थेषु कमर्थमाह। उच्यताम्। अभावेऽर्थे ऊरीक्रियमाणे तस्य (अभावस्य) व्यापारासंभवान्न तेन संसृतिः स्यात्। न चाज्ञानमीश्वरज्ञानविरोधि। ईश्वरज्ञानविरोधिनोऽसंभवात्। तथा सतीश्वरस्यानीश्वरत्वापत्तेः। तस्य नित्यव्यापकत्वात्। ज्ञानमात्रविरोधित्वे तु जीवस्य जड़त्वापत्तिः।

ननु रज्जवज्ञानाद्यथा सर्पभयं भवति तथा ब्रह्माज्ञानात् संसारभयमिति चेद्विषमो दृष्टान्तः। बालोन्मत्तादीनां तदभावात्। अथ संसारजनकाज्ञानस्य भ्रान्तित्वे अङ्गीकृते तज्ज्ञानसजातीयमेव सिद्ध्येन्न परं तत् स्वप्रकाशं किन्तु साक्षिभास्यमेव। साक्षिभास्यत्वे च वृत्तित्वमेव आपतति। अन्यथा अज्ञानस्यात्मद्रव्याश्रितत्ववादेन गुणत्वापत्तिः। तच्च घृतविंशति

गुणेषु न पच्यते। अन्योन्याभावभिन्नं ज्ञानमेव सत्तदज्ञानशब्दे नोच्यत इति चेत्सत्यम्। बुद्धिर्ज्ञानमिति पर्यायवचनात्तस्मा-ज्ज्ञानाज्ञानयोरभेदेनान्वयात् कुत्र चिदज्ञानशब्दशब्दितं ज्ञान-मेव। कुत्रचिच्च ज्ञानशब्दशब्दितमज्ञानमेवेति महती विप्र-तिपत्तिः स्यात्। संशयभ्रान्त्योरेवाज्ञानमिति व्यवस्थायां तु ज्ञानसदृशं ज्ञानाधममज्ञानं ज्ञातव्यन्न तु ज्ञानाभावः। यथा ब्राह्मणसदृशायदेहीत्युक्ते ब्राह्मणाधमायैव दीयते। नान्यस्मै तद्वत्।

न च वृत्तित्वे नेष्टापत्तिरज्ञानस्य युष्माभिर्वृत्त्युपादान-त्वाभ्युपगमात्। न ह्युपादेयमेवोपादेयम्भवति। वृत्तित्वाभावे-ऽपि साक्षिभास्यत्वे तु साक्षी सर्वमेव भासयेत। तथा सति न कश्चिदसर्वज्ञः स्यात्। भावाभावविलक्षणमनिर्वचनीयमज्ञानं मिथ्येत्यादि च माया वादिनाम् परिभाषामात्रम्। तादृशस्य तस्य परस्परविरोधादसिद्धेः। सदसदिति द्वौ पक्षौ परित्यज्य तृतीयपक्षस्य द्वयं वा इदं न तृतीयमस्ति सत्यं चैवानृतं चेति शतपथ श्रुतौ स्वीकारनिषेधाच्च। अत्र श्रुतौ भाष्ये सायणा-श्चाह—यदिदं जगत्तत्सर्वमनृतं सत्यं वेति कोटिद्वयमेव न तृती-या कोटिरस्तीति। जगतोऽनृतत्वप्रतिवादे च शाण्डिल्यसूत्रम्—शक्तित्वान्नानृतं वेद्यमिति।

अस्य शक्तित्वादित्यादि शाण्डिल्यसूत्रस्यार्थो यथा—वेद्यं प्रधानं माया नानृतं न मिथ्या भवितुमर्हति। कुतः। शक्ति-त्वादेव। न हि मायावी मायाशक्तिं मिथ्यैव कृत्वा विहिता-गन्तुकसृष्टये प्रभवेदिति। मिथ्योपादानेन मिथ्याकार्यघटकस्य कस्यचिद् ईश्वरत्वस्वीकारे तस्य सत्यसंकल्पत्वश्रुतिविरोधः। अनृतेन प्रत्यूढा अनृतापिधाना इत्यादि श्रुतयस्तु न प्रपञ्चो

पादानमिथ्यात्त्वप्रतिपादिकाः किन्तु पापार्थेऽनृतशब्दप्रयोगस्तत्र तत्राभिप्रेयते। रज्जुसर्पादावपि देहानुरागादेव तद्भयन्न तु रज्ज्वज्ञानात्। रज्ज्वज्ञाने सर्पज्ञानन्तु देहानुरागस्मरणकारणन्न तु भयस्येति वेदितव्यम्। तदुक्तम्—

यतो हीश्वर माया वै नित्या नाज्ञानकल्पिता।
शक्तिः स्वाभाविकी चेति वेद शब्दात्परापरेति॥

अस्य यतो हीश्वरेत्यादि श्लोकस्यार्थो यथा—यत ईश्वर माया नित्या जीवाज्ञानकल्पिता न भवति। कुतः वेदशब्दात्। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल क्रियेति। श्रुत्यक्षरात्। तस्माद्विश्वमपीश्वरविरचितं मायाशक्त्या; न तु जीवाविद्याकल्पितन्तत्। न प्राणिबुद्धिभ्यो ऽसंभवादिति शाण्डिल्यसूत्रात्। प्राणि (जीव) बुद्धिर्यथार्थज्ञानात्मिका अज्ञानात्मिका वा भवतु। न सा समर्था जगत्सर्जन इति वर्णकान्तरेण प्रस्तुतशाण्डिल्यसूत्रभावः (क)।

तत्र पराचिच्छक्तिः स्वाभाविकी अपरा गुणात्मिकेति परापराविभागः। एवं वेदसिद्धान्तमज्ञात्वा अवैदिका जीवाज्ञानकल्पितं विश्वमिति जल्पन्ति। जल्पन्तु ते हि श्रुतिस्मृतिनेत्रविहीना भगवत्यपराधिनः। यतो भगवद्विग्रहं मायोपाधिं मत्वा तस्यानादरेण ब्रह्माहं ब्रह्माहमस्मीति विकत्थन्ते भवजलधिमीनाः। कास्तेषां कथाः। भावभक्तिविरहेण ब्रह्माकारवृत्तिंविना कृतो ब्रह्माहमस्मीत्यभिमानो न संसारनिवर्त्तकः किन्त्वघप्रद एव।

सोऽहमस्मीत्यहं ब्रह्म ये मुहुर्भाषयन्त्युत।

---

(क) वेदरचना प्राणिबुद्धिभ्यः सकाशान्न भवति। असंभवादिति हि प्रस्तुत शाण्डिल्यसूत्रस्य वर्णकम्।

भक्तियोगाद्विनाशः स्यात्तस्या वै सुमतान्त्विव-
दमित्युक्तेश्च (२२२)।

---

प्रमाणं स्यान्नु किं तेषां मद्यपानां वचो यथेति निन्दनात्।
ननु ब्रह्मास्मीत्यनुसंधानं कारितं वेदैस्तत किं भ्रमेण। तथा
सति वेदस्याप्रामाण्ये सुष्ठु विसंष्ठुलतापद्येतेति चेत् न हि न
हि। ब्रह्मभावत्वप्राप्तये ब्रह्मभावना कारिता वेदैः। विष्णु
र्भूत्वा विष्णुं यजेतेति। ब्रह्म भूत्वा ब्रह्माप्नोति। नाविष्णु
र्विष्णुं यजत इत्यादि वचनेभ्यः। तथा च-

अच्युतोऽहमनन्तोऽहङ्गोविन्दोऽहमहं हरिः।
शाश्वतोऽहमशेषोऽह मजोऽहममृतोऽस्म्यहम्।

इत्यादि वचनं संगच्छेत। तस्माद् ब्रह्माहमस्मीति भावना
ब्रह्मभावधर्मत्वप्राप्तये न त्वभेदज्ञानाय। तेन भक्तिभावविधु-
रो ब्रह्मवादिब्रुवाणां भावस्त्वासुर एव।

ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखीति।

गीतासु आसुरप्रकरणे भगवद्वचनात्।

व्याससूत्रस्य सिद्धान्तश्चास्मिन्नर्थे च दृश्यते।
जीवस्य नैव ब्रह्मत्वं न भूतं न भविष्यति।
भोगमात्रं च जीवस्य वैकुण्ठोदे युगे युगे।
न च तस्य स्वरूपत्वं कथने तस्य दोषभाक्।
जगता मुदयश्चैव रक्षा च विविधा मता।
प्रलयश्चैव सततं तद्वशः परिकीर्त्तित इति।
तस्माद् भगवत्यभक्तिरेव संसारभयकारणमिति सिद्धम्।

(२२२) यतो हरौ या अभक्तिस्तस्याः सकाशाज्जीवानां
संसृतिः संसारः स्यात्तस्माद्भक्तियोगत्तस्याः संसृतेर्विनाशः स्यात्।

तच्चाज्ञानमात्मविषयं परमात्मविषयं यद्वा तद्वास्तु । न तन्निवृत्त्या संसृतिनिवृत्तिः किन्तु भक्त्यैव सा सिद्ध्येदिति ।

---

ननु संसृतिस्त्वज्ञानाद्भवति । तत्तु निष्कामकर्माकरणात् । निष्कामकर्मकरणे तेनानुष्ठातुः चित्तशुद्धौ ज्ञानोदयात् पुनरज्ञाननिवृत्तिरिति चेत्तत्राह—न चान्यथेति । चकारो निश्चयार्थे कर्माकरणादज्ञानाद्वा न संसारः स्यात् । सा त्वभक्तेरेवेति । ऋते ज्ञानान्न मुक्तिरित्यादौ यदज्ञानात् संसारो भवतीति क्वचिदन्यथानुपपत्त्या निर्गलति तत्तु हलं हि मे जीवनमिति वाक्यवत् संगमयितव्यम् । तत्तद्वाक्यविचारे हि यथा कृषीवलस्य न केवलं हलमेव साक्षाज्जीवनं किन्तु हलकरणे नाल्पबीजाद्यज्जातं बह्वन्नं तदेव तस्य जीवनमिति एवं साधनभक्त्या ज्ञानं तेन प्रौढ़ाया भक्तेः संसारनिवृत्तिरिति ज्ञेयम् । ब्रह्मभूतो मे परां भक्तिं लभत इति भगवदुक्तेः ।

एवं हरावभक्तेरज्ञानं तेन प्रौढ़ाया अभक्तेः संसृतिः तं यथा यथोपासते तदेव भवतीति श्रुतेः । भगवद्भक्तिरेव मुक्तिरिति सिद्धान्ताद् भक्त्यात्मकोपासनेन भगवद्भावोमुक्ति र्भगवतो ह्य भजनस्य च बन्धरूपत्वात्तद्भजनाभावे बन्धरूपा संसृतिरनुवर्त्ततैवेति क्वात्रानुपपत्तिरिति । ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति भगवदुक्तिश्चात्र स्मर्त्तव्या । तदुक्तं भगवद्गुणदर्पणे ।

जन्मानि घोर यम किङ्करताड़नानि दैन्यानि तानि तपनात्मजदर्शनानि । जन्तोरहं मम तरङ्गकुरङ्गतृष्णा कृष्णाङ्घ्रिपङ्कजपराङ् मुखतानुभाव इति ॥

यच्चोक्तं भक्त्या मामभिजानातीत्यादिना भगवद्भक्तिर्ज्ञानाङ्गमिति तन्न । भक्त्या जानातीति चेन्नाभिज्ञप्त्या साहाय्यादिति शाण्डिल्यसूत्रेण तन्निराकरणात् (२२३) ।

यस्य देवे परेत्यादि श्रुतौ चोक्ता भक्तिस्तु न भगवद्भक्तिः किन्तु देवभक्ति रितरस्मिन् साहचर्यादिति शाण्डिल्यसूत्रोक्ते ( २२४ ) रीश्वरेतरस्मिन् देवे भक्तिर्देवभक्तिरिति मन्तव्यम् ।

ऋते ज्ञानादित्यादि तु परम्परया ज्ञानपूर्वकभजनभावनिर्देशमात्रपरं शास्त्रन्न हि तज्ज्ञाननि-

---

( २२३ ) भक्त्या मामभिजानातीति तृतीयया श्रुत्या भक्तेर्ज्ञानहेतुत्वमवसीयत इति चेन्न । यदि हि केवलं जानातीति वदेत्तर्हि तथा स्यान्नत्वेवमुवाद किन्तु अभिजानातीत्येवाचष्टे । अभिज्ञेति च पूर्वज्ञातस्य ज्ञानमुच्यते । तथा भक्त्युपकारपूर्वज्ञानं तत्फलरूपभक्तिप्रवर्त्तकम् । अनन्तरं यावत्तद्दार्ढ्यं भक्त्यैवाभिज्ञप्तिभावेनानापेक्ष्यते व्रीह्यवहने नावघातवदिति । कार्यसाहाय्यार्थमुक्तम् । ततो ज्ञानदार्ढ्येन भक्तिदार्ढ्ये सति विशत इति ।

( २२४ ) यस्य देवे पराभक्तिरित्यादिश्रुतौ देवभक्तिरीश्वरेतरस्मिन् देवेऽवगन्तव्या । कुतः । गुरुभक्तिसाहचर्यात् । साहचर्यं हि नामृतफलायां भक्तौ घटते । इन्द्रादि देवतास्त्वाराधिताश्शुभवज्ज्ञानफलाय भवन्तीति साहचर्यमपि निर्णायकमिति ॥

रपेक्षभक्तिसाध्यमुक्तिबोधकवाक्यविरोधपरत्वेन व्याख्येयम् । आत्मब्रह्मज्ञानं विनापि वल्लवीनां मुक्तिलाभात् । अतएव तदभावाद्वल्लवीनामिति शाण्डिल्यसूत्राच्च (२२५) ।

केवले नैव भावेन गोप्यो गावो नगा मृगाः ।
येऽन्ये मूढ़धियो नागाः सिद्धामामीयु रञ्जसेति ।
श्रीभगवदुक्तेश्च (२२६) ।

अञ्जसा सौकर्येण । भगवतः कल्पद्रुमस्वभावत्वात् । जनानां कामपूरणे कल्पद्रुमो हि स्वच्छायाश्रयणमेवापेक्षते । नान्यत् । समदर्शित्वात् । तदुक्तम् ।

---

( २२५ ) यत एव ज्ञानं दृष्टोपकारकमङ्गमत एव दृष्टोपकारं निरस्य मनो मालिन्यादिबाधात् प्रधानभगवदनुरागमात्रेण वल्लवीनां मुक्तिर्भगवतोदीर्यते; केवलेन हि भावेनेत्यादि ॥

( २२६ ) केवलेनैवेत्यत्र एवकारः साधनान्तरव्यावृत्यर्थः । एतच्छ्लोकोत्तरं भगवतैव ह्युक्तम्—यन्न सांख्येनेत्यादि केवलेनैव भावेन भावाख्यभक्तियोगेन गोप्यादयो मुक्ताः । अञ्जसा वैराग्यादि दुःखं विनैव मामीयुः । नगा वृन्दावनमहीरुहादयः । मूढ़धियो नागाः कालियादयः । उक्तं च शाण्डिल्येन—तद्वतः प्रपत्तिशब्दाच्च न ज्ञानमितरप्रपत्तिवदिति । अस्य तद्वत इत्यादि शाण्डिल्य सूत्रस्यार्थो यथा—

कल्पद्रुमोऽपि कालेन भवेद्यदि फलप्रदः ।
को विशेषस्तदा तस्य वन्यै रन्यै र्महीरुहैरिति ।

नन्वस्तु भगवान्कल्पवृक्ष कामधेनु चिन्तामणिवदिति । निष्कामानां तस्य तादृशै र्गुणैः किं प्रयोजनमिति चेन्न । तैः प्रवृत्तिनिवृत्ति धर्मार्थ काममोक्षपर्यन्त प्रयोजन–निष्पादनोपपत्तेः । संसारिणां जीवानां जगद्व्यापारादि वर्जनश्रवणात्तत्रासामर्थ्यात् । क्वचित्स्वपुरुषार्थाधिकारालभ्यपदार्थस्य निष्कामपुरुषपक्षे ऽप्यपेक्षितत्वे साक्षात्तैरेव लाभाच्च तेषां सार्थक्यं भवतीति समाधीयते ।

तमेव विदित्वेत्यादि श्रुत्यर्थश्च स्वप्नेश्वरेण

---

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यत इति

भगवदुक्तो ज्ञानवतः प्रपत्तिरुक्ता । भक्तेर्ज्ञानहेतुत्वेनेदमुपपद्यते । इतरप्रपत्तिवदिति । यथा कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवता इत्यनेन देवतान्तरप्रपत्तिनिन्दामुखेनैव स्वप्रपत्तिः स्तूयते भगवता । तत्र देवताभक्तेरेव प्रपत्तिशब्देन कथनन्न तज्ज्ञानस्य । चकाराज्ज्ञानानन्तर्यश्रवणमपि ज्ञानत्वाभावे निदानम् । यथा गीतासु—

यो मामेव मसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारतेति ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययमिति चेति ॥

भक्तिपक्ष एवैवमुपपादितः । ननु तमेव विदित्वाति मृत्युमेति, नान्यः पन्था विद्यते ऽयनायेत्यत्र वेदनफलं मुक्तिः श्रुता। तद्विरोधेन स्मृतीनामन्यार्थत्वं स्यादिति चेन्न । अत्रापि तथैवोपक्षयात्। तथा हि अतिमृत्युपदन्न मुक्तौ रूढं किन्तु यस्यां सत्यां मृत्योरतिक्रम इति व्युत्पत्त्या भक्तिमेवाति मृत्युपदेनाभिधत्ताम् । उपपद विभक्त्यर्थापेक्षया कारकविभक्त्यर्थस्य बलवत्त्वादिति (क) ।

ज्ञानान् मुक्तिरिति सिद्धान्तस्वीकारे तु द्विषन्तोऽपि ज्ञात्वा मुच्येरन् । तथा चोक्तं शाण्ड-

---

(क) य एवं वेदेत्यादि श्रुतौ सर्वविदित्यादि श्रुतौ च उभयार्थे पर्यायेण प्रयोगदर्शनाद् वेदनं ज्ञानमुपासनञ्चेति विद्धातोर्द्वावर्थौ प्रसिद्धौ । तथापि द्वयोरर्थयो र्विनिगमनाविरहेणान्यतरत्र संशयानिवृत्तौ एकत्र स्थित्यनिश्चयात् स्वप्नेश्वरेण तथा यौगिकत्वेन व्याख्यातमिति द्रष्टव्यम् । वस्तुतस्तु सर्वे वेदाः सर्वविद्याः सशास्त्राः सर्वे यज्ञाः सर्व इज्याश्च कृष्णः । विदुः कृष्णं ब्राह्मणास्तत्वतो ये तेषां राजन् सर्वयज्ञास्समाप्ता इति श्रुतौ विदुरित्यस्य पदस्य वेदनमुपासनञ्चोभावर्थौ यथोपयोगं विवक्षित्वा सुकरो निर्वाह इति ।

ल्येन—ज्ञानमिति चेन्न, द्विषतोऽपि ज्ञानस्य तद-संस्थितेरिति (२२७)।

तस्य ज्ञानमेव साधनमित्येके वदन्तीत्याशङ्किते नारदेनाप्युक्तम्—न तेन राजपरितोषः क्षुधाशान्ति र्वेति (२२८)।

उपासनकाण्डानन्तरं ज्ञानकाण्डारम्भश्च हारमध्यमणेर्नायकत्वन्यायाभिप्रायको न तु ज्ञानस्य प्रधानत्वाख्यापन तात्पर्यकः सः। उक्तं हि शाण्डिल्येन—ब्रह्मकाण्डं तु भक्तौ तस्यानुज्ञानाय सामान्यादिति (२२९)।

---

(२२७) ननु ब्रह्मसंस्थोऽमृतत्वमेतीत्यत्र ब्रह्मसंस्थाशब्देन ब्रह्मज्ञानमेवोच्यते न तु तद्भक्तिः। तथा चामृतफलत्वं तस्यैवेति ब्रूषे चेन्नैष दोषः। संस्था भक्तिरेव। न ज्ञानम्। द्विषतस्तज्ज्ञानवतोऽपि तत्संस्थत्वव्यवहाराभावात्। विसृज्यते न कालेन पत्नी संस्थाव्यतिक्रम इत्यादौ संस्थाशब्दस्य भक्त्यर्थे प्रयोगाच्च। एवं च तन्निष्ठस्य मोक्षोपदेशादिति वादरायणीयसूत्रस्याप्ययमेवार्थो ऽध्यवसेय इति।

(२२८) राजज्ञानं यद्यपि सर्वासां प्रजानां सामान्यं परन्तु पारितोषिकं राजा सुसेवकेभ्य एव ददाति। न सर्वेभ्यः। तथा व्यञ्जनस्य ज्ञानेऽपि जलाग्निघृतसंयोगेन सिद्ध मेतावता ज्ञानेनैव क्षुच्छान्ति र्न भवतीति वदीश्वरोऽपि केवलं ज्ञानेनैव न मुक्तिं दद्यात् किन्तु भक्त्या सेवनेन प्रसीदन्निति॥

(२२९) ज्ञानाप्राधान्ये ज्ञानकाण्डमित्युत्तरकाण्डप्रसिद्धि र्न

एवम्पश्यन्नित्यादि श्रुतिश्च नात्मज्ञानिस्थित्यनुवादपरा; अपि तु ज्ञानस्य भक्त्यङ्गत्वख्यापनपरा। तथा चोक्तं शाण्डिल्येन। सामुख्येतरापेक्षितत्वात्। प्रकरणाच्च। दर्शनफलमिति चेन्न; तेन व्यवधानात्। दृष्टत्वाच्चेति (२३०)।

---

स्यादिति मन्वानं प्रत्युच्यते। ब्रह्मकाण्डं कोऽर्थः। ज्ञानकाण्डम्। भक्त्यर्थं ब्रह्मकाण्डं श्रूयते। न ज्ञानार्थम्। अज्ञातार्थज्ञापनस्य काण्डद्वयसामर्थ्यात्। अन्यथा धर्मज्ञानार्थं पूर्वकाण्डात्मपि ज्ञानकाण्डं स्यात्। अथातो धर्मजिज्ञासेति सूत्रणात्। न च ज्ञानविधिः संभवति येन तत्प्राधान्यादपि ज्ञानकाण्डं भवेदिति। तस्माज्ज्ञानकाण्डमिति भ्रान्तो व्यवहारः किन्तु ब्रह्मकाण्डमेवाभ्रान्तः। अतएव अथातो ब्रह्मजिज्ञासेति सूत्रितं तत्तु अपि संराधने प्रत्यक्षानुमानाभ्यामिति सूत्राद् भक्त्यर्थत्वाद्भक्तिकाण्डमपीति व्यवहर्त्तुं शक्यते इति। सूत्रार्थस्तु भक्ताविति चतुर्थ्यर्थे सप्तमी। भक्त्यर्थमेवोपवर्णितं ब्रह्मकाण्डं वेदैरिति शेषेणार्थः। यतो भगवज्ज्ञानेन भगवत्यनुरागो भवति। यथा मत्स्यमूर्त्तौ सत्यव्रतस्य प्रीति र्जाता (क)। कुतः सामान्याद्यथा मणिज्ञानेन मणौ प्रीति र्भवति। अतो मणिज्ञानस्य मणौ रतेरङ्गत्वमेव तथा भगवज्ज्ञानस्य प्रीतेरङ्गत्वम्। कुतः। दृष्टत्वात्। लोकेऽपि सौन्दर्य गतिविलासज्ञानवत एव तरुण्यादौ प्रीति हेतुत्वस्य दृष्टत्वात्तदर्थमेवा ऽऽत्मज्ञयादे रपि दर्शनात्। यतो भक्तिप्रभवं ज्ञानं भक्तेर्दार्ढ्यं कारणमतो भक्त्यर्थमेव तत्। तदेवाह श्रुतिः—भक्तिरेवैनमित्यादि रिति।

(२३०) सा परा भक्तिर्मुख्यप्रधानम्। इतरै रात्मज्ञान-

योगादिभिः स्वोपकार्यतयापेक्षितत्वात् । छान्दोग्ये यो वै भूमा तत्सुखम् । नाल्पे सुखमस्तीत्याद्युपक्रम्याम्नायते । आत्मै वेदं सर्वमिति । स वा एष एवम्पश्यन्नित्यादि । तत्रात्मरति रूपायाः परभक्तेः पश्यन्निति दर्शनमप्रियत्वादि भ्रमनिरास मुखेनाङ्गं भवति । आत्ममननविज्ञानयो रुक्तप्रदर्शनार्थतया न्यायप्राप्तयो रनुवाद एव । एवमात्मक्रीडादे रतिनैयत्यादर्थ प्राप्तोऽनुवादः । अन्यथानेकविधाने वाक्यानि भिद्येरन् । एतेन

यस्त्यक्त्वा प्राकृतं कर्म नित्यमात्मरति र्मुनिः ।

सर्वभूतात्मभूतात्मा स्याच्चेत् परतमा गतिरिति ।

महाभारते आत्मरति शब्दो व्याख्यातः ।

प्रकरणञ्च रतेरेव । फलवत्वात् । तस्यास्तत्प्रकरणस्थं दर्श-नमङ्गं भवितु मर्हति । अथ दर्शनस्यैव फलं स्वाराज्यलक्षणम-मृतत्वम् । तथा च तस्यैव प्रकरणमिति वैपरीत्यमेवेति चेन्न । तेन तच्छब्देन व्यवधानात् । स स्वराड् भवतीत्यत्र हि तच्छ-ब्देन सन्निकृष्टात्मरतिमानेवोपस्थाप्यते । न विप्रकृष्टः पश्य-न्निति । आत्ममिथुन इत्यादि फलाभिसंबन्धाच्च रतेरेव प्रक-रणम् । स स्वराड् भवतीत्यस्यार्थस्तु स्वेनैव रूपेण ज्ञानगुणेना ऽगुणान्तरेण विज्वरत्वादि गुणेन राजत इति स्वराड् । ननु स्वेनैव ब्रह्मरूपेण निर्विशेषेण चिन्मात्रेण राजत इति स्वरा-डिति व्याख्यातव्यमिति चेन्न । श्रुति विरोधात । सा श्रुतिस्तु— एवं संप्रसादोऽस्माच्छरीरात समुत्थाय परं ज्योतीरूपं संपद्य-स्वेन रूपेणाभिनिष्पद्यत इति ॥ अत्र परं ज्योतीरूपं संपद्य स्वेन रूपेणाभिनिष्पद्यत इत्युक्तं न तु तेन ज्योतीरूपेणेति । तथा च स्वेनरूपेण ब्रह्मरूपेणाद्वितीयेनाऽभिनिष्पद्यत इत्य-ध्याहार्य व्याख्यातारस्त्वऽवैदिका नूनं श्रुतिसत्यार्थ विरोधिनः ।

यतो यर्हि श्रुतेरभेदान्वये तात्पर्यमभविष्यत्तर्हि स्वेन रूपेणेत्यत्र ज्योतीरूपेणाभिनिष्पद्यत इत्येवावदयतेति तस्मादस्मदुक्त एवार्थो यथार्थोऽर्थः। अतो ज्ञानस्य भक्त्यङ्गत्वम्। तद्धि भक्तिदम्। एवं सर्वं सुखत्यागात्मकं वैराग्यमपि भक्तिदम्। अतस्तयोर्भक्त्यङ्गत्वाद्भक्त्यैव सुखापो भगवान्न तन्निरपेक्षाभ्यां ज्ञानवैराग्याभ्यामिति सिद्धम्। तच्च ज्ञानमेकात्मदर्शनमिति लक्षणादद्वैतज्ञानमपि प्रसिद्धम्। तदपि द्विविधम्। शास्त्रतात्पर्याद्वैतं प्रथमम्। शास्त्रतात्पर्यविधुरं द्वितीयम्। यावद्देहस्मरणं स्वप्नवदपि, तावद्भगवानभेदेन भावभक्त्या भजनीय इति शास्त्रतात्पर्याद्वैताख्यम्। यस्मिंस्तु तथा न भजन्ति तच्छ्रुति तात्पर्यविधुरमासुरमिति।

वस्तुतस्तत्त्वज्ञानं तु, चिदचिद्विग्रहः सेव्यो भगवान्सात्वतां पतिः। सेवको वैष्णवश्चेति द्वैतं तु श्रुतिसंमतमित्येव ॥

अस्य चिदचिद्विग्रह इत्यादि पद्यस्यार्थो यथा—यस्मान्मुक्तोऽपि जीवो ब्रह्मरूपो न भवेत् किन्तु पार्षदरूपस्तद्दास एव अस्यानुदास्यमेवास्मत् पितामहः किल वव्रइति बल्युक्तेः।

विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिण इति पाद्मोक्तेश्च।

यस्माच्च भगवद्दास्यं भगवत्पारतन्त्र्य रूपमिति तदेव परममुक्तिरूपं तस्माच्चिदचिद्विग्रहो विश्वात्मको घनश्यामो भगवानेकः सेव्य एक एव वैष्णवः सेवक इति द्वैतं तु श्रुतिसंमतम्मन्तव्यम्। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवतीत्यादि श्रुतिषु द्वैतदर्शनस्य निन्दनन्तु नानात्वलक्षणस्य द्वेषादिमूलस्य द्वैतस्याभिप्रायेण आत्मनश्च परस्यापीत्याद्युक्तेः। न तु भगवत्तद्भक्तयोः स्वामिदासत्वलक्षणस्य द्वैतदर्शनस्य दूषणाशयेनेति ज्ञेयम्। जीवस्य स्वाभाविकतद्दासधर्मत्वात्। तदेवोक्तम्। यथा—

श्रीमते विष्णवे तुभ्यं दास्यं सर्वं करोम्यहम्।

देशकालाद्यवस्थासु सर्वासु कमलापते इति ।
दासभूताः स्वतः सर्वे ह्यात्मनः परमात्मन इति ।
स्याज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।
आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदास्मरेति ।
दासभूतमिदं सर्वं जगत्स्थावरजङ्गमम् ।
श्रीमान् नारायणः स्वामी जगतां प्रभुरीश्वर इति च ।

महान्तस्तु तद्दास्यमेव स्पृहयन्ति । न तु स्वातन्त्र्यम् । यत-स्त्वं स्वतन्त्राऽसीत्युक्ते ऽयभिचारिणी मोदयुक्ता स्यान्न तु कुलीना पतिव्रता । तद्वत् । सेवाश्ववृत्तिरिति मनु वचनं तु नारदेन व्याख्यातं श्ववृत्तिर्नीचसेवनमिति । तथा च नीचसेवनस्यैव हेयत्वमुक्तन्न तु परममहतो महोदारस्वभावस्य भगवतो भजनस्य । भगवद्दासा हि निर्भया मोदन्ते । अतो मुक्तजीवानामपि भग-वदधीनत्त्वाद् भगवद्दास्यरूपजीवानां स्वाभाविकधर्मत्वात् ।

दासोऽहं परमेशस्य स मे नाथः सतां पतिः ।
इत्येवं मुक्तिदे द्वै ते त्वहन्ता ममते वरे—

इत्युक्ते रुक्तप्रकारेणाहं परमेशस्य दासः । स सतां पतिर्मे नाथ इत्येवं ये अहन्ता ममते ते द्वे तु मुक्तिदे वरे इत्येव ज्ञानवि-चारपक्षः शास्त्रार्थ इति ।

तथा भगवद्विग्रहत्यागात्मकं भगवत् प्रसादे विषयबुद्ध्या-त्मकं वेदविरोधि वैराग्यं चासुरम् । तद्विपरीतं च भागवतं तदि-ति स्मर्त्तव्यम् । भगवत् प्रसादनैवेद्यं हि विषयसामान्यबुद्ध्या न त्याज्यमपि तु ग्राह्यम् । यथोक्तं शाण्डिल्येन स्वयमर्पितं ग्राह्यमविशेषादिति । अस्य स्वयमर्पितमित्यादिसूत्रस्यार्थो यथा—यदुक्तं कर्मारण्ये भ्रमद्भिः ईश्वरार्पितमन्नादि निर्मा-ल्यत्वात् स्वेनोत्सृष्टत्वाच्च स्वयन्न भक्ष्यं भक्षणे दोषप्रसङ्गा-दिति । तन्न वाच्यम् । तद्वाक्यस्याज्ञानविजृम्भितवाक्यत्वात् ।

किञ्च–दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतान्तरन्ति त इति २३१

भगवता श्रीमुखेनैव प्रपत्तिरेव मायातरणोपायत्वेन गीतासु प्रदिष्टा । न ज्ञानादि । अत्र यथा श्रुतार्थन्त्यक्त्वा प्रपत्तिर्ज्ञान मिति लक्षणया व्याख्यानं भक्त्यनासक्तिमूलमेवेति वेदितव्यम् ।

---

भगवत्प्रसादस्य वैष्णवेभ्योऽर्पणविधानान्न निर्माल्यत्वेन त्याज्यत्वम् । स्वस्य च वैष्णवत्वाविशेषादुत्सृष्टस्य पुनर्ग्रहणे न दोषः । प्रत्युत ।

षड्भि र्मासोपवासैस्तु यत्फलं परिकीर्त्तितम् ।
विष्णो र्नैवेद्यसिक्थेन पुण्यं तद् भुञ्जतां कलौ ।
हृदि रूपं मुखे नाम नैवेद्य मुदरे हरेः ।
पादोदकं तु निर्माल्यं मस्तके यस्य सोऽच्युत·

इत्यादिना माहात्म्य मुक्त्वा नैवद्यभक्षणे गुण एवेति । दृष्टं च लोके सौन्दर्यादि ज्ञानस्य तरुण्यास्तरुणे रति हेतुत्वन्न तु रते र्ज्ञानहेतुत्वमिति दृष्टोपकारकत्वादपि दर्शनस्य रत्यङ्गत्वमवसीयत इति ॥

( २३१ ) या माया दुरत्यया दुःखेनात्ययोऽतिक्रमस्तरणं यस्याः सेति वेदैः प्रोक्ता किमिन्द्रजालरूपा । नेत्याह । दैवी द्योतमाना ममेयमिति मदीया च । न तु इन्द्रादिदेवसम्बन्धिनी सा । इन्द्रो मायाभिः पुरुरूप ईयत इत्यादौ तु इन्द्रः परमात्मैवेति बोध्यम् । किंचिच्छक्तिः साक्षात् । नेत्याह ।

दुर्बोधं कुहकं तस्य मायया मोहितं जगत् ।
दुर्जया सासुरैः सर्वैर्यष्टिरूपो ऽभवद्विधिः ।
रुद्रो येन कृतो वंशस्तस्य मायां जयेत् कथमिति

श्रुतौप्रपत्तिमन्तरेण भगवत्प्रसत्तिं विना तन्मा-
या जयोपायासंभावनैव निर्दिष्टा ।

ज्ञानविज्ञानसंपन्नो भज मां भक्तिभावित इत्यादि
तु यदा अज्ञानिनामपि भक्त्या मुक्तिस्तदा कि-
मु वाच्यं ज्ञानिनां तया मुक्तिरिति कैमुत्येन
नेयम् ।

भगवत् प्रसत्तिश्च भगवत्प्रपत्त्यैव भवेत्तस्य
तत्प्रियत्वात् । तथा चोक्तम्-

न तथा मे प्रियतम आत्मयोनि र्न शङ्करः ।
न च संकर्षणो न श्री नैवात्मा च यथा भवान् ।
यथा त्वं सह पुत्रैस्तु यथा रुद्रो गणैः सह ।
यथा श्रियाऽभियुक्तोऽहं तथा भक्तो मम प्रियइति।
नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया ।

---

गुणमयी सत्त्वादि गुणात्मिका । तर्हि जीवानां तद्वशानां तद्दुरत्ययत्वात का गतिरिति। तत्राह—ये मामेव प्रपद्यन्ते शरणमागच्छन्ति त एतां मायां तरन्तीति । अत्र एवकारोऽन्यव्यावृत्त्यर्थः तथा च सच्चिदानन्दविग्रहं मामेव । न तु निर्विशेषं प्रपद्यन्ते ये । एतामिति दृष्टिगोचरामित्यर्थः ।

प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदादि-
ति भक्तेर्भगवत्प्रसादोपायत्वेन निर्देशाच्च(२३२)।

अत्र भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केन
चिदिति वचन मीश्वरतुष्टेरेकोऽपि बलीति २३३
शाण्डिल्यसूत्रं चानुसंधेयम् ।

एतदेवाभिसन्धाय भगवत् सेवात्यागो निन्दितश्च

---

(२३२) सायुज्यमुक्तिदात् कृष्णाल्लेभिरे उलूखले । लेभि-
रः स्यादुलूखलमिति हि केचित् । यत्प्रसादं यशोदा प्राप तं
विरिञ्चिः पुत्रोऽपि नाप । वक्षःस्थलनिवासिनी श्रीः प्रिया-
पि नाप । किमधिसतः परमिति भावः । अथवा यत्प्रसादं
गोपी प्राप्तेत्यादि तं विरिञ्च्यादयो न लेभिरे इति क्रियाप-
दत्वेन योजना । तदुक्तम्—

अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् ।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनमिति ।

अत्र केन पुण्योदयेनैतादृशभाग्योदयो जात इति मया ब्र-
ह्मणापि न ज्ञायत इत्याश्चर्येऽर्थे अहो शब्दः । यद्वा एतादृशं
भाग्यं केनोपायेन लभ्यमिति खेदे पुनरहो शब्दप्रयोगः । एवं
ब्रह्मापि नन्दगोपादीनां भाग्यमभिनन्दतीति ।

(२३३) तेषु श्रवणादि भजनाङ्गप्रयोगेषु मध्ये यः कश्चि
दतिशयानुष्ठानेन बलवान् भवति स एकोऽपि परमेश्वरतुष्टिं
जनयित्वा परभक्तये प्रभवति । बहुतरशिथिलपरिचर्याभि रपि
यथा नेतरः प्रभुस्तुष्यति । तुष्यति चैकेनापि निर्व्यलीकसतत-
कृतपादसंवाहने नेति तद्वदिति ॥

यथा—श्रिय मनुचरन्तीं तदर्थिनश्च द्विपद-पतीन् विबुधांश्च यः स्वपूर्णः । न भजति निजभृत्यवर्ग तन्त्रः कथममुमुद्विसृजेत् पुमान् रसज्ञ इति ।

ननु तत्त्वज्ञानं विना रागाद्यनिवृत्तौ कथं गोप्यादीनां मुक्तिरुरीक्रियेतेति चेन्न । रागादयः सन्तु कामं न तद्भावोऽपराध्यति । उत्खात-दन्तोरगवदविद्या किं करिष्यतीति भक्तपक्षे रागादीनां सतामप्यदोषावहत्वोक्तेः ।

इत्थं सत्यपि दृष्टं च प्रकृतेर्निष्करुणत्वाल्प-महिमत्वाप्रियत्वादि ज्ञानं मनो मालिन्यकारणं भूतेषु करुणाबाहुल्या ऽव्याहतैश्वर्यातिशयित रूपाश्रय आत्मेति ज्ञानान् मालिन्यनिवृत्ति स्ततः परा भक्तिरिति स्वप्नेश्वरोक्ते ज्ञानादीनां मनो मालिन्यनिरास साधनत्वादिरूपत्वात् सम्यक् प्रेमभक्त्युदय पर्यन्तं यद्यपि ज्ञानाद्यभ्यास इष्ट एव । तथापि अज्ञाननिवृत्यर्थं किमर्थमायास उदुह्यते । शमादयो मैत्र्यादयश्चोदाहृतगुणा महता श्रमेण हि मुहुरभ्यस्य ज्ञानार्थिभिरप्रमत्तैः साध्यन्ते (२३४) ।

---

( २३४ ) बुद्धिर्ब्रह्मप्रमितिः । सा यद्यपि कृत्यनिष्पाद्या-

कष्टेन जातमपि ज्ञानं रक्ष्यमाणं दुःसङ्गादिना विनश्यति। न च पुनः सहसा प्राप्यते तत्। तद्रक्षणार्थमादेहपातं तेषां क्लेश एव। भजतां तु न कश्चिदायासः। किं च-भक्तिमार्गे श्रीशुकमुखाच्छ्रीमद्भागवतश्रवणेन परीक्षितोऽज्ञाननिनिवृत्तिसिद्धिः।

सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना।
श्रावितो यच्च मे साक्षादनादिनिधनो हरि रित्यादि प्रकृत्य-
अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया।
भवता दर्शितं क्षेमं परं भागवतं पदमित्युपसंहारात् (२३५)।

---

तथापि तद्धेतूनां श्रवणमननिदिध्यासनादीनां तन्निष्पत्तये ऽनुष्ठानमावश्यकम्। तत्किं सकृत्कृते शास्त्रार्थ इति न्यायात् सकृदेव प्रवर्त्तेत उत यावद्भक्तिदार्ढ्यमिति संशये उच्यते। भक्तिपरिशुद्धिपर्यन्तं तत्प्रवृत्तिरावश्यकी। यथा व्रीहीनवहन्तीत्यनेन विहितव्रीह्यवघातस्य यावद्वैतुष्यमनुष्ठानं शास्त्रार्थस्तथा दृष्टोपकारकत्वान्मनोमालिन्यनिरास पर्यन्तं ज्ञानाद्यनुष्ठाने यतनीयमिति ॥

( २३५ ) श्रवणेनैव परीक्षितो मुक्ति र्दुन्दुभिघोषपूर्वकं श्रीमद्भागवते वर्णिता। तत्संक्षेपो यथा-राज्ञा दैववशान्मृतो रगवपुष्यंसेऽर्पिते तत्सुतः सर्पेणैव मृतिं क्रुधाऽभिहितवान् श्रुत्वाऽथ राजा वचः। त्यक्त्वा राज्यसुतादिकं सुरनदी तीरं श्रितः

नायं सुखापो भगवान् देहिनां गोपिकासुतः ।
ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिहेति२३६

---

श्रीहरिं श्रोतुं सादरमानसोऽभवदयं ध्यातुं प्रमातुं मुदेति ।

अनादिनिधनो हरिरित्यस्यानन्तरं नात्यद्भुतमिदं मन्ये महता मच्युतात्मनाम् ।

अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः ।
पुराणसंहितामेता मश्रौष्म भवतो वयम् ।
यस्यां खलूत्तमश्लोको भगवाननु वर्ण्यते ।
भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ।
प्रविष्टो ब्रह्मनिर्वाणमभयं दर्शितस्त्वया ।
अनुजानीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे ।
मुक्तं कामाशयं चेतः प्रवेश्य विसृजाम्यसून् इति ।

पठित्वा तदुत्तरम् अज्ञानं च निरस्तम्म इत्यादि पठितम् ।

भागवतं पद मित्यत्र पदशब्दस्य चरणारविन्दाभिधायकत्वे ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलमित्येवास्ति प्रथमसाधकमिति ।

अथो विहायेम ममुञ्च लोकं विमर्शितो हेयतया पुरस्तात् ।
कृष्णाङ्घ्रिसेवामधिमन्यमान उपाविशत् प्रायममर्त्यनद्यामिति राज्ञो वैराग्यं प्रदर्श्य तं मोपयातं प्रतियन्तु विप्रा गङ्गा च देवी धृतचित्तमीशे द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथा इति कथाश्रवणरुचिः श्रीमद्भागवते प्रदर्शिता ।
पुनश्च भूयाद्भगवत्यनन्ते रतिः प्रसङ्गश्च तदाश्रयेषु इति भगवद्भक्तिप्रार्थनं च राज्ञ उपश्लोकितमिति द्रष्टव्यम् ॥

( २३६ ) भक्तिमतां यशोदानन्दादीनां पुत्रत्वेन भगवा-

**यथाकथंचिज्जातज्ञानानामपि भक्तिविधुराणां भगवत्प्राप्तेर्दुष्करत्वोक्तेः ।**

---

न्यथा सुखापस्तथा देहिनां देहाभिमानिनां तपस्विनान्न । यतो भगवानचिन्त्यैश्वर्यगुणसमुद्रसेतुस्ते तु तदभिमानिनोऽत स्ततसंबन्धाभावस्तेषाम् ।

ननु देहाभिमानिनस्तु सर्वे जीवाः कथं त एवेति निश्चितमिति चेत्सत्यम् । तथापि आत्मभूतसाहचर्यादत्र देहिपदेन त एवाभिप्रेताः । अल्पसेवापराधाभ्यामनुग्रहनिग्रहकारकत्वात् । अन्येषां प्रसङ्गाभावादपि । प्रसङ्गस्तु तत्प्राप्तिपराणामेव । तर्हि किं ज्ञानिनां सुखापः । नेत्याह । आत्मभूतानामनीश्वर भावपरीहारेणेश्वरभावलाभाद् ब्रह्मभूतानामपि न सुखापोऽपि तु दुराप एव । क्लेशोऽधिकतरस्तेषामित्यादि भगवदुक्तेः । कुतस्तेषां दुरापः सः । यतो गोपिकासुतः । ते त्वव्यक्तं ब्रह्म अपाणिपादमचक्षुरश्रोत्रं मृगयन्ते । तेन साक्षात परब्रह्मणा च गोपिकासुतत्वं स्वीकृतं यतस्ततस्तेन सह तेषां संबन्धाभावात् स तद्बुद्धेरप्यगोचरः । भक्तिमतां त्वहो सर्वेन्द्रियगोचर इत्याशयः।तथा च भक्तिरेवैनं नयतीत्यादिश्रुतिः ।

ननु ज्ञानी त्वात्मैव मे मतमित्यादिना स्तुतत्वात्तस्या ज्ञानमेव साधनमित्यादिना ज्ञानस्य भगवत्प्राप्तिसाधनत्वोक्तेश्च ज्ञानेनापि भगवान् सुखापः । भक्त्यैवेति कोऽयमाग्रह इति चेत् तत्रोच्यते—ज्ञानवैराग्ययो र्भक्त्यङ्गत्वाद् भक्त्यैव सुखापो भगवान् । न ज्ञानेनेत्यत्र ज्ञानमुपलक्षणम् । ज्ञानवैराग्याभ्यामिति तदर्थः । तथा च आत्मैवेदमित्यादि श्रुत्या आत्मरतिः स्वराड् भवतीति प्रदिष्टम् । तथा च शुद्धप्रीतिमत एव भगवान् सुखाप इति सिद्धम् । नात्र तिरोहितमिवास्ति ।

तुलसीदलमात्रेण जलस्य चुलुकेन च ।
विक्रीणाति स्वमात्मानं भक्तेभ्यो भक्तवत्सलइति
भक्त्या भगवतः सुलभत्वोक्तेश्च । भगवद्भक्तेः
संकल्पादेव ज्ञानोत्पत्तिरिति प्रबोधचन्द्रोदय-
नाटककृताप्युक्तम् । तथा हि विष्णुभक्तिं प्रति
श्रद्धा वाक्यम्-एवं देव्यां प्रबोधोदयाय गृहीत
संकल्पायाम् ।

मोहान्धकारमवधूय विकल्पनिद्रा मुन्मुच्य
कोऽप्यजनि बोध तुषाररश्मिः । श्रद्धाविवेकमति
शान्तियमादिभि र्यद्विश्वात्मकं स्फुरति विष्णु-
रहं स एषः (२३७) ।

सहसा कृत कृत्योऽस्मि भगवत्या विष्णुभक्तेः
प्रसादात् सोऽहमिदानी मित्यादि । एवं ज्ञानवि-
वेकविचारवैराग्यादीनां विष्णुभक्तिवशवर्त्तित्व-
मेव प्रस्फुटं प्रतिपादयन् प्रबन्धमुपसंजहार म-
हामिश्रः ।

अतः कलौ तपोयोगविद्या यज्ञादिकाः क्रियाः ।
साङ्गा भवन्ति न कृताः कुशलै र्वापि देहिभिः ।

---

(२३७) अत्यन्तावेशेनैकतापत्त्या ज्वलल्लोहादावग्निव्य-
पदेशवदत्राप्यभेदनिर्देश उपपादनीयः । एतद्व्यपदेशाभिप्रा-
येणैव च ।

इत्युक्ते ज्ञानादि तु कलौ महादुर्लभमेवेति तत उपरन्तव्यमेव । तस्मात् साधूक्तं श्रीशुकेन मुनिना। एतावानेव यजतामिह निश्श्रेयसोदयः। भगवत्यचलो भावो यद्भागवत सङ्गत इति ।

---

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।

एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखमिति ॥

श्री गीतासु एकत्वेनेत्युक्तम् । अत्रैव पृथक्त्वेनेत्युक्ते यथा यथं भेदाभेदश्रुतीनां समं प्रामाण्यञ्चोपपद्यते । अन्यथा तु श्रुतीनां मिथो विरोधात् महत् कदनमापद्येत । सर्वथा भेदाभावेऽभ्युपगते तु सेव्यसेवकमर्यादा स्वर्गनरकादि व्यवस्था च पुराणाद्युक्ता व्याकुला स्यात । ईशादभेदे तेषान्तदसंभवात् । वस्तुतः परमात्मा नित्यज्ञानादि लक्षणो भगवान् सदैकरूपो भक्तवात्सल्याद्यनेकगुणोल्बणो ब्रह्मविष्णु शिवनारायण रामकृष्णादि शब्दैश्च व्यपदेश्यः सर्वजीवनियन्ता । जीवस्तु पितुः पुत्र इव तदंशोऽनाद्यज्ञानपाशनिबद्धः कथंचित् प्राक्तनानेकशुभादृष्टबलाद्विविदिषया सद्गुर्वाश्रयणेनेशबुद्धया तद्भजनेन तत्कृपया स्वस्य साक्षात् कारादज्ञानपाशनिवृत्त्या तत्सायुज्य माप्नोति । न च तत्र प्रपञ्च गन्धोऽपीत्यत्र न कस्यापि विवाद इति । एतेन विद्यारण्यस्य आत्मनः साक्षित्वेऽप्यस्य ब्रह्मत्वमस्ति न वा । ब्रह्मत्वेऽपि तद्बुद्धया वेदितुं शक्यते न वा । शक्यत्वेऽपि तद्वेदनमात्रेण मुक्तिरस्ति न वेत्यादि संशयोपन्यासा मननदेशे सायुज्यदृष्ट्यैव संगच्छेरन्न तु अत्यन्ताभेदेन भगवति नितान्तनिर्वाणदृष्ट्येति द्रष्टव्यम् ।

वास्तविको मोक्षस्तु जीवस्य स्वस्वरूपापत्तिरेव । स्वस्वरूपं तु तस्य पूर्वोक्तप्रकारम् । सदा ज्ञानस्वरूपः श्रीकृष्णाधीनस्तदंश श्चेतनो ऽणुरक्षर स्तद्दासः क्लेशवर्जितो मायागुणातीत इति । जीवस्य एतादृशेन रूपेणैवाविर्भावो मुक्तिः । ज्योती रूपं संपद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रुतेः ।

यत्तु वेदान्तिनस्तत्त्वमस्यादि श्रुत्युपष्टम्भेन जीवब्रह्मणो र्वास्तवमेवाभेदं साधयन्ति । तथा हि—सच्चिदानन्दस्वरूपं ब्रह्म हसेव । यथा महाराजाधिराजो रङ्क श्चोभावपि मनुष्यत्व एक एव । तयोः स्वस्वरूपमात्रेण स्थितयो र्द्वयो र्दर्शने मनुष्यत्वमात्रेण भेदाभावप्रतीतिः तथा मलिनसत्त्वा ऽविद्योपाधित्वमल्पज्ञत्वं च जीवस्य विशुद्धसत्वमायोपाधित्वं सर्वज्ञत्वं चेश्वरस्य विशेषणं तदुभयविशेषणत्यागेन भागत्यागलक्षणया साक्षिपरिशेषाज् जीवेश्वरयोरपि भेदाभावेनैक्यप्रतीतिः । एवं च सति कथं भजनानन्दानुभवः । तत्र हि भेदापेक्षेति । तदसत् । यद्यविद्याविद्योपहितयो र्वास्तविकभेदो न स्यात् तदा परमकारुणिकस्येश्वरस्य तत्त्वमसीत्यादि श्रुतिशतैरपि तं प्रत्युपदेश एव न खलु संघटेत । ऐक्येऽप्युपदेशायोगात् । प्रातिभासिक व्यावहारिक सत्ताभेदेन भेदः । पारमार्थिकसत्तया त्वभेद एवेति तु तेषामपारिभाविकम् । न हि परिभाषामात्रेण किञ्चित् सिध्यति प्रतिषिध्यते वा । तत्त्वमसीति श्रुतेस्तु तस्य परमेश्वरस्य त्वं जीवो नानासंबन्धसंबद्धो ऽसीत्येवाक्षरार्थः । अतो भगवद्दास एव जीवो न तु ततोऽत्यन्ताभिन्न इति स्थितम् ।

एवं पराजितो मायावादी अन्यमतावलम्बं कृत्वा पुनः स्वमतं साधयति । सर्वजीवानां मध्ये यस्य जीवस्योक्तप्रकारेणाविद्याया आवरणविक्षेपाख्ये उभे शक्ती विनष्टे तस्य ब्रह्माभेदत्वं नान्यथयितुं शक्यते । यस्य तु ते उभे न नष्टे तस्य

नानात्वं गलग्रहायते एवेति । तच्च नेह नानास्ति किंचनेति प्रत्यक्षश्रुत्या विरुद्धम् । जीवेश्वरविभागेन सेव्यसेवकभावो निर्वहन् भक्तिम्प्रवर्त्तयेत् । तस्माद् द्वैतं कल्पितमित्यद्वैतसिद्धान्त एव वेदान्तसंमतः । तथा च सति यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमिति। यथा सोम्य मधुनि तिष्ठन्ति नानात्ययानां वृक्षाणां रसान्समवहारमेकतां गमयन्ति ते तथात्र विवेकन्न लभन्ते अमुष्याहं वृक्षस्य रसोऽस्म्यहमेवं खलु सोम्येमाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इत्यादयोऽभेदोपपादिकाः श्रुतयः साधु संगच्छन्त इति ।

यथा नद्य इत्यादि श्रुतेरयं भावः—यावन्नदीनां पर्जन्यजलाभावेन न समुद्रेण सह समागमो भवेत तावत्तासां नामरूपविभागः सजातीय विजातीय स्वगतभेदलक्षणं नानात्वं च यथास्यात्तथा यावद्विद्वान् सन् दिव्यं पुरुषं नाप्नोति तावद्भवतोक्तं नानात्वं स्यात स्वरूपप्राप्तौ तु न किमपीति । तथा चान्या श्रुतिः—

न निरोधो न चोत्पत्ति र्न बन्धो न च शासनम् ।
न मुमुक्षुर्न मुक्तश्च इत्येषा परमार्थतेति ।

अस्या न निरोध इत्यादि श्रुतेरर्थो यथा—यस्य जीवस्य प्रलये निरोधो नाश स्तिरोभावो वा न भवति नित्यं ब्रह्माभेदेन नित्यमुक्तत्वात् । न सृष्टावुत्पत्तिराद्यक्षणसंबन्धः प्रादुर्भावो वा न भवति। तस्मादेव नित्यत्वात् । स्थितौ स्थितिकाले च न शासनं विधिनिषेधलक्षणं वेदशासनं यतो न मुमुक्षु र्न मुक्तश्च। बन्धने सति हि तथात्वं घटेतेति । अथ तन्मतन्निराक्रियते—

तथापि ह्यऽद्वयं ब्रह्म न भवत्येव कर्हिचित ।
मुक्तोपसृप्यकथनाज्जीवो ऽणु र्ब्रह्मणः पृथगिति ।

अस्य तथापीत्यादि पद्यस्यार्थो यथा—यद्यप्य ऽस्त्यभेदः। तथाप्यभेदेनोपासनया अविद्या निवृत्या ब्रह्मप्राप्तावप्यद्वयज्ञा-नन्तु कर्हिचिदपि न भवत्येव। कुतः। मुक्तोपसृप्यकथनात् जीवस्तु मुक्तदशायामप्यणुरेव। यतो विभुत्वाभावात् ब्रह्मणः स पृथगिति।

भवता याः श्रुतय उपन्यस्तास्तासान्न नितान्ताभेदोऽर्थः। तासामन्यार्थत्वात्। तथा हि—यथा स्यन्दमाना इत्यादि श्रुतेरर्थोऽयम्—स्यन्दमाना नद्यो नामरूपे विहाय आगन्तुके नाम-रूपे विहाय स्वाभाविकेन जलाणुशब्दितेन नामरूपेण सहास्त-ङ्गच्छन्ति अदर्शनं यान्ति। अत्रास्तं गच्छन्तीत्यनेनैवा ऽभेदाभा-वत्वमुक्तं भवति। यतो नदीनां जलान्यणुरूपाणि मधुराण्येव समुद्रजले तिष्ठन्ति समुद्ररूपाणि न भवन्ति। ननु तत्कथं ज्ञायते। उच्यते। मेघजलवृष्टिमधुरत्वात्।

अष्टौ मासां निपीतं यद् भूम्याश्चोदमयं वसु।
स्वगोभि र्मोक्तुमारेभे पर्जन्यः काल आगतइति शुकोक्तेः।
आदित्याज्जायते वृष्टिरादित्ये च प्रलीयत इति श्रुतेश्च।
अतो यज्जलं सूर्यः स्वरश्मिभिरभि वर्षति।

तदेवाकर्षति। नान्यत्। नदीनां जलान्यणुरूपाण्येव समुद्र-जले तिष्ठन्ति। एतदभिप्रायेण श्रुतौ च नामरूपाद्विनिर्मुक्तः परात्परं पुरुषमुपैतीत्युक्तम्। एतदर्थाभिप्रायिका च यथा सो-म्येत्यादिश्रुतिसामञ्जस्येन नीयते। वयमपि सति संपद्यामह इत्यनेन मुक्तानामपि भेदसत्वमुक्तम्। इत्थं च जीवस्तु मुक्तद-शायामप्यणुरेव। विभुत्वाभावाद् ब्रह्मणः पृथगिति सिद्धम्।

न निरोध इत्यादि श्रुत्या तु जीवस्य वास्तवभगवद्दासस्वरूप-मुक्तं न स्वभेदः। तथा चायं तस्या भावः जीवस्य न निरोधा-दि र्न च स मुमुदवादि रित्येषा परमार्थता स्वाभाविक्यवस्था।

ननु ज्ञानं विना, कर्मणां भस्मसाद्भावं विना कथं मुक्तिरिति चेच्छृणु । आयुश्चिरमितरेषां तु हानिरनास्पदत्वादिति (२३८) ।

शाण्डिल्यसूत्रोपरि भाष्ये स्वप्नेश्वरेणोक्तम्-परम्परयैव ज्ञानाग्निना कर्मक्षय इति ।

अतः श्रीभगवद्भक्त्या त्रिविधानां तु कर्मणाम् ।
विनाशे कृष्ण सामीप्यात् न जीवस्य पुनर्भवः ।
कर्माण्यनादि सान्तानि न्यायाऽन्यायार्जितानि च ।
गुणकार्याणि जीवस्य तन्नाशे न पुनर्भवः (२३९) ।
इति सिद्धान्तोत्तमे प्रियादासेन चाभिहितम् ।
नानुव्रजति यो मोहाद् गच्छन्तं जगदीश्वरम् ।

---

भगवद्दासभावात् तस्य जन्ममरणाद्यवस्था तु कृष्णभक्तिजैः कामादिभिः कृतेति ॥

(२३८) आत्मरतौ सत्यां तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्य इति श्रुते रायुर्जीवनादृष्टं तन्मात्रमेव चिरं परभक्तौ सत्यामपि मुक्तिप्रतिबन्धकं तावदेव जीवन् मुक्तिः । इतरेषां धर्माधर्मयोर्णां हानिः । जीवना ऽदृष्टलये सति बुद्धेरत्यन्तालये भोगास्पदस्याभावाद् भोगाभाव एवेति ॥

(२३९) अतो जीवस्य क्रियमाणकर्मणि स्वतन्त्रत्वाद् भगवद्भक्त्या त्रिगुणात्मनां कर्मणां विनाशे श्रीकृष्णसामीप्या-ज्जीवस्य न पुनर्भवो न संसारः । भक्तियोगं विना न कदापि कर्मविनाश इत्यर्थः ॥

ज्ञानाग्निदग्धकर्मापि स भवेद् ब्रह्मराक्षसः ।

(रथयात्रायाम्)इत्यादौ तु परम्परयैव ज्ञाना-
ग्निदग्धकर्मत्वं नेयम् न तु साक्षादिति भक्तेः
सौकर्याभिप्रायेणैव चोक्तम्-

एतावदेव जिज्ञास्यं तत्त्व जिज्ञासुनाऽऽत्मनः ।
अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्वत्र सर्वदेति २४०

---

(२४०) आत्मनः स्वस्य श्रेयः साधनतत्वं जिज्ञासुना ज्ञातुमिच्छुना जनेन जिज्ञास्यं श्रीगुरुचरणेभ्यः शिक्षणीयमेतावदेव । त्वया तु मदनुग्रहादेव गम्यत इति भावः । किं तत् । श्रेयः साधनेषु कर्मज्ञानयोगभक्त्यादिषु मध्ये यदन्वयव्यतिरेकाभ्यां स्यात् सिध्यति स्थिरी भवतीत्यर्थः । तत्र तावत् स्वर्गापवर्गादेः कर्मज्ञानयोगादिभिः केवलैरसिद्धिः । तैर्विनापि केवलभक्त्यैव सिद्धेः । कर्मज्ञानयोगादयो ऽन्वयव्यतिरेकाभ्यान्नैव साधनानि स्युः । तथा हि दर्शितम्-त्यक्त्वा स्वधर्ममित्यादिना शवरी गजेन्द्रादीनां हि नीचयोनावपि सिद्धिर्जाता । भक्त्या तु केवलयैव सर्वाणि श्रेयांसि सिध्यन्ति । तया विना तु नैव किमपि हितं सिध्यतीत्यन्वयव्यतिरेकाभ्यां भक्तिरेव सर्वश्रेयः साधनत्वेन स्थिरी भवतीति । अन्वयेन विधिमुखेन व्यतिरेकेण निषेधमुखेन च यत् स्यात् । यत्सत्वे यत्सत्वमन्वयः । यदभावे यदभावो व्यतिरेकः । अन्वयेन यथा-अकामः सर्वकामो वा इत्यादि । एतेन हि भक्तियोगस्य तीव्रत्वमुपलम्भितम् । तदुक्तं-यत् कर्मभिर्यत्तपसेत्यादि । व्यतिरेकेण यथा-येऽन्येरविन्दाक्षेत्यादि देशकालविशेषाभाव माह-यत् स्यात् सर्वत्र सर्वदेति-सर्वत्र सर्वदेशेषु । सर्वदेति सर्वेषु कालेषु सर्वावस्थास्वपि यत्

यत्स्यात् सर्वत्र सर्वदेत्युक्ते ह्ययम्भावः। सर्वत्र सर्वदेशेषु सर्वदा सर्वकालेषु यत्स्यात् तज्जिज्ञास्यम्। तथा हि शुचावेव देशे शुचिः सन् कर्म कुर्यात्। शुद्धान्तःकरण एव ज्ञानं लभेत। शुचौ देशे प्रतिष्ठाप्य सुखमासन मात्मनः योगी योगं युञ्जीत। एवं कर्मयोगज्ञानादीनां न सार्वदिकृत्वम्। भक्तेस्तु सार्वदिक्ता। न देशनियमस्तत्रेत्याद्युक्तेः।

एतेन कर्मज्ञानवैराग्य योगाद्यभियोगपरित्यागेन भगवद्भक्तिरेव कर्त्तव्या। कर्मविशेषरूपं देवतान्तर भजनं च न कर्त्तव्यमिति सूपपद्यते। योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया। ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित्। निर्विण्णानां ज्ञान योगो न्यासिनामिह कर्मसु। तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कामिनाम्। इति (२४१) भगवदुक्तौ ज्ञानादिसमपाठस्तु न

स्यात्। गर्भे प्रह्लादादेः। बाल्ये ध्रुवादेः। यौवने अम्बरीषादेः वार्धक्ये धृतराष्ट्रादेः। मरणसमये ऽजामिलादेः। मरणोत्तरन्नारकिणामपि। यथा यथा हरेर्नामेत्याद्युक्तेः।

इत्थं भक्तेरेव सर्वहितसाधनत्वन्निर्धारितम्। कर्मज्ञानप्रभृतिषु सर्वेष्वधिकारेषु भक्तेर्व्याप्तिरुक्तैव। किरातहूणान्ध्रेत्यादिनेति।

(२४१) योगा उपायाः। कर्मब्रह्मदेवताकाण्डैः प्रोक्ताः।

भक्तिस्तत्तुल्यकक्षत्वद्योतनपरः । परं परयापि तेषां श्रेयः साधनत्वस्योपाद्यत्वात् । अन्यथा । वैकुण्ठपद संप्राप्ति र्भक्त्या केवलया हरौ । न ज्ञानेन नयोगेन भवेज्जन्म शतैरपी त्यन्वय मुखवाक्या ऽपेक्षया निषेधमुख वाक्यस्य प्रबलस्य व्याकोपापत्तेः ।

किरातहूणान्ध्रेत्यादि वाक्याच्छवरी गजेन्द्रादीनां मोक्षकथनात् न ज्ञानं न च वैराग्यं । प्रायः श्रेयो भवेदिहेति वचनाच्च भक्तियोगस्तु स्वयन्निरपेक्षः सुखसाध्यश्च । कर्मयोग ज्ञानयोगा वुभावपि दुःखसाध्यौ भक्तियोग सापेक्षौ चेति महदन्तरं न हि किरातादीनां ज्योतिष्टोमादिक्रिया नापि ज्ञानमिति । न ज्ञानं न च वैराग्यमित्यादिना हि यदा ज्ञानवैराग्यमिश्रभक्तिमाक्षिप्य शुद्धाभक्तिरेव स्थापिता तदा किमु वाच्यम् मद्भक्तिकिङ्करयो र्ज्ञानवैराग्ययोः स्वातन्त्र्येण साधनत्वाभिमानो मन्द इति ।

---

कर्म च निष्कामं श्रेयो विधित्सया मोक्षसाधनेच्छया अन्य उपायो नास्तीति काम्यकर्मादिकं व्यावर्त्तयति । तेष्वधिकारभेदमाह । इह एषां मध्ये कर्मसु निर्विण्णानां दुःखबुद्ध्या तत फलेषु विरक्तानामत एव साधनभूतकर्मन्यासिनां ज्ञानयोगः सिद्धिदः । अनिर्विण्णचित्तानां दुःखबुद्धिशून्यानामतः कामिनां तत्फलेष्वविरक्तानां कर्मयोग एवेति ।

भक्तिविरहितज्ञानात्तु भक्तियुक्त कर्मानुष्ठान-
मेव श्रेयो न तु संन्यासः ।

ज्ञानयोगसहस्राद्धि कर्मयोगः प्रशस्यते ।
कर्मयोगोद्भवं ज्ञानं तस्मात्तत् परमं पदमिति ।

मत्स्यपुराणात् । कर्मयोगेन पुण्योपचयेन घुणा-
क्षरन्यायात् भक्तिसंपन्न ज्ञानप्रभवइत्युत्तरार्द्धार्थः ।

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यतइति

गीतासु भगवदुक्त्यभिप्रायश्च भक्तिमार्गीय
संन्यासे । ततोऽपि निवृत्तिसाधनकर्मयोगस्या-
भ्यर्हितत्वोक्तिश्च ।

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन्निति

(२४२) युक्त्यनुप्राणितेत्यवसेयम् ।

स्वयं निःश्रेयसं विद्वान् न वक्त्यज्ञाय कर्म हि ।
न राति रोगिणोऽपथ्यं वांछतो हि भिषक्तमइति

---

( २४२ ) बुद्धिभेदं कर्मासक्तानां ब्रह्मोपदेशेन कर्मतो विचालनम् । सर्वाणि नित्यनैमित्तिकानि जोषयेत् सेवयेत् मन्दान् कर्म एव कारयेत् । अन्तरनुत्पन्नभक्तिज्ञानानां कर्म-त्यागे पतनमेव स्यादित्यर्थः । भक्तिविरहित कर्मज्ञानादिभि र्भक्ति प्रादुर्भावस्या नैकान्त्येऽपि पतनाभावान्नरकपरिहा-रस्तु स्यादेवेति भावः ।

उक्तिस्तु भगवद्धर्मलक्षणा व्याप्तकर्मोपदेशनिषेधपरत्वेन व्याख्येया । अन्यथा जोषयेदित्यादि भगवद्वचनविरोधः । भक्तिविरहिणोऽपि मोक्षस्य लभ्यत्वस्वीकारे तु मयि भक्तिर्हि भूतानाममृतत्त्वाय कल्पत इति ।

भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सतामिति
मामेव निरपेक्षेण भक्तियोगेन विन्दतीति ।
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्व ऽनन्यया ।
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते २४३

एवं मनः कर्मवशं प्रयुङ्क्ते अविद्ययात्मन्युपधीयमाने । प्रीति र्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावदित्याद्युक्तीनां (२४४) ।

---

( २४३ ) येनेमे निर्जिताः सौम्य गुणाजीवेन चित्तजाः ।
भक्तियोगेन मन्निष्ठो मद्भावायोपपद्यते ।
तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञान संभवम् ।
गुणसङ्गं विनिर्धूय मां भजन्ति विचक्षणा इत्यादि
चात्रानुसन्धेयम् ॥

( २४४ ) एवं मन इत्यादि वचनैरुपाधिनिवृत्त्या ब्रह्मसंपत्तिरूपमोक्षस्य भगवद्भक्तिसाध्यत्वं स्मर्यत इति ज्ञेयम् । तदयं संक्षेपः—मोक्षस्तु ब्रह्मणो भिन्नानामप्यभिन्नानां जीवानां बन्ध निवृत्त्या भवति । ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतेः । बन्धवृत्त

विरोधो दुर्वार एवेति । ब्रह्मसंस्थो ऽमृतत्वमेतीति श्रुतौ संस्था शब्दस्य भक्तिपदार्थत्वाच्च भक्त्यैव मोक्ष इति सिध्यति । तथा च शाण्डिल्यसूत्रम्-तत्संस्थस्यामृतत्वोपदेशादिति (२४५) ।

अत एवोक्तम्-भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते न यत्न इति ।

ननु अस्तु भक्त्या मुक्तिः किन्तु सा भक्तिर्ब्रह्म संस्थात्मिका निर्गुणब्रह्मनिष्ठा ऽरूपा ज्ञेया । तेन ब्रह्मज्ञानविरहितावतारानुरक्तिः कथं संसारसागरतारण तरणिः स्यात् प्रत्युत सगुण ब्रह्मनिष्ठानां महद्वै भयमूचिर इति (२४६) वचनाद्

---

सदा स्वच्छस्फटिकस्येव सदा मुक्तस्योपाधिकृतान्यथाप्रतीतिः । ज्ञातेऽपि स्फटिके कुसुमाद्विवेकेन स्फटिकभ्रमनिवृत्तेरदर्शनात् प्रकृतिभ्रमस्य सोपाधिकत्वाद् भ्रमनिवर्त्तकत्वासंभवाच्च । तस्माद् बन्धनिवृत्तिर्न ज्ञानेन किन्तु भक्त्यैव भजनीयानुग्रहतो ऽनर्थ निवृत्ते र्लोके दर्शनादिति ॥

( २४५ ) तस्मिन्नीश्वरे संस्था भक्ति र्यस्य स तथोक्तः । तस्यामृतत्वं फलमुपदिश्यते । ब्रह्मसंस्थो ऽमृतत्वमेतीति । तस्मान्निष्फलत्वगौणफलत्वनिबन्धनात्तद ऽजिज्ञासा परिहृता भवतीति ॥

( २४६ ) एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवतीति श्रुतेरिति भावः । भेदाभेदमते त्वेतच्छ्रुत्यर्थस्तु आत्मनः

भयावहैव सा स्यादिति चेन्न । तद्वाक्यशेषात् प्रादुर्भावेष्वपि सेति शाण्डिल्यसूत्रात् (२४७) ।

एव परस्यापीत्यादिना पद्येन व्याख्यातः । अत्र–

यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।
सूक्ष्मात् सूक्ष्मतरन्नित्यं तत्त्वमेव त्वमेव तद् ।
जाग्रत् स्वप्न सुषुप्त्यादि प्रपञ्चं यत्प्रकाशते ।
तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ।
अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः ।
न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि ।
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद् ब्रह्माद्वयमस्म्यहम् ।
अपाणिपादो ऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः
अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित् सदाहम् ।
नित्यशुद्ध विमुक्तैक मखण्डानन्दमद्वयम् ।
सत्यं ज्ञानमनन्तं यत परं ब्रह्माहमेव तत् ।
इत आत्मा ततश्चात्मा सर्वमात्ममयं जगत् ।
न तदस्ति न यत्राहं न तदस्ति न यन्मयि ।

इत्याद्यभेदबोधकवचनजातमनुसन्धयम् । भक्तिमते तु भावभक्त्यान्तद्गतार्थम्; । भगवता च सर्वश्रुतिसारार्थ भूतासु गीतासु कुत्रापि त्वं ब्रह्मासि मद्रूपोऽसीति नोक्तम् । बोधाभावेन भक्तोऽसि मे सखा चेत्याद्येवोक्तमतो वेदानां त्रैगुण्यात सात्विकाद्वैत ज्ञानदानेन वेदान्ते निर्गुणज्ञानाधिकारी जीवः कृतः ।

कैवल्यं सात्विकं ज्ञानं मन्निष्ठं निर्गुणं स्मृतमिति भगवदुक्तेरिति ॥

( २४७ ) सा परा भक्तिः प्रादुर्भावात्स विषयापि भवति ।

तथा च जीवब्रह्मणोरभेद प्रतिपत्तिरेव ब्रह्म ज्ञानमिति न भ्रमितव्यम् किन्तु पूर्णत्व पूर्णावतारत्व तदभिन्नत्वादि प्रतिपत्तिरपीत्यगत्याभ्युपेयम् । अतो ऽवतारेषु पूर्णा भक्तिर्भवत्येव निःश्रेयसकरी (२४८) ।

---

कस्मादिदं ज्ञायते ? वाक्यशेषात् । देवान् देव यजो यान्ति मद्भक्ता यान्ति मामपीति प्रतिज्ञातार्थं स्थिरीकरणाय देवतान्तरभक्तिनिन्दायां वाक्यशेषो भवति । यो यो यां यां भक्त इत्येतावदुक्तार्थसिद्धौ तनुपर्यन्तनिर्देशाद् भक्ते स्तेनयात्मविषयत्वं तात्पर्यमुन्नीयते । प्रकरणं च भक्तेरेवेति । अत्र—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ।
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ।

इत्यादीनि वचनानि उपन्यसनीयानि ।

न च मच्छब्दो ऽत्र निर्गुणब्रह्मण एव वाचकः । यो यो यां यां तनुमित्यादिना तनुशब्दनिर्देशेन सगुण ब्रह्म प्रस्ताव सूचनात् ।मय्यावेश्य मनो ये मामित्यादिना सगुणमेव मच्छब्देन परामृश्य तद्भक्तेरेवाधिक्यकथनात । अतो ऽवतारेषु पूर्णा भक्तिर्भवत्येव । यतो ऽवताराः पूर्णाः सर्वे पूर्णाश्शाश्वताश्च देहास्तस्य महात्मन इत्युक्तेः ॥

( २४८ ) तज्जन्मादि ज्ञानतो विशिष्टफलमपि श्रूयते । यथोक्तं शाण्डिल्यसूत्रे—जन्मकर्मविदश्चाजन्मशब्दादिति । अस्य जन्मकर्मेत्यादि शाण्डिल्यसूत्रस्यार्थो यथा—भगवतो जन्म

नृणा न्निःश्रेयसार्थाय व्यक्ति र्भगवतो नृप ।
अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मन ( २४९ )

---

वतारः । कर्म = दैत्यवधभक्तोद्धारादिकम् । तज्ज्ञानवतश्चकारात् परमात्मरूपता विदो मनो मालिन्यनिरासोल्लासादि द्वारा सा परा भक्ति र्भवति । अजन्मने जन्माभावलक्षणफलाय । कुतः शब्दात् ।

जन्म कर्म तु मे दिव्य मेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति चार्जुनेति-

भगवद्वचनात् । तत्रैव—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममाययेति—

जन्मकर्मवेदनस्य साक्षादमृतफलस्य लाभोक्त्या भक्तिद्वारैव कृतार्थतेति भावः ।

यदा यदा हि धर्मस्य ग्लानि र्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यह मित्याद्यनेकानि

प्रमाणानि ज्ञातव्यानीति ।

तदेवोक्तन्दशमे—जीवस्य यः संसरतो विमोक्षणं न जानतोऽनर्थवहाच्छरीरतः । लीलावतारैः स्वयशः प्रदीपकं प्रज्वालय त्त्वा तमहं प्रपद्य इति ।

अस्य जीवस्येत्यादि पद्यस्यार्थो यथा—तं त्वा त्वां श्रीकृष्णमहं शरणं प्रपद्ये व्रजामि । तं कम् । यस्त्वविद्यान्धरूपजीवस्या ऽविद्यातमो निवृत्तये लीलावतारै र्मत्स्यादिभिः स्वयशः प्रदीपकं प्राजवालयत प्रदीपितवान् । कथं भूतस्य जीवस्य संसरतः संसारिणः । पुनः कथंभूतस्य । अनर्थवहाच्छरीरतः स्वदेहाद् विमोक्षणं विमोक्षणोपाय मजानत इति ॥

( २४९ ) भगवतो ऽचिन्त्यैश्वर्य गुणस्याभिव्यक्तिः प्राकट्यं

इत्युक्तेः । भक्ता निर्गुणब्रह्म लाभं नेच्छन्त्येव केचित्। तदुक्तं कपिलेन-

नैकात्मनां मे स्पृहयन्ति केचिन्मत्पाद सेवाभिरता मदीयाः । येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणीति ।

सगुणब्रह्मानादृत्य निर्गुणब्रह्मनिष्ठया अर्द्धजरती न्यायेनार्द्धसेवनेनैव न कस्यचिन्निस्तारः । तादृशानेव निर्गुणब्रह्मनिष्ठया मुक्तंमन्यान् मुक्तांल्लक्ष्यीकृत्य येऽन्येऽरविन्दाक्ष विमुक्तमानिन इत्याद्युक्तम् । अतो मुक्ता अपि भगवद्भक्तिं विना भगवन्महिम्न स्तत्त्वन्न जानन्तीति सिद्धम् । वस्तुतस्तु भक्तिमानेवोत्तमज्ञानी । निर्गुणब्रह्मज्ञानस्य ब्रह्माहमस्मीति भावनारूपस्य

---

केवलं प्राणिनां निःश्रेयसाय श्रेयोऽवधिभूत परममङ्गलाय मोक्षायेति यावत् । कीदृशस्य भगवतः । अप्रमेयस्य प्रमाणातीतस्य । यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेति श्रुतेः । पुनः कथंभूतस्य भगवतः । निर्गुणस्य मायागुणातीतस्य । सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः । अव्ययस्य सदैकरसस्य । गुणात्मन आनन्दादिगुणाश्रयस्येति ।

ध्यातु मिच्छन्ति यद्रूपं भक्ता भगवतो मुने ।

तदेव करुणास्तेषां प्रभु दर्शयतीच्छयेत्यादि वचनमत्र स्मरणीयम् ॥

भावभक्त्यात्मकस्य सगुण ब्रह्म भक्तिप्रदस्य सा-
त्त्विकत्वात् तत्साधनत्वमेव । तत एव ।

परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोक लीलया ।
गृहीत चेता राजर्ष अख्यानां यदधीतवानित्यु-
क्तिः । संगच्छते शुकविषये-साध्यं तु सगुण ब्रह्म
ज्ञानमेव तस्येति निश्चितम् । तच्चोक्तं प्रिया-
दासेन-

तथा सत्यपि हंसानां स बोधो धर्म एव हि ।
सोऽप्यश्रेष्ठो हि चान्येषां नैवेति ह्यात्मविन्मत
मिति (२५०) ।

---

(२५०) अहं ब्रह्मास्मीति भावना रूपो यः स परमहं-
सानामेव धर्मः । आत्मानं चिन्तयेदेक मभेदेन मया मुनिरिति
भगवदुक्तेः परं सोऽपि धर्मोऽश्रेष्ठः । श्रेष्ठस्तु तद्दासरूपत्वेना-
त्मानुसंधानरूपः ।

विष्णोरनुचरत्वं हि मोक्षमाहु र्मनीषिण इत्युक्तेः ।
ज्ञानिनस्त्वहमेवेष्ट इत्यादि भगवदुक्तेश्च । हंसेतरेषान्तु नैव
स धर्मः । तेषां तु साधनकालेऽपि सिद्धावस्थायामपि भगव-
द्दासत्वेन स्वात्मानुसन्धानरूप एव धर्मः । तथा भक्तो मम प्रिय
इति भगवदुक्तेः । तदुक्तम् ।

सेव्यसेवक भावो हि सदा सर्वत्र दृश्यते ।
सेवनीयः सदानन्तः सेवको जीवसंज्ञक इत्यात्मविदां
मत मिति ।

निर्गुणब्रह्मनिष्ठया सगुण ब्रह्मभक्तिस्तया त-
ज्ज्ञानमितिक्रमश्च ।

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ।
भक्त्या मामभिजानाति यावन्यश्चास्मि यादृशः ।
ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरमिति
(२५१) । गीतासु स्वयमेव भगवता निर्दिष्टः ।
ततः परं को विवादः कोविदानाम् । तथा च
शाण्डिल्यसूत्रम्-प्रागुक्तं चेति (२५२) ।

---

(२५१) ब्रह्मभूतो ब्रह्मस्वरूपः पुरुषो मे परां निर्गुणां भक्तिं लभते प्राप्नोति । तया भक्त्या मामभिजानातीति परा सात्त्विकाद्वैतज्ञानेन ब्रह्माहमस्मीत्यभेदान्वयेनाहं ज्ञातः । पुनर्भक्त्या यावानपरिच्छिन्नः सच्चिदानन्दविग्रहो मां जानाति । पुनर्भक्तिप्रभारूपेण निर्गुणज्ञानेन परया भक्त्या तत्त्वतो यथार्थतो नित्यसेव्यत्वेन मामद्वयं नित्यसेवकत्वेन स्वात्मानं च ज्ञात्वा तदनन्तरं मां विशते वनं विशतीतिवत् प्राप्नोति । अयं भावः-साधनरूपया गौण्या भक्त्या ज्ञानम् । तेन प्रौढ़या भक्त्या भगवन्तं विशतीति ॥

(२५२) भक्त्या मामित्यस्मात् पूर्वं ब्रह्मभूयाय कल्पतइत्यभिधाय-

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते परामिति ।

यत उक्तं तत इदं लभ्यते-ज्ञातब्रह्मणो ज्ञानप्रयोजना भावाद्युक्त मनुवादत्वमिति ।

तथा च एवं पश्यन्नित्यादि श्रुतौ सनकादि समाना भगवद्भक्ता एव मुक्ता उद्दिष्टाः । ते हि भगवति परमात्मपरब्रह्मभावेना ऽऽनन्दनीयाभिमानिनो निर्ममा ज्ञानिभक्ताः। तेषां तदभिमानित्वेऽपि तत्र निर्ममत्वम् । सत्यपि भेदापगम इत्यादिना तादृशभक्तेरेव शङ्करेणोक्तेः । ततश्चन्द्रदर्शनवत्तेषां ममतां विनापि भगवद्दर्शनं प्रीतिदं स्यात् । एतेन श्रीकृष्णचन्द्रस्य चन्द्रवद् गुणैः किं करणीयमस्माकमित्युक्तिः परास्ता । आनुकूल्यं चात्र प्रणयस्तुत्यादिना ज्ञेयम् । तेषां प्रीतिश्च ज्ञानभक्त्याख्या ज्ञेया । ज्ञानत्वं च तस्या ब्रह्मत्वेनैवानुभवात् । न तु वात्सल्यादिना । एषैव भक्तिः तत्र तत्र शान्त्याख्ययोच्यते ये तु वात्सल्यादिना अनुबुभूषन्ति भगवन्तं ते तस्यै मुक्तये न स्पृहयन्ते । तेषां स्वाभाविकी

परा भक्तिः सैव मुक्तिरनुत्तमा (२५३) ।
इत्याह श्रुतिसारज्ञो मुनीशो व्यासनन्दन इति ।
निश्चला त्वयि या भक्तिः सैव मुक्तिर्जनार्दन ।
मुक्ता एव हि भक्ता स्ते न संदेहो हरेः क्वचित् ।

---

( २५३ ) अनुत्तमेत्युक्त्या मुक्तेरप्याधिक्यं भक्तेर्दर्शितम् । किमुत वक्तव्यं ज्ञानादेवेति ॥

इत्याद्युक्तिभ्यः । श्रीमद्भगवत् प्रीते रेवापवर्गत्वात् परमभगवदनुग्रहमयत्वाच्च स्वतः परमपुरुषार्थरूपत्वेऽपि सर्वेषां सर्वपुरुषार्थ साधनत्वाच्च। अत एव कैवल्य संमतपथस्त्वथ भक्तियोग इत्यत्र टीकाकारै रप्युक्तम्-कैवल्यमेव संमतः पन्था यो भक्तियोग इति । स्वयं कैवल्याख्यफलरूपापि भक्तिः पन्थाः पुरुषार्थ साधनोपाय इति हि तदाशयः । तदेवं भगवत् प्राप्तौ भक्तिरेव हि कारणन्न ज्ञानं केवलमिति निर्णीतम् । अत्र केवलमित्युक्तेरयमाशयः ।

विद्ययात्मस्मृतिः कार्या संपद्यार्थिषु चार्पणम्।
सुसंपद्द विपदो धैर्यमीशसांनिध्यकारकमित्यादिषु ( २५४ ) ।

---

( २५४ ) श्रीमद्भागवताश्रयाभिधे ग्रन्थे विद्ययात्मस्मृतिरित्यादि प्रक्रम्य ईशसान्निध्यकारकमित्यस्मादुत्तरं प्रथमस्तु गजेन्द्रेण द्वितीयः क्षीर मन्थने । तृतीयो बलिबन्धने श्रद्धया लभ्यते यश इति पठितम् । तत्र प्रथमो धर्मो गजेन्द्रेण प्रदर्शितः । त्रिकूटे देवरत्नौषधि स्वबलबान्धवादि सत्वेऽपि हरिस्मरणं विना गजेन्द्रस्य हि कष्टनिवृत्तिर्न जाता । द्वितीयः समुद्रमन्थनेन हरसारस्यासुरपर्यन्तं विषसुरादि विभागो भूतः । तृतीयो धर्मो बलिबन्धनेन धैर्येणेश्वरेण सर्वदा गदापाणिना जनार्दनेन हि बलिद्वारि पातालपुर्यां स्थीयते । श्रद्धया तु यशो

विद्याशब्दशब्दितस्य ज्ञानस्यापि आत्मस्मृति द्वारा ईशसांनिध्यकारकत्वोक्ते र्भक्तिमार्गे ज्ञानन्न सर्वथोपेक्षणीयमिति । एवं च सगुणत्वेन प्रद-र्शितस्यापि भगवद्रूपस्य निर्गुण ब्रह्म स्वरूप-भिन्नत्वे प्रमाणाभावाद् भगवदुपासकानां कैव-ल्यं सर्वोऽपरि वरिवर्त्तीत्यध्यात्मतत्त्वावगामिनां मुनीन्द्राणां सिद्धान्तः । उक्तं चाभियुक्तै र्भगव-द्धर्मविवेके । यथा–गुणातीतो भगवद्भक्तो जीवन् मुक्तो भवतीति ।

एतादृशस्यैव भगवद्भक्तस्य प्रारब्धभोगोऽपि निवर्त्तते । तस्य भगवदुत्थ सुखदुःखभागित्वात्। प्रारब्धं हि मायाकृतम् । सा च तस्मात् निवृत्ता । ततो ऽमायिकविग्रहत्वाच्चैतन्यघनभूतदेहपिण्ड-त्वाच्च तस्य कुतः प्रारब्धभोगः संभवेत् । चैत-न्यघनभूतदेहपिण्डा एव च मुक्ताः । अपि लीला-विग्रहं कृत्वेत्यत्र मुक्ता इति पदेनाभिप्रेताः । यथा श्रीकृष्णस्य चैतन्यघनविग्रहत्वेऽपि मूढानां मा-यिकाकारप्रतीति र्भ्रान्ति स्तथा जीवन्मुक्तभगवद्-

---

लभ्यते समुद्रेणात्ममन्थनं कारयित्वा दत्तन्तस्मान्न यशः प्राप्तिः । अत्रायं धर्मः कदापि न विस्मरणीयः–

कृष्णाश्रितानां सर्वत्र सुखमेव सदा भवेत ।
ध्रुवमूर्द्धोर्ध्वमारभ्याऽधोऽधः शेषस्य संस्थिते रिति ॥

भक्तस्यापि स एवेत्यादि प्रत्यभिज्ञादेरिति ज्ञेयम्। तस्य स्थितौ निमित्तं च भगवत इव भगवद्भावितसंप्रदायप्रवृत्त्यादिकम् । शिवाय लोकस्य भवाय भूतये य उत्तमश्लोकपरायणा जनाः। जीवन्ति नात्मार्थमिति श्रीमद्भागवतोक्तेः ।

त एते भगवत्प्राप्ता भक्ताः ।

अन्योन्यं भावयन्तो मे भक्ता मद्भाव मेव हि ।
प्रेमयुक्ताश्च मद्भावं प्राप्नुवन्त्यचिरान्नृप (२५५)।

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मान्नित्यं तुष्यन्ति च रमन्ति च ।
तेषु प्रीतोऽस्मि राजेन्द्र मद्भक्तान् पूजयन्ति ये

इत्यादिना महानुग्रहपूरितपरमोपदेशाऽमृतझरी मुपाश्रित्य विद्यमाना विद्यावन्तः सिद्धाभीष्टा निश्चितपरमसुखरूपा उद्दिष्टाः ।

---

( २५५ ) तथा दुर्योधनं प्रति श्रीभगवानेव—

यस्तान् द्वेष्टि स मां द्वेष्टि यस्ताननु स मा मनु ।
ऐकात्म्यं मां गतं विद्धि पाण्डवै र्धर्मचारिभिरिति ।

अत्र प्रकरणे ऽम्बरीषकथैवोदाहरणम् । परस्परं भावयन्तः श्रेयः परमवाप्स्यथेति गीतावचनं चात्रानुसंधेयम् परस्परमन्योन्यं स्वात्माभिन्नत्वेन भावयन्तः परं श्रेयो भगवत्प्राप्तिलक्षणमवाप्स्यथेति तदर्थः ।

एवं सत्युपायान्तर सहस्राक्रान्त कोटिजन्मभिरपि लब्धुमशक्या मुक्तिर्भगवद्भक्त्यैव सुखलभ्येति निर्णयः ।

यदा च भगवद्भक्तिं विना ब्रह्मज्ञानेनापि न मुक्तिस्तदा साधुशब्दज्ञानप्रमाणादिज्ञानादिना मुक्तिरिति वदन्तस्तन्तमुपायं परम्परयैवाभिप्रयन्ति । नेतरथा । तस्माद् भगवद्भक्तबीजैव राजति मुक्तिरिति सिद्धम् ॥यतः ॥

अतोकामैः सकामैर्वा स सेव्यः स्त्रीनरादिभिरिति

मोक्षे भगवतो ह्लादिन्याख्य तदीयस्वरूपशक्त्याऽऽनन्दरूपैव भक्तिः। तत्र नास्माकं द्विरुक्तिः। तया खलु भगवानपि स्वरूपानन्दमनुभवति। शेषशायिनो योगनिद्रापदेन तत्कथनस्यैव शास्त्रेष्वभिप्रेतत्वात् । सर्वशेषी सन्नपि तेनानन्देनानन्दविशेषी च भवति भगवान् । भक्तनिष्ठया भक्त्या तं तमानन्दं भक्तानप्यनुभावयति । परं तस्यानन्दस्य भगवति पूर्णतया सर्वदैव वर्त्तमानत्वेनाऽतिशयानुपपत्तेश्चैवं विवेचनीयम्। तस्या ह्लादिन्या एव कापि सर्वानन्दातिशायिनी वृत्तिर्नित्यं भक्तवृन्देषु निक्षिप्यमाणा भगवत्प्रीत्याख्यया भक्तबुद्धिवृत्तिरूपेण वर्त्तते । ततस्तद-

नुभवेन न केवलं भक्त एवानन्दम्भजते अपि तु सर्वज्ञतया भगवानपि श्रीमद्भक्तेषु प्रीत्यतिशयं भजत इति । तस्माद् भगवत्प्रीतिरूपा वृत्तिर्भगवत्स्वरूपानन्दसारभूता यद् आनन्दपराधीनः श्रीभगवानपीति साधु ।

भक्तेर्ह्लादिन्यभेददृष्ट्या च ।

साधवो हृदयं मह्यं साधूनां हृदयन्त्वहम् ।
मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपी-

त्यादय उक्तयः (२५६)संगमनीयाः ।

---

(२५६) संतुष्टः सततं योगी यतात्मा दृढ़ निश्चयः ।
मय्यर्पित मनो बुद्धि र्यो मद्भक्तः स मे प्रियः ।
यस्मान् नोद्विजते लोको लोकान् नोद्विजते च यः ।
हर्षामर्ष भयोद्वेगै र्मुक्तो यः स च मे प्रिय इत्यादि-

वचनानि चात्रानुसन्धेयानि । साधूनां लक्षणं यथा-

तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।
अजात शत्रवः शान्ताः साधव स्साधु भूषणाः ।

अस्य साधूनामित्यादि श्लोकस्यार्थो यथा—तितिक्षवः शीतोष्णादि द्वन्द्वसहाः क्षितिरिवापराधिन्यपि करुणापराः । क्षमा शीलाः उपकारकाः न जाताः कुत्रापि शत्रवो येषाम् । कामाद्यूर्मिरहिताः । सदाचारपराः । साधु शीलमेव भूषणं येषां न तु मणिकाञ्चनादि मयं विषयिजनप्रियमिति ।

सदाचारपरा इत्युक्ते सन्तश्च त आचाराश्चेति सदाचारा इति कर्मधारयसमासः । कतिपय आचाराः प्रदर्श्यन्ते प्रसङ्गात्

श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः ।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् ।

इत्यादौ श्रोत्रियत्वं श्रुत्यध्ययने संवृत्तेऽपि सदाचारेणैव । न तु अनाचारेण । इत्थं सत्यपि यदुक्तम् ।

न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् ।
पित्र्ये कर्मणि तु प्राप्ते परीक्षेत प्रयत्नत इति ।

तद् दैवे कर्मणि पितृकर्म तुल्यविशेषपरीक्षोपेक्षणा तात्पर्यकं न तु सर्वथोपेक्षार्थकमिति ।

आचारप्रभवो धर्मः श्रुत्युक्तः स्मार्त्त एव च ।
आचाराद्विच्युतो विप्रो न वेदफलमश्नुते ।
आचारेण तु संयुक्तः संपूर्णफलभाग्भवेत् ।
आचाराल्लभते ह्यायुराचारा दीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्य माचारो हन्त्यलक्षणम् ।
दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुखभागी च सततं व्याधितो ऽल्पायु रेव च ।
आचारहीनन्न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः ।
छन्दांस्येनं मृत्यु काले त्यजन्ति नीडं शकुन्ता इव जातपक्षाः ।
आचारः कुलमाख्याति वपुराख्याति भोजनम् ।
वस्त्रं विभवमाख्याति देशं प्रश्नं च भाषणम् ।

अथाचार प्रसङ्गाद्भोजन विषये लौकिक विचारोऽप्यल्पशो निरूप्यते ।

सर्वदेशेष्वनाचारः पथि ताम्बूल भक्षणम् ।
शूद्राणामथ यो भुङ्क्ते स भुङ्क्ते पृथिवी मलम् ।
मलं नृणां स पिबति मलं भुङ्क्ते जनस्य च ।
शूद्रकर्मस्वथैतेषु यो भुङ्क्ते निरपत्रपः ।
अभोज्य भोजनं भुक्त्वा भयं प्राप्नोति दारुणम् ।
नाप्येक पङ्क्त्या मश्नीयात संपन्नै र्भ्रातृभिः सह ।

को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ।
आलापाद् गात्रसंस्पर्शात् निवासात् सह भोजनात् ।
संचरन्तीह पापानि तैलबिन्दु रिवाम्भसि ।
शूद्रान्नं शूद्रसंपर्कः शूद्रेण च सहासनम् ।
शूद्राज्ज्ञाना ऽऽगमश्चापि ज्वलन्तमपि पातयेत् ।
दुराचारस्य विप्रस्य निषिद्धाचरणस्य च ।
अन्नं भुक्त्वा द्विजः कुर्याद्दिनमेकमभोजनम् ।
नाद्याच्छूद्रस्य पक्वान्नं विद्वान ऽश्राद्धिनो द्विजः ।
आददीताममेवास्माद ऽवृत्तावेक रात्रकम् ।
द्विजशुश्रूषणरतान् मद्यमांसविवर्जितान् ।
स्वकर्म निरतान्नित्यं ताञ्छूद्रान्न त्यजेद् द्विजः ।
शुष्कान्नं सर्वतो ग्राह्यं भोजनं न समाचरेत् ।

इदमेव स्मृतिवचनं पक्वान्न भोजनस्य सर्वथा निषेधपरमित्य- वधेयम्-तथापि जलाग्नि लवणैः संस्कृतमन्नं स्वल्पेनैव व्यतिक्र- मेण दूषितं भवति। यथा सूपपायसादि । सूपे हि त्रयाणां जलाग्निलवणानां संस्कारः समान एव । पायसे परमान्ने तु जलाग्निभ्यां द्वावेव संस्कारौ । तथा भक्तेऽपि द्वावेव । ततस्त- दन्नमन्यस्य दूषितं भवति ।

एकेनान्नं फलं द्वाभ्यां त्रिभिः कन्दन्न दुष्यतीति ।

वचनात् । अत एवोक्तम्--

घृतपक्वं पयः पक्वं पक्वं केवल वन्हिना ।
तदन्नं फलवद् ग्राह्यं न दोषो मनुरब्रवीदिति ।

तथा नवीनान्नं चणकमटरादिकं जलसंस्कारं विना घृत एव भर्जितं शुद्धम् । लवण संस्कृतन्तु तद्भक्तमिवाग्राह्यम् । आम्रादि फलमपि जलाग्नि लवणैः संस्कृतं भक्तमिवाग्राह्यमिति वि- चार इति ।

ह्लादिनी सन्धिनी संविदिति विष्णोरखिलशक्तय इति विष्णोरुक्तासु शक्तिषु मध्ये सन्धिनी सत्तापरपर्याया शक्तिर्जड़ सामान्येन वर्त्तते । जडेष्वपि तदनुगमात् । संविच्च दुःखिजीवेष्वपि साधारणी । ह्लादिन्येव तु सर्वदा पुरुषार्थरूपेतीश्वरत्वस्य सर्वतो व्यावर्त्तिकेति सैव श्रीभगवतो विशेष इति ह्लादिनी भक्तिर्विजयते सर्वोत्कर्षेण वर्त्तत इत्यर्थः ।

एतल्लाभार्थं योगो ज्ञानं च भक्त्यै साध्यमानमनुरुध्यत एव । न विरुध्यत इति चेदस्तु । वासना वैचित्र्यात् । तथा च शाण्डिल्यसूत्रम्—योगस्तूभयार्थमपेक्षणात् प्रयाजवदिति (२५७) ।

इत्थं सत्यपि योगादि मिश्रासौभक्तिः शुद्धाया भक्तेर्न समकक्षेति निर्णयः । तदयन्निष्कर्षः—अतो वै स्वात्मनात्मानं तद्धास क्लेशवर्जितम् ।

---

( २५७ ) योगः पुनर्ज्ञानार्थं भक्त्यर्थं च भवति । समाहित मनस्कताया उभाभ्यां भक्तिज्ञानाभ्यामपेक्षणात् । ननु गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यादिति प्रधानाङ्गं योगः । कथमङ्गाङ्गमित्यत आह । प्रयाजवदिति । यथा प्रयाजो वाजपेयाद्यङ्गन्तदीयदीक्षणीयादेरङ्गं भवति तद्वत् । तदङ्गता बोधकप्रमाणाविशेषात् । केवलं ज्ञानार्थं योगोऽनुष्ठानप्रसङ्गेन भक्तिमुपकरोतीति ॥

मत्वान्यत्तु हरिं सर्वं ज्ञात्वा तं विभजेद्बुधइति विभजेत् विभागेन पृथक्त्वेन विशेषेण वा भजेत् ॥

अथ प्रमेयप्राप्त्युपायस्वरूपनिरूपणम् ।

चतुर्थे ऽस्मिन् प्रकरणे कृष्णभक्ती परापरे ।
वर्ण्येते तद्गुणाङ्गानि नामरूपाणि तत्त्वतः ।

एतावता प्रमेय प्राप्त्युपाय निर्णयग्रन्थेन निर्णीतोऽयमर्थो यद् भगवद् भक्त्यैव करकमलामलकीयते मुक्तिरिति । सा च भक्ति र्भगवतो ह्लादिनी शक्तिरिति च निरूपितं पुरस्तात् । ह्लादश्च सर्वदा संविद् व्याप्त एवेति नात्र संशयलेशः । संविच्च सत्तासमनियतेति व्याप्तिः ।तथा च सत्ता संविद् ह्लादा इति त्रिकं परस्परं नियतवृत्तिकम् । तत्र सत्ताया नामान्तरं सन्धिनी शक्तिरिति । संविदश्च ज्ञानाशक्तिरिति संज्ञा। एतासां तिसृणांशक्तीनां समुदायः सच्चिदानन्दो भगवान् इत्युच्यते । समुदायस्य समुदायिनो ऽभेदाच्च ह्लादिनी रूपा भक्तिः सच्चिदानन्द भगवद् रूपेति निर्गलति ।

तस्मात् सा भक्ति र्भगवानिव सर्वदा सर्वत्र वर्त्तमानापि मायया तिरोहितेति तत्प्रादुर्भावाय भक्तिशास्त्रप्रवृत्तिः । शास्त्रं च तत्त्वनिर्णयाय

प्रवृत्तमुद्देश लक्षणपरीक्षणान्यवगाहते। तत्र नाम कीर्त्तनमुद्देशः। तच्च भक्तिरिति नाम मुहुरुत्कीर्त्तितम्। वैदिकव्यवहारे प्रायेण प्रवृमहे इत्यादि क्रियापदानि भजधात्वर्थक वृङ् धातु प्रकृतिकानि बोद्धव्यानि। वृङ् संभक्ताविति धातु पाठात्। व्याख्या कृद्भिस्तथैव व्याख्यातत्वाच्च। (२५८)।

ततो भक्तिलक्षणजिज्ञासाया मुच्यते शाण्डिल्येन—अथातो भक्ति जिज्ञासा सा परानुरक्तिरीश्वर इति (२५९)।

---

(२५८) प्रमाणं यथा—त्वां हि मन्द्रतम मर्कशोकै र्वृमहे स महि नः श्रोष्यग्ने इति निरुक्तोद्धृतऋङ्मन्त्रांशो परि दुर्गः—हे अग्ने त्वां हि त्वामेव मन्द्रतमं मृदुतमं सुखाराध्यतमम्। त्वं हि देवेषु सर्वेषु मृदु हृदयतमो यतोऽतस्त्वामेव वृमहे संभजामहे। केन अर्कशोकैरर्चनै र्मन्त्रैः शोकै र्दीप्तै र्यथोक्तब्रह्मचर्य जनितवीर्यैः। स नस्त्वं भजयमानस्तै र्मन्त्रैः संसेव्यमानो महि महत्स्तोत्रं तैरेव मन्त्रै र्युष्मद् गुणानुस्मृति सतानगर्भै रुपग्रथितं श्रोषि शृणिवति। यजुर्वेदसंहिता टीकायां व्रियते संभज्यते इति वरुण इति वरुणपदनिरुक्तिश्च महीधरेण प्रदर्शिता॥

(२५९) अथ निरपेक्ष साधनत्त्वाद् भगवत्स्वरूपज्ञानाद्यनन्तरमतस्तस्य भगवतोऽवश्य भजनीयत्वज्ञानाद् भक्ते र्भजनस्य जिज्ञासा। किं कथमिति विचारपूर्विका जिज्ञासा प्रस्तूयते।

जिज्ञासया विचार आक्षिप्यते । स्वप्नेश्वरस्तु—अथेत्यधिकाराद्यो नानन्तर्यार्थः । आनन्तर्यं हि न स्वाध्यायाध्ययनस्य । आनि-न्ह्ययेोन्यधिकृतेर्वक्ष्यमाणत्वात् । नापि शमादि सम्पत्त्यर्थः । मुमुक्षामात्रस्य भक्त्यधिकारत्वात् । न च मङ्गलार्थोऽपि । तदु-च्चारणमात्रस्य मङ्गलत्वादिति । यतः कुतर्कनिरासोऽपेक्षणीयो ऽतो भक्तिजिज्ञासेति चाह । तच्च भक्तिर्भजनम् । स्त्रियां क्तिन् भज सेवायामिति धातुः । यद्यपि भजनं सेवा तथापि न सेवा-मात्रम् । समानेऽपि सेवाकर्मणि भक्तो ऽयमभक्तो ऽयमिति व्यपदेशभेदात । तथा चानुरागपूर्वकं भजनं भक्तिरिति भक्ति-शब्दाक्षरार्थः ।

सा परेत्यत्र सा परेति लक्ष्यनिर्देशः । शेषं लक्षणम् । परेति गौणीं व्यावर्त्तयति । ईश्वरे इति प्रकृताभिप्रायम् । आरा-ध्यविषयकरागत्वमेव हि सा । इह तु परमेश्वरविषयका ऽन्तः करणवृत्तिविशेष एव भक्तिः । तद्वैशेष्यं च लौकिकानुरागादौ सुग्रहम् । रागश्च सुखानुशयीति पातञ्जलसूत्रे व्यक्तम् । न च ज्ञानस्य भक्तित्वम् । द्वेषादिमत्स्वपि तत् प्रसङ्गात् । तदेव वक्ष्यति । द्वेषप्रतिपक्षभावाद्रसशब्दाच्चराग इति । रागस्य द्वेष-विरोधित्वात् । लोके हि द्वेष्टाऽयं भक्तोऽयमिति विरुद्धधर्मत्वं प्रतीयते । अतो भक्तिः खलु राग एव भवितु मर्हति । अतएव राम लक्ष्मणादीनां स्वर्गारोहणमुक्त्वा येऽपि भगवदंशेष्वनुरागणः कोसलनगरजनपालास्ते ऽपि तन्मनसस्तत्सलोकतामापुरिति साक्षादेव रागशब्दः प्रयुक्तः । माण्याराध्यत्वेन ज्ञानं सा पूजा नमस्काराद्याराधनास्वननुगमात् । अपि च बलाद्भयाद्वा नमस्कार्यत्वादि ज्ञानवत्यपि भक्तो ऽयमनुरक्तोऽयमिति व्यव-हारापत्तेः । अनुरागादि सहिताराध्यत्वज्ञानमिति चेदनुराग एवास्तु । अनुस्तु न लक्षणान्तर्गतः किन्तु भगवन्महिमादि

ईश्वरे भगवति या परानुरक्तिः सा परा भक्ति रिति भक्ते लक्षणम् । अनुरक्तिरासक्ति वृत्तिरनु-राग: प्रीतिः प्रेमा प्रपत्तिः स्नेह इत्यवान्तर-

---

ज्ञानादनु पश्चाज् जायमानत्त्वादनुरक्तिरित्युक्तम् । जीवोपा-ध्यनवच्छिन्न चैतनविषयिणी अनुरक्तिरेव भक्तिरिति संक्षेपः ।

तथा च श्रीमन्मुरपुरमथनचरणारविन्दमकरन्दमन्दाकिनी मवगाहमानस्य मनसः समुल्लासो रागभावप्रेमादि शब्दाभि-धेय एव स्वानन्दभाव माविर्भावयन् रसरूपो रत्याख्यः स्थायी भावो सोऽन्यमपि न्यक् कुर्वन् विराजते ।

अथ भक्ति लक्षण वचनानि कानिचिद् उपन्यस्यन्ते ।

माहात्म्य ज्ञान पूर्वस्तु सुदृढ़ः सर्वतोऽधिकः ।

स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ।

अन्याभिलाषिता शून्यं ज्ञानकर्माद्यनावृतम् ।

आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ।

मनोगतिरविच्छिन्ना हरौ प्रेमपरिप्लुता ।

अभिसन्धिविनिर्मुक्ता भक्तिर्विष्णुवशङ्करीति ।

विषयान्तरै रनवच्छेद्या तात्पर्यान्तर ज्ञानयोगादिकमसह-माना ह्लादिनी वृत्तिविशेषस्वरूपा भगवदानुकूल्यात्मक तदनु-गत तद्दर्शनस्पृहादि ज्ञानविशेषाकारा तादृशभक्तमनोवृत्ति-विशेषदेहा भक्तकृतात्मरहस्य संगोपनगुणमयवसना वाष्पमुक्ता-दि दिव्यभूषणा सर्वगुणैकनिधानस्वभावा दासीकृताऽशेषपुरुषार्थ संपत्तिका भगवत् पातिव्रत्यव्रतचर्याकुला भगवन्मनो हरणै कोपायरूपा भगवती भागवती प्रेमलक्षणा भक्तिर्विराजते इति भक्तेः स्वरूपमित्यर्थ इति ॥

तारतम्यभेदेऽपि पर्यायभेदाः। सा च भक्तिर्भगवति भावविशेषः। वैशिष्ट्यं च तद्गुणश्रवणादावुत्कण्ठाह्लादविशेषजनकत्वम्। श्रीमद्भागवते—
देवानां गुणलिङ्गाना मानुश्रविककर्मणाम्।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या।
अनिमित्ता भागवती भक्तिः सिद्धे र्गरीयसी।
जरयत्याशु या कोशं निगीर्णमनलो यथेति२६०।

(२६०) एक मनसः पुरुषस्य देवानामिन्द्रियाधिष्ठातृसूर्यादीनां सत्वे या वृत्तिः स्वाभाविकी सा भक्तिरित्यर्थः। ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत इत्युक्तेः सद्ब्रह्म तस्य भावः सत्वन्तस्मिन् सत्वे परब्रह्मणि भगवति। स्वार्थे भावप्रत्ययः। स्वाभाविकी वृत्तिरित्युक्त्या रागानुगा पराभक्तिर्न तु वैधीति निर्गलति। कथंभूतानां देवानाम्। गुणलिङ्गानां गुणा रूपादयो विषया लिङ्गानि ज्ञापकानि येषाम्। पुनः कथंभूतानाम्। आनुश्रविककर्मणाम् गुरोरुच्चारणादनुश्रूयते इत्यनुश्रवो वेदः। तद्विहितमानुश्रविकम्। तदेव कर्म येषांतेषाम्। शुद्धानामित्यर्थः। वृत्तिस्तु प्रागेव प्रपञ्चितेति। भगवति सर्वेन्द्रियाणां सर्वतो भावात्मिका या स्वाभाविकी वृत्तिः सा परा भक्तिरित्येव भक्तिलक्षणम्। भक्तिः क्वचित् सर्वान्तःकरणैः क्रियमाणेति सर्वतो भावात्मिकेति सर्वतोमुखीति च निर्दिश्यते। मोक्षादपि गरीयसी गुरुतरा पञ्चमपुरुषार्थरूपत्वात्। तदुक्तम्—

तल्लीनचित्तः स पुमान् भगवद्भक्ति तत्परः।
जगत्सर्वमनित्यं हि स देवासुर मानुषम्।
छाया रूपमिदं पश्यन् सा भक्तिः परमासतेति॥

पुनस्तत्रैव—

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
मनो गतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ।
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदा हृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तम इति २६१

---

अनिमित्ता । अनौपाधिकी । निष्कैतवा हेतुशून्या स्वतन्त्रा भागवती भगवत् संबधिन्येव । नान्यथा । यथोक्तं प्रह्लादेन—

या प्रीति रविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान् माऽपसर्पतु ।
नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् ।
तेषु तेष्वचला भक्तिरच्युतास्तु सदात्वयीति ॥

अत एवानिष्टमात्रा ऽननुबन्धीष्टं भक्तिरेव परमपुरुषार्थः । अस्यामेव सत्यां कात्यायनी संहितायाम् वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः । न शौरिचिन्ताविमुखजनसंवासवैशस मिति प्रार्थ्यते । संवासः सह स्थितिः । या भक्तिराशु अविद्यारूपं कोशं लिङ्गदेहञ्जरयति । या ज्ञानस्य परा काष्ठा अविद्या निवृत्तिरूपा तान्निवृत्तिं भक्तिः स्वाविर्भावमात्रेणैव करोति । हरिपार्षदरूपं दिव्यदेहं करोति यतः । अत्र यथानुरूपं निदर्शनम्—निगीर्णं भुक्तं भक्ष्यादिकमनलो जाठराग्नि र्यथा तस्य भक्ष्यादेः परिपाकमनिच्छत इच्छतश्चापि प्राणिनो जरयित्वा मलं कृत्वा तस्यान्नादेः सारांशेन तुष्टिं पुष्टिं च जनयति तथा भक्तिरपि स्वारस्येन स्वाधारस्य लिङ्गशरीरं जरयतीति ॥

( २६१ ) मद्गुणश्रुतिमात्रेणैव मनोगति र्मनसो वृत्तिः परमानुरक्तिरूपा या भक्तिस्तदेव निर्गुणस्य भक्तियोगस्य लक्षणं

पुरुषप्रयोजनं सुखप्राप्ति दुःखनिवृत्तिश्चेति सर्ववादिसंमतम् । भगवत् प्रीतेश्च भगवदानन्द रूपत्वाज्जीवबुद्धिवृत्तिभूतत्वे सति तस्य जीवस्य सुखित्वमात्यन्तिकनिवृत्तदुःखत्वं चेत्यतो भगवद्भक्तिरेव परमपुरुषार्थः ।

ज्ञातेऽपि स्फटिके कुसुमाद्विवेकेन स्फटिकभ्रमनिवृत्तेरदर्शनात् प्रकृति भ्रमस्य सोपाधिकत्वाद्भ्रमनिवृत्त्यसंभवाच्च । बन्धनिवृत्ति र्न तत्त्वज्ञानमात्रेण किन्तु तन्मयतापादिकया भक्त्यैव । भजनीयानुग्रहतो ऽनर्थनिवृत्ते र्लोके दर्शनाच्चेति । अतएव भगवानपि ब्रह्माणं प्रति—

---

स्वरूपमुदाहृतम् । कीदृशी मनोगतिः । अहैतुकी फलानुसन्धानरहिता । पुनः कीदृशी । अविच्छिन्ना विघ्नैरप्रतिहता विघ्नास्तु सुखदुःखादय स्तैरप्रतिहता अप्रताड़िता । अतएवाऽव्यवहिता सततसन्निकृष्टा । तत्रानुरूपं निदर्शनम् । यथा गङ्गायाः गङ्गाप्रवाहोदकस्य अविच्छिन्ना विघ्नविनाशिनी गतिः सिन्धावेव । नान्यत्र । अहैतुकीत्यनेनैव तस्य भक्तियोगस्य निष्कामत्वं द्योतितम् । ततस्तद्योग एव तत्फलम् मुक्तिस्तु अवान्तरफलम् । भक्तियोगयुक्तानां हि निष्कामतया भक्ति योगस्य भक्तियोग एव फलं तदेवाह—सालोक्य सार्ष्टीत्याद्यारभ्य-

स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यत इति ।

एतद्वचनेन भक्तेरगुणत्वं च स्पष्टमेव प्रतिपादितमिति ॥

भगवच्छिक्षितमहं करवाणि ह्यतन्द्रित इति ब्रह्मणा प्रार्थितं स्वप्राप्तिसाधनमति रहस्यत्वाद् बहिरङ्गजनागम्यतयैवाह—एतावदेव जिज्ञास्यमित्यादि।

भक्तिस्तु द्विविधा। सगुणा निर्गुणा चेति। सगुणा सकामा। निर्गुणा निष्कामा। पुनश्च वैधी रागानुगेति भेदेन भक्ति द्विविधा। विधिवाक्यबोधिता वैधी। पूर्वजन्म वासनावाप्ता स्वभाविकी रागानुगेति। भगवानचिन्त्यैश्वर्य्य गुण इति तन्माहात्म्यं श्रुत्वाऽभयकामनया भगवति या भक्ति र्जाता सा वैधी। स्वभावोद्भवा स्वाभाविकी। वैधी अवरा। सकामत्वात्। स्वाभाविकी वरा। निष्कामत्वात्। वैध्या उदाहरणम्—

स उत्तम श्लोकपदारविन्दयो र्निषेवयाऽकिञ्चन सङ्गलब्धया। तन्वन् परां निर्वृतिमात्मनो मुहु र्दुःसङ्गहीनः स्वमनः शमं व्यधादिति।

रागानुगाया उदाहरणं यथा—

यः पञ्चहायनो मात्रा प्रातराशाय याचितः।
तन्नैच्छद्रचयन् यस्य सपर्यां बाललीलयेति।

अत्र तस्योद्धवस्य शास्त्रश्रवणसत्सङ्गाभावेऽपि या

उत्पन्ना भगवति भक्तिः सा स्वाभाविकी रागानुगा । सैव मुख्यतमा । यत्र स्वयं भगवानपि भक्तानां पुत्रादि भावेन स्वयं विलसतीति २६२ ।

तत्र विधिवाक्य सापेक्षत्वाद्वैधी दुर्बला । अज्ञातज्ञापनं प्रवर्त्तना वा विधिरस्तु । न तत्र विशेषआग्रहः । निरपेक्षस्वतन्त्रत्वात् प्रवर्त्तमाना रागानुगा प्रबला चेति विविच्य ज्ञेयम् । पुनः ।

निष्ठा रतिपरा भावप्रेमाङ्गा मुनि दुर्लभा ॥

---

(२६२) पुनश्च—गर्भे नारदबोधितो बहिरपि प्रह्लाद ईशं स्मरन् । न्यस्तक्रीडनको हसत्यथो रोदित्यथो गायति । तूष्णीं तिष्ठति रोमहर्षसहितो नृत्यत्यथो भावयत्यस्यैवानुकरोति सत्कृतिमतः प्रेम्णो विवृद्धिं पराम् ॥ इति कादम्बिन्याम् । श्रीमद्भागवतेऽपि—

न्यस्तक्रीडनको बालो जडवत्तन्मनस्तया ।
कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ।

आसीनः पर्यटन्नश्नञ्छयानः प्रपिबन् ब्रुवन् ।
नानुसन्धत्त एतानि गोविन्दपरिरम्भितः ।

क्वचिद् रुदति वैकुण्ठ चिन्ताशबललोचनः ।
क्वचिद्धसति तच्चिन्ताह्लाद उद्गायति क्वचित् ।
नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित् ।
क्वचित्तद्भावनायुक्त स्तन्मयो ऽनुचकार ह ।

क्वचिदुत्पुलकस्तूष्णी मास्ते संस्पर्शनिर्वृतः ।
अस्पन्दप्रणयानन्द—सलिला—मीलिते—क्षण इति ॥

इत्युक्ते र्भक्ति श्चतुरङ्गेति। निष्ठा भक्तिः निश्चला भक्तिः। यदुपायश्च भागवत उक्तः। यथा

नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया।
भगवत्युत्तमश्लोके भक्ति र्भवति नैष्ठिकी।

परा रतिरेव—रतिपरा। छन्दोऽनुरोधात् समासे पदवैपरीत्यम्। विशेष्यविशेषणसमासस्य बाहुलकत्त्वात्। ध्यानेष्टरूपगोचरत्वं रतेर्लक्षणम्।

परा रागात्मिका ज्ञेया वेदाङ्गा षड्गुणा ऽगुणा।
एकापि सा द्विधा भाति स्वाधारैरिन्द्रियवृत्तिभिः।

इत्युक्तेः। परा भक्तिरेव निष्ठेत्याद्युक्ता चतुरङ्गा-वेदाङ्गा वेदपरिमितान्यङ्गानि यस्याः सा वेदाङ्गा चतुरङ्गेत्यर्थः। पुना रागात्मिका। न विद्यन्ते सत्त्वादयो गुणा यस्यां सा अगुणा। प्राकृतगुणातीतापि षड्गुणा। ते षड्गुणा यथा—

क्लेशघ्नी शुभदा मोक्षलघुताकृत् सुदुर्लभा।
सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षिणीमतेति।

तत्र क्लेशघ्नी—क्लेशास्तु सुखदुःखरागद्वेषभयाऽभिमानप्रमादोन्माद शोकमोह लोभमात्सर्येर्ष्याऽवमान क्षुत्पिपासाऽऽधि व्याधिजन्मजरा मरणादयस्तान् हन्तीति क्लेशघ्नी। यद्वा योगशास्त्रोक्ता अविद्याऽस्मिता रागद्वेषाभिनिवेशाः पञ्च क्लेशा-इति। पञ्च क्लेशाः। पुनः शुभदा-दुर्विषय वै तृष्णया

ऽऽनुकूल्य सत्य धैर्य गाम्भीर्य कृपा क्षमा सर्वजन-प्रियत्व सहनशीलत्व परोपकारित्वा ऽमानित्वा ऽऽनन्दत्वादीनि ॥ शुभानि ददातीति शुभदा। मोक्षलघुताकृत् स्वानन्दवैभवेन मोक्षं लघूकरोति या सा मोक्षलघुताकृत् । पुनः सुदुर्लभा । साधनैरसाध्या । पुनः सान्द्रानन्दविशेषात्मा घनपरमानन्दरूपा । पुनः श्रीकृष्णाकर्षिणी महाशक्तिः ।

त्वयाऽऽहूतो हि भगवान् याति नीचगृहेष्वपीति। श्रीमद्भागवतमाहात्म्ये नारदोक्तेः ।

एवं षड्गुणा भक्तिः सैकापि स्वाधारैन्द्रिय-वृत्तिभिर्द्विधा भाति। स्वाधारस्य पुरुषस्य स्वैन्द्रि-यवृत्तिभिः सकामाभि र्निष्कामाभि र्द्विधा भाति। यस्येन्द्रियवृत्ति र्निष्कामा स्यात्तस्मिन् भक्तिः परा भाति। यस्येन्द्रियवृत्तिः सकामा तस्मिन् अपरेत्यर्थः ।

श्रद्धा भक्तिरसास्याऽनुभावभेदः ।

सतां प्रसङ्गान्मम वीर्यसंविदो भवन्ति हृत्कर्ण रसायनाः कथाः । तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रति र्भक्ति रनुक्रमिष्यतीत्युक्तेः ।

ततो रतिः स्थायिभावः । स एव भक्तिरसतां आप्नोति । तत्प्रादुर्भावश्चोक्तः—

भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्यु-
तसत्समागमः । सत्सङ्गमो यर्हि तदैव सद्गतौ
परावरेशे त्वयि जायते रति रिति ।

रस्यते रस इति व्युत्पत्त्या रस्यमानाऽऽनन्दस्यैव रस इति संज्ञा । स एव रसो रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीति श्रुतौ रसपदेन प्रदिष्टः । अभेदभावनात्मिका भावभक्तिरुदाहृतचरी । तस्याश्चिन्हानि नव । यथा-

शान्तिरव्यर्थकालत्वं विरक्ति र्मानशून्यता ।
आशाबन्धः समुत्कण्ठा नामगाने सदा रुचिः ।
आसक्ति स्तद्गुणाख्याने प्रीतिस्तद्वसतिस्थले ।
इत्यादयो ऽनुभावाः स्युर्जातभावाङ्कुरे जने इति।

तदा कृष्णसाक्षात्कारे योग्यता भवति । भावभक्तिपरिपाक एव प्रेमा । तल्लक्षणन्तु काम्यलाभे ऽपि यस्तावन्न निवर्त्तेत कर्हिचित् । विवर्धते प्रत्युत स्यात् प्रेमनामा रसात्मक इति । काम्यो विषयः । विषयालाभे ऽप्यनिवर्त्यो भावः प्रेमेति यावत् । तच्च पामराणां कामिन्यादिष्विवात्मारामाणां भगवति भवति । विघ्नादि संभवेऽपि न किञ्चिन्मात्रमपि प्रेमह्रासः । ममत्वातिशयात् ।

तदुक्तम् पञ्चरात्रे-

अनन्यसमता विष्णौ ममता प्रेमसंयुता ।

भक्तिरित्युच्यते पार्थ प्रह्लादोद्धवनारदैरिति ।

ममतातिशया ऽऽविर्भावेन समृद्धा प्रीतिः प्रेमेत्याशयः । कृष्ण सम्बन्धेन महादुःखमपि सुखमेव । तत्संबन्धं विना महासुखमपि दुःखमेव । कदाचिद् भगवत्संयोगेऽपि वियोगस्फुरणं यथा महिषी गीते-कुररि विलपसि त्वमित्यादि । कदाचिद्वियोगे संयोगस्फुरणं यथा-इतिवेणुरवमित्यादि । यथा पदे पदे परमानन्दमूर्त्तिं परिरब्धवत्य इत्याद्येव वैचित्र्यं प्रेमलक्षणम् ।

चेतोऽद्रवातिशयात्मको भगवति प्रेमैव स्नेहः । यस्मिन् जाते तत्संबन्धाभासेनापि महावाष्पादिविकारः प्रियदर्शनाद्यतृप्तिर्जायते । स्नेह एवाभिलाषातिशयात्मको रागः । यस्मिञ्जाते क्षणिकस्यापि विरहस्यात्यन्तैवा ऽसहिष्णुता । तत्संयोगे परं दुःखमपि सुखत्वेन भाति । तदुक्तं प्रेम पत्तने-

मृदस्तु मेऽङ्गं खनितं खनित्रकैः खराधिरूढं वहु मुद्गराहतम् । बन्धभ्रमातापवदल्पभाजनं तच्चेत्तदीयाधरसङ्गि जीवयेदिति । अन्यच्च-

पञ्चत्वं तनुरेतु भूतनिवहाः स्वांशे विशन्तु स्फुटं धातारं प्रणिपत्य किन्तु शिरसा तत्रापि याचे वरम् । तद्वापीषु पयस्तदीयमुकुरे ज्योति-

स्तदीयाङ्गणव्योम्नि व्योम तदीयवर्त्मनि धरा तत् तालवृन्ते ऽनिलमिति ।

अत एव प्रेमलक्षणायां भक्तौ प्रचुरहेतुत्वज्ञापनार्थं ममताया एव भक्तित्वनिर्देशः । अनन्यममतेत्यादौ अन्यममता वर्जिता ममतेत्यर्थः एतदेवोक्तम्-सत्य एवैकमनस इति । विरहस्याऽसहिष्णुता यथा गोपीनां परमानन्द इत्यादावुक्ता। स एव रागोऽनुक्षणं स्वविषये नवनवत्वेनाऽनुभावयन् स्वयं च नवनवी भवन्ननुरागो भवति । यस्मिञ्जाते परस्परवशी भावातिशयः प्रेमवैचित्र्यम् विप्रलम्भे तत्सम्बन्धिन्यप्राणिन्यपि जन्मलालसा विस्फूर्त्तिश्च जायते । अनुराग एवासमोर्ध्व चमत्कारोन्मादको मुख्योभावः। यस्मिञ्जाते दर्शने निमेषासहिष्णुता।वियोगे.क्षणं कल्पादिसमं सात्विकविकारादिकं च जायते । प्रियत्वातिशयाभिमानेन कौटिल्याभासपूर्वक वैचित्र्यं दधत् प्रणयोमानः। यस्मिञ्जाते श्रीभगवानपि तत्प्रणयकोपात् प्रेममयं भयं भजते इति ।

यच्चोक्तम्-अनन्यममता विष्णावित्यादि तत्र अनुग्राह्याभिमानिनो द्विविधाः । पोषणमनुकम्पा चेत्यनुग्रहस्य द्वैविध्यात् । पोषणमत्र भगवता स्वरूपद्वारा स्वरूपगुणद्वारा चानन्दनम् ।

अनुकम्पा च भगवत श्चित्तार्द्रतामयी तदुपकारेच्छा । तेषु द्विविधेषु केषु चिद्भगवति निर्ममाः केचित् ममता सहिताश्चेति तत्र निर्ममाः सनकादयः।अनुकम्प्याः ममता सहिताभक्ताः । तेषा मस्माकं प्रभुरयमिति भावेन ममत्वम् । तच्च केवलभक्तानां श्रीभीष्म प्रह्लादोद्धवनारदादीना मेवोक्तम् । न तु सनकादीनामिति । सा च भक्तिः क्रमेण पाल्यानां द्वारकावासिनामाश्रयात्मिका । भृत्यानां दारुकादीनां दास्यात्मिका । लाल्यानां प्रद्युम्नानिरुद्धादीनां प्रश्रयात्मिका ज्ञेयेति । एषां त्रिविधानामपि प्रीति र्भक्तिरेव । अथ पुत्रोऽय मित्यादिभावेना ऽनुकम्पित्वाभिमानमयी प्रीति र्वात्सल्यम् । तथोदाहृतम् । देवहूत्याः पुत्रवियोगे वत्सं गौरिव वत्सलेति । तस्माद्वात्सल्यं श्रीव्रजेश्वरादीना मिति । अथ मत्सममधुरशीलवानयं निरूपाधिमत् प्रणयाश्रयविषय इति भावेन मित्रत्वाभिमानमयी प्रीति मैत्र्याख्या । सा सौहृदसख्यभेदेन द्विविधा ।सुहृदः सखायश्चेति भेदात् परस्परनिरूपाधिकोपकाररसिकतामयी सौहृदाख्या । तत्र सौहृदं श्रीयुधिष्ठिर भीमद्रौपद्यादिषु दृश्यते । सख्यं श्रीमदर्जुन श्रीदामादिषु ॥

अर्जुनस्य सख्यं यथा—

प्रत्युत्थानं तु कृष्णस्य सर्वावस्थो धनञ्जयः ।
न लङ्घयति धर्मात्मा भक्त्या प्रेम्णा च सर्वदेति

तस्मात्परमानन्दैकरूपस्य मानसानन्देषु भक्त्यानन्दस्य साम्राज्यं दर्शितमेभि र्गुणै र्यथा— प्रीतिः खलु भक्तचित्तमुल्लासयति। ममतया योजयति विस्रम्भयति प्रियत्वातिशयेनाऽभिमानयति द्रावयति। प्रतिक्षणमेव स्वविषयं नवनवत्वेनानुभावयति । असमोर्ध्वचमत्कारेणोन्मादयति च । यस्यां जातायां तदेकतात्पर्यमन्यत्र तुच्छत्वबुद्धिश्च जायते ।

अथ भावभक्ति र्भगवदभेदेनात्मनो जीवेन कर्त्तव्येत्युक्तम् । तत्र वेदान्तिनो विवदन्ते। तथा हि

ननु जीवेश्वरत्वं तु दासस्वामित्वमेव च ।
नानात्वं कल्पितं प्राहु रद्वैते मुनयोऽव्यये ।

द्विचन्द्रत्वं यथाऽऽकाशे रज्ज्वां सर्पत्वमेव च ।
खे नानात्वं तथा तत्त्वमभेदे कल्पितं परैइति२६३

(२६३) जीवेश्वरत्वं सेव्यसेवकत्वं च तदितरनानात्वं चाद्वैते अव्यये मुनयः कल्पितं प्राहुः । यथाऽऽकाशे द्विचन्द्रत्वं रज्ज्वां सर्पत्वं यथा खे नानात्वं तथा अभेदे तत्त्वं कल्पितमिति ॥

केन हेतुनेति चेन्माययेत्युच्यते । माया लक्षणन्तु-

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ।
तद्विद्यादात्मनो मायां यथा भासो यथातम इति
(२६४) श्रीमद्भागवते । तदनुभवमाह मैत्रेयः ।

यदर्थेन विनामुष्य पुंस आत्मविपर्ययः ।
प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकमिति ॥

तत्त्वमसीति श्रुत्यापि तत्त्वमसीत्यादिना भ्रमनिषेधेन जीवेश्वरयोरभेद एव प्रतिपादितः। भगवानपि पुरञ्जनमभेदान्वयेन उपदिशति-

अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः ।
न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपीति ।

उपदेशफलमनुभवश्च यथा-

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥

अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः

---

(२६४) ऋतेऽर्थं यदर्थं विना मिथ्याभूतदेहादिकमात्मन्यधिष्ठाने प्रतीयेत सदात्मरूपं न प्रतीयेत तदात्मनो मायां विद्यात् । तत्रार्थं विना प्रतीतौ दृष्टान्तः । यथाभास आकाशे द्विचन्द्रादिः । सतोऽप्यप्रतीतौ दृष्टान्तस्तु यथा-तमो राहुः । स तु ग्रहमण्डले विद्यमानोऽपि न दृश्यते इति ॥

सुशृणोम्यकर्णः । अहं विजानामि विविक्तरूपी न चास्ति वेत्ता मम चित्सदाहम् ।

नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् ।
सत्यं ज्ञानमनन्तं यत् परब्रह्माहमेव तद् ।
इत आत्मा ततश्चात्मा सर्वमात्ममयं जगत् ।
न तदस्ति न यत्राहं न तदस्ति न यन्मयीति ।

एवं श्रुतिस्मृति संमतादद्वैतमतं सिद्धमिति ।

एतन्निराक्रियते । यत्परंब्रह्म तत्त्वमेवेत्युक्ता या ब्रह्माहमस्मीति भावना कारिता श्रुत्या सा तु पूर्वोक्तरीत्या तद्भावारूढत्वेन तत्तुल्यरूपप्राप्तये। भावो हि भवकारणमिति शुकोक्तेः । तदनुभवस्तु पौण्ड्रकेणापि चक्रायुधधारिणा कृतस्तेन हि स्वस्मिन् वासुदेवानुसन्धानं कृत्वोक्तम् ।

वासुदेवो ऽवतीर्णो ऽह मेक एव न चापरः ।
भूतानामनुकम्पार्थं त्वन्तु मिथ्याभिधां त्यजेति॥

इत्थं भूतस्य निष्कपटदृढानुसंधानस्य फलञ्चोक्तं श्रीशुकेन-स नित्यमित्यादिना । तथा य आत्मनि तिष्ठतीति श्रुत्या जीवस्यापि भगवद्देहत्व मुक्तम् । तस्माद्द देहदेहिनो रभेदाऽभिप्रायेण सख्यभावेन च हरिणोक्तम्-

अहं भवान्न चान्यस्त्वमित्यादीति यतस्तस्माद्द

ब्रह्मभावप्राप्त्यर्थमेव ब्रह्माहमिति भावनाकारिता न तु भेदाभावाभिप्रायेणा ऽभेदज्ञानाय। अन्यथा तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवमिति ब्रह्म विदाप्नोति परमिति। तस्य विद्वान् नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्। (२६५) इत्यादीना मबाधितभेदप्रतिपादिकानां श्रुतीनां सिद्धान्ते विरोधापत्तिः। एता ह्याम्नायामृतरत्नाकरतरङ्गाः श्रुतयः। भगवता च सर्वश्रुतिसारार्थ भूतायां गीतायां कुत्रापि त्वं ब्रह्मासीति मद्रूपोऽसीति वा नोक्तम्। तादृशबोधाभावेन तु भक्तोऽसि मे सखा चेत्याद्येवोक्तमतो वेदानां त्रैगुण्यात् सात्त्विकाद्वैतज्ञानेन वेदैर्निर्गुणज्ञानाधिकारी जीवः कृतः।

कैवल्यं सात्विकं ज्ञानं मन्निष्ठं निर्गुणं स्मृतमिति भगवदुक्तेः।

एवं वेदसिद्धान्तमज्ञात्वा यन्मतं भवतोक्त तच्छिष्टापरिगृहीत मिति तस्मात् कुतर्काश्रया यूयम् ॥ किञ्च-

एवं चेत्तर्हि कोऽन्य स्तत्कल्पको भेदवर्जिते।

---

(२६५) स एतस्मात सर्वजीवसमष्टिरूपादुत्कृष्टाद्धिरण्यगर्भादुत्कृष्टं परमेश्वरं पश्यतीत्यर्थः।

वदाऽभेदे परे तस्मिन् येनेयं तु भिदाकृतेति २६६

अज्ञानेन भिदा कृतेति चेत्तर्हि ब्रह्मण्यज्ञाना-वृते सति तद्ब्रह्म तस्याज्ञानस्य किं क्रीड़ामृगः। यतस्तेनाज्ञानेन ब्रह्मणः साक्षाद्बन्धमोक्षदर्शनम्। भवत्सिद्धान्ते मूलाज्ञानस्य ज्ञानाज्ञाने ह्यङ्गे। विद्या ऽविद्ययोर्मायाङ्गत्वात्। तदेव ब्रह्मणि जीवे-श्वरभावनयाज्ञानाङ्गेन ब्रह्मतत्वं बध्नाति पुनर्ज्ञा-नाङ्गेन ब्रह्माकारवृत्या बन्धनान् मुक्तं करोति। तथा सति ब्रह्मणो ज्ञान कर्मत्वाज्जड़त्वापत्तिः। आत्मानमेवात्मतयेत्यादि ब्रह्मोक्तेः। अथवा

---

(२६६) एवं चेद्भवतोक्तप्रकारेण जीवेश्वरत्वादिकं कल्पितं चेत्तर्हि भेदवर्जिते सजातीयविजातीय स्वगतभेदशून्ये ब्र-ह्मणि तत्कल्पको नानात्वकल्पकः कोऽन्यः। येन कल्पकेना-भेदे तस्मिन् परे इयं भिदा कृता तं कल्पकं वद। अज्ञानमिति चेत्तदज्ञानं ब्रह्माश्रितं सत् तेन ब्रह्मणि जीवेश्वरत्वं सेव्यसेवकत्वं नानात्वं च कल्प्यते। यथा गृहाश्रितं तमो गृहमावृत्य तदद-र्शनं कल्पयति किं वा ब्रह्मैव तदज्ञानावृतं सत् स्वस्मिन्नानात्वं जीवेश्वरत्वं सेव्यसेवकत्वं च कल्पयति। तच्च मत्वानर्थादिक-मपि चाभिपद्यते। यथा कोऽपि वाताविष्टो विक्षिप्तः स्वात्मा-नमन्यथा पश्येत्तस्मिन् सति परमाश्चर्यमिदम्। यतो ध्वान्त-योगेन कश्चित् पुरुषो रज्ज्वां सर्पारोपाद्भययुतो भवति न तु सर्पोऽह मिति स मन्यते। कथञ्चाखण्डज्ञानात्मकं सद् ब्रह्म स्वस्वरूपमजानज्जीवोऽह मिति मन्येतेति॥

अस्तु ते ब्रह्म अज्ञानस्य क्रीडामृगो ऽथापि मया पृच्छ्यते–तदज्ञानमनाद्यनन्तं सादि सान्तं साद्यनन्तं वेति ॥ आद्ये तस्यानाद्यनन्तत्वे अद्वैतहानिः स्यात् । तस्यैव द्वितीयत्वप्रसिद्धेः । तथा तस्यानाद्यनन्तत्वे महानर्थापत्तिः । यतो ब्रह्मस्वस्मिन्ननादि जीवत्वं मत्वाऽनर्थादिकं प्रपद्यत इति दुर्वचः । यथा रज्जुः स्वस्वरूपे ऽनादि सर्प बुद्ध्या तद्भयेन कम्पादियुक्ता भवेत् तद्वत् सा तु तथा न भवति । अतो ऽपरे द्वितीयपक्षे सादिसान्तमते तस्य ब्रह्मणो ऽनिर्मोक्षप्रसङ्गः । यतः शुद्धब्रह्मणः सकाशादुत्पन्नेना ऽज्ञानेन जीवत्वं प्राप्तं ब्रह्म, सुखदुःखादिकं प्रपद्यते । पुनस्सत्सङ्गेन शास्त्रविचारात्प्राप्तज्ञानवैराग्याभ्यां तच्छित्वा स्वस्वरूपेण स्थितमपि पुनरुत्पन्नाज्ञानाधीनं भवत्येवातो नाज्ञानं सादि सान्तम् । न साद्यनन्तमपि । तस्मादेव प्रसङ्गात् । बन्धने जातेऽपि तस्यान्ताभावात् । तदज्ञानमनादि सान्तमपि वक्तुं न शक्यते ॥ यतोऽस्य कार्यस्य विश्वस्यानाद्यनन्तत्वम् । भवत्सिद्धान्ते संसारस्त्वज्ञानकल्पितस्तस्यानाद्यनन्तस्य कार्यस्य न कारणमनादि सान्तं भवितु मर्हत्यतस्तद ऽज्ञानं

तथा नाऽनादि सान्तं किन्त्वनाद्यनन्तमेव सि-
ध्येत् । तत्पक्षेऽपि नानात्वमप्यनाद्यनन्तमिति
कथमुच्यते जीवेश्वरत्वं सेव्यसेवकत्वं नानात्वं
च कल्पितमिति ॥

एवं सिद्धान्तमसहमानः पुनरपि वेदान्ती स्व-
मतमाह-नन्वस्मिन्मते जीवस्यैवाज्ञानमनादिसा-
न्तमनादित्वाद् बन्धनं तु आदिशून्यं सान्तत्वात्।
तन्नाशे जीवस्यापवर्गाख्यो मोक्षोऽप्युपपद्यत इत्य-
तस्तद्ब्रह्मता समीचीना तस्मान्नानात्वं कल्पित-
मिति तन्मतं पुनर्निराक्रियते-

जीवाज्ञानं कुतो ब्रह्मन्नऽज्ञानेन हि कल्पितम् ।
तत्वं ब्रह्मण्यतस्तस्याऽज्ञानं कस्मान्न कथ्यते २६७
तस्य तस्मिन्नबोधे वै ब्रह्माज्ञानीत्यसन्मतम् ।
त्वया शास्त्रविहीनेन स्वीकृतं बत जन्मदम् २६८

---

( २६७ ) भो ब्रह्मंस्तव तु वदतो व्याघातः । यतो जीव-
स्याज्ञानं कुतः । ब्रह्मणि तत्त्वम् । जीवेश्वरत्वं तु तेनाज्ञानं
कल्पितमिति भवतैवोक्तम् । तस्मात्तस्य ब्रह्मणो ऽज्ञानं कस्मा-
न्न कथ्यते । ब्रह्माज्ञानीति त्रपां विहाय व्यक्तं वद । तज्जीव-
स्यात प्रागेव तद्वृत्तत्वादिति ॥

( २६८ ) तस्य ब्रह्मणः अस्मिन् ऽबोधे अज्ञाने सति ब्रह्मा-
ज्ञानीत्यसन्मतं शास्त्रविहीनेनावैदिकेन त्वया स्वीकृतं बतेति
खेदे । यतस्तन्मतं जन्मदमेवं सति तस्याज्ञानस्यानाद्यनन्तत्वा-

एकदेशेऽपि चाज्ञानावृते ब्रह्मणि तस्य तत् ।
यथा नीलावृते कण्ठे नीलकण्ठो हरः स्मृतः २६९
तत्कल्पितेन जीवत्वेनाश्चर्यमिदमद्भुतम् ।

---

दपि । नानात्वन्तु नित्यमेव । कुतः । साद्यनन्तत्वानादि सान्तत्वानां प्राङ् निराकरणात् ॥

( २६९ ) नन्वज्ञानं त्वनन्तस्य ब्रह्मण एकदेशे स्थित्वा तमेवाच्छाद्य तस्मिन्नानात्वं कल्पयति । तस्मान्नोक्तदोषस्तत्राह—एकदेश इति । ब्रह्मण एकदेशे ऽज्ञानस्य निवासो न संभवति । ब्रह्मणः सर्वदेशव्यापकत्वादज्ञानानवकाशात् । गुणगुणिनोः समवायसंबन्धाद्व्याप्य वृत्तेर्यावद्भावभाविनो गुणस्य गुणिन एकदेशे निवासासंभवाच्च । पृथिव्या एकदेशे गन्धस्य निवास इति हि वक्तुन्न शक्यते । तथानुभवाभावात । उत्पन्नं द्रव्यं क्षणमगुणन्तिष्ठतीति तु नैयायिकानां परिभाषा घटादीनामुत्पत्तिक्षणे गन्धवती पृथवीति पृथ्वीलक्षणव्याक्षेपिकैव । नन्वाकाशस्यैक देशस्थो मेघस्तमेव देशमावृत्य तदऽदर्शनेन ध्वान्तत्वं कल्पयति यथा, तथा त्रापीति चेन्न । तयोस्तत् संबन्धाभावात । यतः स्वस्वरूपं मेघावृतं जातमित्याकाशो न मन्यते । आकाशस्य तु शब्दो गुणो न पुनर्मेघ इति विषमो दृष्टान्तश्च तथापि भवतां कुमते एकस्मिन् देशे ऽप्यज्ञानावृते ब्रह्मणि तस्य ब्रह्मणस्तदेवापतितमज्ञानित्वम् । यथा नीलावृते कण्ठे सति हरो नीलकण्ठः स्मृतो यथा च चन्द्रशेखरो भालचन्द्रो गजाननः । श्रीवत्साङ्को भगवानित्यादयो व्यपदेशास्तद्वत् । तत्रापीदन्तु महदाश्चर्यं कुत्रापि कस्मिन्नपि शास्त्रेषु तद्दर्शनाश्रवणमिति ॥

जीवत्वं मन्यते ब्रह्म स्वस्मिन्स्वज्ञानविप्लवात् २७०
ध्वान्तावृतन्न चात्मानं मन्यते भास्करः कदा ।
उलूककल्पितेनाद्धा तेन तन्मन्यते कथमिति २७१

न च विवर्त्तवादस्वीकारेणाभेदः साध्यते मयेति वाच्यम् । श्रुतौ ब्रह्मणो विवर्त्तपरिणामौ जगन्न हि श्रूयते । तस्मिन् वादे चक्षुः संयुक्तायामेव रज्ज्वां सर्पभ्रमो भवति । तद् दृष्टान्तेन तु ब्रह्मणश्चाक्षुषत्वापत्ति रपि दुर्वारा । अतो ब्रह्मणः साक्षात् कारोऽपि घटपटादीनां प्रत्यक्षमिवापतेत् । तथा सति ब्रह्मणो जड़त्वापत्तिरपि त्वत्परिभाषयैव गलग्रहायेत । तस्मिन् सति महानेवानर्थः स्यात् । यतश्च रज्ज्वां कश्चित् पुरुषः सर्पारोपेण भययुक्तो भवति न तु स सर्पोऽहमिति मन्यते । कथमद्वैतं ब्रह्म स्वस्वरूपमजानज्जीवो ऽहमिति मन्वीत । न च भ्रमोऽय मनादिसिद्धो नाधुनिक इति वाच्यम् । निगमागम-

---

( २७० ) ब्रह्मणि तत्तेनाज्ञानेन कल्पितेन जीवत्वेन ब्रह्मापि कथं स्वस्मिञ्जीवत्वं मन्यते । किं स्वज्ञानविप्लवादिति । एतदपि वाक्यमुपहासास्पदमिति ॥

( २७१ ) उलूककल्पितेन रवौ ध्वान्तेन भास्करस्तु स्वात्मानमावृतन्न मन्यते । कथं तद्ब्रह्म बृहद्व्यापकं तेनाज्ञानेन कल्पितेन जीवत्वेनात्मनो जीवत्वं मनुते इति ॥

पुराणेषु केवलं तस्यैव परब्रह्मणो ऽनादित्वश्रव-
णात्। अन्यस्य सर्वस्य सादित्वात् । अथापि
तदनादित्वसत्त्वे त्वदद्वैतहानिः स्यात् । तस्यैव
द्वितीयत्वप्रसिद्धेः। यद्यप्यद्वैते तु किमपि न
संभवति; द्वैतेऽपि अस्माभिरपि, तुष्यतु दुर्जनइति
न्यायेन यदि भवन्मतसिद्धमनादिभ्रमादिकं स्वी-
कृतमथापि रज्ज्वां सर्पाध्यासेन भीतः पुरुषस्त-
ज्ज्ञानेन भयविनाशेऽपि रज्जुस्वरूपो नैव कदा-
चिदपि संपद्यते तथा ब्रह्मणि प्रपञ्चकल्पनयाऽऽ-
ध्यात्मिकादितापयुक्तः पुरुषो ब्रह्मज्ञानेन ब्रह्मरूपो
न भवति किन्तु भयशून्य एव स्यात्। अतो म-
न्दकल्पितो विवर्त्तवादो हितनाशक एव । वेद-
वेदान्तयोस्तस्यानुक्तत्वात्। ननु-

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवदिति-

श्रुत्या, यथा पुरुष आत्मानमेकमादर्शचक्षुषोः ।
द्विधाभूतमवेक्षेत तथैवान्तर मावयोरिति स्मृत्या

च प्रतिबिम्बवादेन जीवेश्वरयो रभेदादद्वैतं-
ब्रह्म प्रतिपादितं यथा तथावच्छिन्नवादेनापि ।

घटसंवृतमाकाशं नीयमाने यथा घटे ।

घटो नीयेत नाकाशं तद्वज्जीवो नभोपम इति ।

श्रुत्या-

घटे भिन्ने यथाकाश आकाशः स्याद्यथा पुरा ।
एवं देहे मृते जीवो ब्रह्म संपद्यते ध्रुवमिति ॥

स्मृत्यापि अद्वैतं ब्रह्म निरूपितम् । तत् किं तासां श्रुतिस्मृतीनां भ्रमविजृम्भितमेव मतम् । न हि न हि। ताभिस्त्वऽधिकारानुरूपवाक्यैर्जीवाः प्रबोधितास्तेषां मङ्गलायेत्युच्यते । तदुक्तम्-

आभासः प्रतिबिम्बो वा जीवश्चोक्तो महर्षिभिः।
येन केन प्रकारेण तस्य बोधाय सात्वतैरिति२७२

---

( २७२ ) सात्वतै र्नारदादिभि र्महर्षिभिर्वेदमन्त्रैः । ऋषि र्मन्त्र इति वचनात् । तैः सर्वैर्जीवः कुत्राप्याभास उक्तः । कुत्रापि प्रतिबिम्बः । चकारात् कुत्रचिद् बुद्ध्यवच्छिन्नः । वा शब्दात् कुत्रापि विवर्तः । तानि तद्वादप्रतिपादकानि वाक्यानि तु येन केनापि प्रकारेण देहाज्जीवात्मा भिन्नो ज्ञानस्वरूपो ज्ञानगुण इति जीवस्य बोधायोक्तानि । तेन बोधेन राजसगुणज्ञानाभिमानिनामीश्वराधीनत्वमसहमानानामपि भगवत्समैश्वर्यप्राप्तये तदभेदभावना कारिता । तया भावनया निर्गुणज्ञानप्राप्त्या स्वयमेव स्वस्वरूपं ज्ञास्यतीत्यभिप्रायस्तेषां यतो दृष्टश्रुतदृष्टान्तेन दार्ष्टान्तिकस्याशु बोधो जायते । तस्मादंशभावपरित्यागेन तत्तद्वादाः प्रतिपादिताः । तद्वादस्तु दुर्ज्ञेयो भगवत्कृपाभावात् । तथैवायत उपाधिद्रष्ट्रोर्द्वयोः सत्वे प्रतिबिम्बं सिद्ध्यति । तथा प्रतिबिम्बं तु साकारपदार्थस्याऽन्यास्मिन् भासोऽपि । तथा

भगवद्भक्तानां तु तपो वैराग्यसमाधिभिरपि साधनै रद्वैतज्ञानं कदापि न भवति । श्रेयः सृति मित्याद्युक्तेः । अत एव ॥

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वत इति

---

साकारपदार्थे भवति । निराकारस्य ब्रह्मणो मिथ्याभूतान्तःकरणे तदभावात् । अतस्तद् भावः सदसम्मतः । तथा तस्मिन् सत्यपि तत्प्रतिबोधनमयुक्तम् । तस्य मिथ्यात्वात् । जीवन्त्वीश्वरस्तत्वमस्यादिना बोधयतीति यस्मात्तद्वादस्त्वशास्त्रज्ञानां सम्मतो न तु शिष्टानां तस्मान्न श्रुतिसिद्धान्तः प्रतिबिम्बादिवादः। किन्तु पूर्वपक्ष एव। तथावच्छिन्नवादोऽपि । तद्वादे तु तत्प्राप्यत्वन्न संभवति। तथाहि घटध्वंसे जलोपाधिविनिर्मुक्तेन प्रतिबिम्बसूर्येणाकाशस्थः सूर्यः प्राप्य इति वक्तुं न शक्नोति कश्चित्तथा भ्रमविमुक्तेन कल्पितसर्पेण रज्जुः प्राप्येति वक्तुं कोऽपि न शक्नोति । एवमद्वैतप्रतिपादकानां प्रतिबिम्बावच्छिन्नवादानामंशवादेन सह पूर्वोक्तप्रमाणवाक्यैकवाक्यत्वार्थं सेव्य सेवकत्वं नित्यमिति मत्वा निश्चेतव्यम् । व्याससूत्रस्य सिद्धान्तोऽप्यस्मिन्नर्थे च दृश्यते । जीवस्य नैव ब्रह्मत्वं न भूतं न भविष्यतीति । तस्माद्—मायावादमदान्धकारमुषितप्रज्ञोऽसि यस्मादहं ब्रह्मास्मीति मुहुर्मुहुर्वदसि रे जीवत्वमुन्मत्तवत। ऐश्वर्यन्तवकुत्र कुत्र विभुता सर्वज्ञता कुत्र ते तन्मेरोरिव सर्षपेण हि भिदा जीव त्वया ब्रह्मणः। जीवस्य मोक्षप्राप्तिस्तु केवलं तदनुग्रहादित्याद्युक्ते भेदाभेदवादएव सिद्धान्तः तदनुग्रहार्थं मेवोक्तं गीतायाम्—मन्मना भवेत्यादीति ॥

तत्वज्ञान दौर्लभ्यमुक्तम् (२७३)।

तथा च भक्तिमानेवोत्तमज्ञानी। निर्गुणस्य ज्ञानस्य भक्तिप्रदस्य ब्रह्माहमस्मीति भावनारूपं सात्विकं ज्ञानं तु साधनमेव। तज्ज्ञानसाधनार्थं श्रवणमनननिदिध्यासनानामुपयोग इत्युक्तं प्राक्। तेषु निदिध्यासने साङ्गा बुद्धिरभ्यसनीयेति सर्ववादिसम्मतः पन्थाः। तत्र सा बुद्धिः किं भेदविषया प्रमाऽभ्यसनीया उताभेदविषयाऽभ्यसनीयेति जिज्ञासा। कुतः। मतभेदेन द्वयोः श्रवणादित्याशङ्क्य यथाधिकारं द्विविधाप्यभ्यसनीयेति स्वमतं विवक्षुः शाण्डिल्यस्त्रिसूत्रीं रचयामास। यथा—तामैश्वर्य पदां काश्यपः परत्वात् (२७४)। आत्मैकपदां वादरायणः (२७५)।

---

(२७३) सिद्धये मोक्षाय यतति। यततां यत्नशीलानां मुमुक्षूणां मध्ये कश्चित्तत्वतो याथार्थ्यतः सच्चिदानन्द विग्रहं मां वेत्तीति ॥

(२७४) द्वा सुपर्णा सयुजा सखायाविति श्रुतिमूलको जीवब्रह्मणो रत्यन्तभेद इत्यतो दासोऽहमित्येव बुद्धौपर्यवसान मिति।

(२७५) नैतद्युक्तम्। स एव तत्त्वमसीत्यात्मावगम्यार्थोऽहं ब्रह्मास्मीति श्रुतिविरोधात्। अतो भजनीयान्नातिरिक्तः कश्च नाहमित्याकारिकाभेदप्रमैवाभ्यसनीया। एवं जानन्त एव ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति न्यायेन भगवत

## उभयपदां शाण्डिल्यः शब्दोपपत्तिभ्यामिति२७६

सम्पत्तिरूपमोक्षलाभसंभवादित्यभिप्रायवतो बादरायणस्य मतमित्यभिप्रेत्याह—आत्मैकपदामिति । आत्मा सर्वाधिष्ठानमेकोऽद्वितीयः पदं विषयो यस्यास्तादृशीमखण्डार्थविषयिणी मिति बादरायण आचार्यो मनुते । अद्वैतज्ञानस्यैव मोक्षफलत्वज्ञापनादिति ॥

( २७६ ) कश्यपमतस्य दासोऽहमिति बुद्धौ पर्यवसानाद् बादरायणमतस्य सोऽहमिति बुद्धौ पर्यवसानादुभयोः प्रामाण्ये समाने स्थिते तयोर्विरोधादसामञ्जस्ये सामञ्जस्यार्थं यथाधिकारं द्वयमपि युक्तमेवेति स्वमतव्यवस्थामाह—शाण्डिल्य आचार्य उभयपदां भेदविषयामभेदविषयां च मन्यते । कुतः । शब्दोपपत्तिभ्याम् । उदाहृत भेदाभेदश्रुतिस्मृतयः ।

यत्परं ब्रह्मभूतात्मा विश्वस्यायतनं महत् ।

सूक्ष्मात् सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तदिति ।

आत्मैवेदं सर्वमिति ब्रह्मैवेदं सर्वमिति ।

सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचनेति ।

एकमेवाद्वितीयं ब्रह्मेति । तत्त्वमसीति । सत्यं ज्ञानमनन्तं ब्रह्मेति ।

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।

मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहमित्यादयोऽभेदास्पदाः । भेदास्पदाश्च पुनर्यथा—

तद् ब्रह्माहमिति ज्ञात्वा ब्रह्मसंपद्यते ध्रुवमिति ।

ब्रह्मविदाप्नोति परमिति । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमिति । परं ज्योतीरूपं सम्पद्य स्वेनरूपेणाऽभिसंपद्यते इत्यादय श्रुति ॥

एतदेव भेदेन भेदाभेदेन च पृथगभिमतेन मत त्रयमेवाभिप्रेत्योक्तम्–तस्यैवाहं ममैवायं स एवाहमिति त्रिधेति । तेषु तस्यैवाहमिति भावेन भजन्तो ध्रुवप्रह्लादबलिप्रभृतयः । ममैवायमिति धारणया भजन्तो गोपयादव पाण्डवादयः । स एवाहमिति भावेन कुमारनारदमैत्रेयादयस्तत्पद मभिजग्मुरिति । वस्तुतस्तु शाण्डिल्याभिमतभेदाभेदमत एवोभयथा भेदाभेदश्रुतीनां समं प्रामाण्यमुपपद्यते । अन्यथाऽत्यभेदश्रुतीनां बाधितार्थत्वापाताद्विप्रलम्भकत्वं स्यात् । सेव्यसेवकमर्यादा स्वर्गनरकादि व्यवस्था च पुराणाद्युक्ताव्याकुला स्यात् । ईशाभेदे तेषां तदसंभवात् ।

इत्थं च भावभक्त्यनीश्वरभावविदूरी करणादुत्तरं मम भगवानेष भगवत एवाह मित्यनुसवनभावना वैभवेन उद्भूतपरमानन्द कौतुक नव नवतापन्न परमप्रेम भक्तियोगेन भजनं कुर्वीत । तदभिप्रायेणैव हि नारदो भक्तिलक्षणमतोपोद्घातपूर्वकं स्वमतमाह–तल्लक्षणानि चोच्यन्ते नानामतभेदात् । पूजादिष्वनुराग इति पाराशर्यः । कथादिष्विति गर्गः । आत्मरत्यविरोधेनेति शाण्डिल्यः । नारदस्तु तदर्पिता खिलाचारता तद्वि-

स्मरणे परमव्याकुलतेति । यथा व्रजगोपिकाना मिति । यत उक्तम्—

युगायितन्निमेषेण चक्षुषा प्रावृषायितम् ।
शून्यायितं जगत्यापि गोविन्दविरहेण म इति ॥

तथा च परमात्मा नित्यज्ञानादि लक्षणो भगवान् सदैकरूपो भक्तवात्सल्याद्यनेकगुणगणो लवणो ब्रह्म विष्णु शिवनारायण रामकृष्णाद्यनेकशब्दैश्च व्यपदेश्यः सर्वजीवनियन्ता । जीवस्तु पुत्रइव पितुरंशो भगवदंशो ऽनाद्यज्ञानपाशनिवद्धः कथंचित् प्राक्तनानेकशुभादृष्टबलाद्विविदिषया सद्गुर्वाश्रयेणेष्टबुद्ध्या तद्भजनेन तत्कृपया स्वस्य साक्षात्कारादज्ञानपाशनिवृत्या तत्सायुज्यमाप्नोतीति । न वा तत्र प्रपञ्च गन्धो ऽपीत्यत्र न विवादः ।

भावभक्तिमनन्तरी कृत्य साक्षात्त्वाभेदभावे तु आसुरत्वदोषप्रसक्तिर्यत उक्तं गीतासु—

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचन्नापि चाचारो न सत्यं तेषु विद्यते ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ।
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मम।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ।

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ।
आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाऽविधिपूर्वकम् ।
अहङ्कारं बलं दर्पं कामंक्रोधं च संश्रिता इत्यादिना

प्रेमभक्त्यारोहार्था तु भावभक्तिर्न निराक्रियते । तदभिप्रायेणैव चोच्यते । द्वैताश्रयो ऽद्वैताश्रयो द्वैताऽद्वैताश्रयो विशिष्टाद्वैताश्रयो वा मुनिर्हरे र्भक्तवरो मुक्तः । अपरः कोऽपि हर्यभक्तस्त्वधः पततीति ।

सर्वेषां गुरवो वेदा अपि स्वनानारूपैः श्रीकृष्णं परमेश्वरं भजन्ति । तथा हि ब्रह्म चिद्घनानन्दैकरूपं पुरुषोत्तमरूपेण मथुरायां सद्मन्याविर्भविष्यति । तत्र भवत्यः सर्वलोकोत्कृष्टसौन्दर्य क्रीडाभोगा गोपिकास्वरूपैः परब्रह्मानन्दैकरूपं श्रीकृष्णं भजिष्यथेति ब्रह्मवरं लब्ध्वा श्रुतयो ब्रह्मलोकगाः ।

कृष्णमाराधयामासु र्गोकुले धर्मसंकुले ।
श्रीकृष्णाख्यः परं ब्रह्म गोपिकाः श्रुतयोऽभवन् ।
यो नन्दः परमानन्दो यशोदा मुक्तिगेहिनी ।
देवकी ब्रह्मविद्या सा या देवैरुपगीयते ।

निगमो वसुदेवो यो वेदार्थः कृष्णरामयोरिति ।

अतः श्रीकृष्णः सुरासुरैरपि सेव्यः । ये तु मायोपाधि सगुणं ब्रह्मेति परिकल्प्य सर्ववेद-सेव्यं परात्परं श्रीकृष्णमनादृत्य ब्रह्माहमस्मीत्या-ग्रहवाक्येन निर्विशेषमनिर्वचनीय मुपासते ते वेदबाह्या अपि वेदविरोधिनो भवसिन्धु जल-मीनास्तेषां मतं विहाय वेदानुगामिभिः शमि-च्छद्भिर्भक्त्या श्रीभगवानेव ध्येयः पूज्यः श्रोतव्यः स्मर्त्तव्यः सेव्य इत्यलम् ।

अथ भक्तिसाधननिर्णयः ।

सुरर्षे विहिता शास्त्रे हरिमुद्दिश्य या क्रिया ।
सैव भक्तिरिति प्रोक्ता तया भक्तिः पराभवेदि-त्युक्तेः।साक्षाद्भ भक्तिसाधनान्यपि भक्तिशब्देनैव व्यवह्रियन्त इति परिभाषा । तामनुसृत्योच्यते-भक्तिर्द्विविधा विहिता ऽविहिता चेति । तत्र अविहितेत्यनेन न विहितविरोधी निषेधो गम्यः। किं तर्हि ।तद्विलक्षणा स्वाभाविकी रागात्मिकेति सा तूक्ता पुरस्तात् । अथ विहितापि द्विधा । साध्यभूता साधनभूता चेति । साध्यभूतैव फल-भूतेति चोच्यते । सैव पराभक्तिः पूर्वमुक्तलक्षणा। साधनभूता भक्तिः पराभक्तिः साधनात्मिका ।

पराभक्ते र्निर्गुणत्वनिष्कामत्व प्राधान्येन तत्सा-
धनभक्त्या अपि निर्गुणा निष्कामा चेति संज्ञा-
भ्यां यथायथमुपचारः । अन्यदाऽन्यार्थकामादि-
साध्यसाधनत्वे तु सापि सगुणा सकामा चेत्यु-
च्यते ।

श्रीकृष्णचरणस्पर्शकामै र्मुमुक्षुभि र्निष्कामै
र्भक्तैः सकामा भक्ति र्हेया । निर्गुणाभक्तिः सेव्या
तथापि सान्यसाधनेभ्यो वरा ।
यतो हि भगवद्भक्तिः सर्वेषां सर्वकामदा ।
स विधास्यति ते कामान् हरिर्दीनानुकम्पन इ-
त्याद्युक्तेः । तथा च यस्माद्भागवती भगवत्सम्ब-
न्धिनी भक्तिः सर्वसाधनश्रेष्ठेत्यतो देवैरपि
वन्दिता नानाकामवरेप्सुभिः पुरुषैः सेव्या ।
यतस्तेषां सर्वकामपूरिका भगवद्भक्तिरेव ।
भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते ।
स्वभावगुणभेदेन पुंसां भावो विभिद्यत इत्यादि
(२७७) वचनै र्भक्तियोगो बहुविधो यदुक्तस्तत्

---

(२७७) पुंसां स्वभावगुणभेदेन भावोऽपि भक्तियोगोऽपि तामसराजस सात्त्विकाख्यो भवति । तेऽपि क्रमशः सात्त्विक-कनिष्ठसात्त्विकमध्यमसात्त्विकोत्तमाः । अन्ये त्वेवं मन्यन्ते—सात्त्विकराजसतामसानां कनिष्ठमध्यमोत्तमानां प्रत्येकं कनिष्ठोत्तम कनिष्ठमध्यम कनिष्ठप्राकृतभेदेन त्रिधेति ॥

साधनभक्तिप्रपञ्चपर्यालोचनयैव । परा भक्तिस्त्वेकधैव ।

व्यवसायात्मिका बुद्धि रेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनामिति गीतोक्तेः । तथा च सख्याद्यात्मिका भक्तिरपि या पूर्वमुक्ता सा साध्यपराभक्तिः (२७८) साधनात्मिकेत्यायाति ।

विहिता भक्तिः पुनस्त्रिधा । कर्ममिश्रा कर्मज्ञानमिश्रा ज्ञानमात्रमिश्रा चेति भेदात् । तत्र कर्ममिश्रापि त्रेधा। पापनाशार्था भगवत्प्रीत्यर्था विधिसाध्यार्था चेति। एवं राजस्यपि त्रेधा। विषयभोगार्था। यशोऽर्था । ऐश्वर्यार्था चेति। राजस तामस भक्तेस्तु योग्यतया ऽर्चनभक्तावेव विनिवेशो बोध्यः। एवं कर्मज्ञानमिश्रापि त्रेधा। उत्तमा मध्यमा प्राकृता चेति । सत्त्वतारतम्यात् ।

निष्ठा भक्तिरपि षड्विधा । यथा माधुर्यका-

---

(२७८) भक्तिशब्दस्य प्रियादिषु पाठात्परा शब्दस्य न पुंवद्भाव इति तु न समीचीनम् । कर्मधारये तदप्रवृत्तेः । तस्मात परेति संज्ञैव । परभक्तिरित्युक्तिस्तु असंज्ञात्वे पुंवद्भावे भेति ज्ञेयम् ॥

दम्बिन्याम्–उत्साहमयी । घनतरला । व्यूढ-विकल्पा । विषयसङ्गरा । नियमाक्षमा । तरङ्गरङ्गिणीति । एतद्विवरणार्थ मुच्यते–

तत्कामेनापि जीवेन नवधा भक्तिरुत्तमा ।
कर्त्तव्या श्रीहरावेव कायेन मनसा गिरेति ।

तत्कामेन पराभक्तिकामेन । तत्र श्रवणादीन् प्रारभमाणो भक्तः स्वस्मिन् परमवैष्णवत्वं मत्वा स्वस्य श्रवणादीनां महोत्साहं जनेषु दर्शयतीत्युत्साहमयी । स्वाधीनकृतानि भक्त्यङ्गानि कदाचिद्यथावन्निर्वहन्ति कदाचित् प्रमादेन न निर्वहन्तीति घनत्वं तरलत्वं च यस्मात् तस्मात् घनतरला । किमहं सपरिकरः स्त्रीपुत्रादीन् स्वानुकूलीकृत्य श्रीकृष्णपरिचर्यायां नियोज्य तैः सह समचित्तो गृहे तं भजे यतो हरिभक्तानां गृहादयो बाधका न भवन्ति गृहे संविशता मित्याद्युक्तेः । किं वा तान्नानास्वभावान् विषयप्रियान् दुःखप्रदान् परित्यज्यैकान्ते विक्षेपशून्ये वने यथालाभसंतुष्टो वैष्णवसेवकोऽमानी मानदः शीतोष्ण सहनशीलः सर्वसम स्तं भजे । स्त्रीपुत्रादि सङ्गे हि यथावन्न भजे न सुखमिति । नित्यार्त्तिदेनेत्याद्युक्तेः । तत्र किं भगवत् प्राप्तये श्रवणमेव

ग्रहीतव्यम् । कीर्त्तनं स्मरणं वा । अथवा नवान्यप्यङ्गानि । किंवा तत्क्षेत्रपर्यटनम् । किंवा सर्वभोगत्यागरूपं तप इत्येवं व्यूढा व्यारूढा विकल्पा विचारा यस्यां सा व्यूढविकल्पा । तस्य भक्तस्य पूर्वाभ्यस्तैः शब्दादिभि र्विषयै र्नित्यं संगरो युद्धं कदाचित् त्यागेन तेषां पराजयः कदाचित् सेवनात् पराजय इति विषयसंगरा । अद्यारभ्य भगवतो मयेयन्ति नामानि ग्रहीतव्यानि । एतावत्यः प्रणतयोऽपि कार्याः । यावता कालेन तदर्चनं कार्यं मनसा ध्यानं च तावद् विमुखैः सह संभाषणं कदापि न कर्त्तव्यम् । वैष्णवा दानमानाभ्यां सेवनीयाश्चेत्यादिषु नियमेषु तत्तत्समये तस्य तथा नक्षमत्वमिति नियमाक्षमा । श्रवणादिष्वासक्तस्य भक्तस्य तरङ्ग इति तरङ्गरङ्गिणीति ।

प्रथमं तु भगवद् गुणग्रथनरूपग्रन्थश्रवणं भक्तिसाधनम् । द्वितीया द्रवीभावपूर्विका मनसो भगवदाकारतावृत्तिरूपा भक्तिः । तत्फलं सकलानर्थमूलाऽज्ञाननिवृत्तिर्ब्रह्मज्ञानम् । तस्य तत्त्वमस्यादि वाक्यं श्रवणद्वारा साधनम् । तेन–

नित्योऽहं निर्विकल्पोऽहं निराकारोऽह मव्ययः ।

सच्चिदानन्दरूपोऽहं परिपूर्णो ऽस्म्यहं सदा ।
ब्रह्मैवाहन्न संसारी मुक्तोऽहमिति भावयेदिति ॥

विहिता भावना संपद्यते । श्रवणादि नवाङ्गया भक्त्या प्राप्तो यो हरौ प्रेमा सा दशमी भक्ति र्नवधाभक्ते र्न केवलं प्राणरूपा किन्तु जीवरूपा च । तत्प्रादुर्भावक्रमो यथा-

आदौ श्रद्धा ततः साधुसङ्गोऽथ भजनक्रिया ।
ततो ऽनर्थनिवृत्तिस्स्यात् ततो निष्ठा रुचिस्ततः ।
अथासक्तिस्ततो भावस्ततः प्रेमाऽभ्युदञ्चति ।
साधकानामयं प्रेम्णः प्रादुर्भावे भवेत् क्रम इति ।

तत्र श्रद्धा साधुसङ्गयोरन्योन्य साध्यसाधनत्व-मित्यपि ज्ञेयम् । यत उक्तम्-

सत्सङ्गात् सत्कृपा तेषां धर्मे श्रद्धा ततः कृतिः ।
भक्त्यङ्कुरस्ततस्तत्र स्वरूपावगमः पुनः ।
प्रेमवृद्धिः क्रमेणैव प्राणत्यागावधि भवेत् ।
प्राणान् मुञ्चेन्न चात्रासौ प्रेम मुञ्चति तत्वविदिति

सत्सङ्गस्य सत्कृपाया व्यापारत्वाद् व्यापार-व्यापारिणोरभेदः । प्रेम्णा द्रुतस्य चित्तस्य प्रेम-धारावाहिकी मधुधारावदविच्छिन्ना प्रेमगतिः प्रेमलक्षणा भक्तिः । घुणाक्षरन्यायेन यदृच्छया जायमानेन सत्सेवनाद्यात्मकेन सुकृतेन सत्कृपा

भगवत्कृपा च । तदा साधुसङ्ग इत्यपि क्रमे बोधनीयम् । एतत् क्रमविवक्षया नारदेन चोक्तम्—तस्याः साधनानि गायन्त्याचार्याः । तत्तु विषयत्यागात् सङ्गत्यागाच्च । अव्यावृत्तभजनात् । लोकेऽपि भगवद्गुणश्रवणकीर्त्तनात् । मुख्यतस्तु महत्कृपयैव भगवत्कृपा लेशाद्वा । महत्सङ्गस्तु दुर्लभोऽगम्यो ऽमोघश्च । लभ्यतेऽपि तत्कृपयैव। तस्मिंस्तज्जने भेदाभावात्। तदेव साध्यतां तदेव साध्यता मिति (२७९) ।

---

( २७९ ) दुर्लभो भक्तिहेतुत्वात् । तच्चोक्तमेकादशे विदेहेन मुनिना—

दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनमिति ।

अस्य दुर्लभ इत्यादि पद्यस्यार्थो यथा—देहिनां नानादेहधारिणां जीवानां क्षणभङ्गुरोऽपि मानुषो देहो दुर्लभः । शुभ कर्म कार्यत्वात् । तत्रापि मनुष्यदेहेऽपि वैकुण्ठप्रियदर्शनं दुर्लभं मन्येऽहम् । वैकुण्ठो भगवांस्तस्य प्रिया भागवताः । संतुष्टः सततं योगीत्यादिपद्यैर्भगवता प्रतिपादिता भगवत्प्रियास्तेषां दर्शनमित्यर्थः । अतो महत्सङ्गस्त्वमोघो ऽतुल्यश्चेति ।

जड़भरतेन चोक्तम्—रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद् गृहाद्वा । न च्छन्दसा नैव जलाग्नितर्पणै र्विना महत् पादरजो ऽभिषेकमिति ।

रहूगणेनाप्युक्तम्—अहो नृजन्माऽखिलजन्मशोभनं किं जन्मभिस्त्वपरैरप्यमुष्मिन् । न यद्धृषीकेशयशःकृतात्मनां महात्मनां वः प्रचुरः समागम इति । महत्सङ्गस्तु तत्कृपयैव भगवत्कृपयैव । तस्मिंस्तज्जने च भेदस्याभावात् । यस्य भागवताः प्रीतास्तस्य प्रीतो हरिः स्वयमित्याद्युक्तेः ।

अथ सत्सङ्गस्य भगवद्भक्तिप्रादुर्भावसाधनत्वसंबन्धे किञ्चित् प्रपञ्च्यते—ननु सत्यमेव परमसुखप्रदा भगवद्भक्तिरेव । तथापि सा स्वान्तःकरणे हन्त नोत्पद्यते । किं कुर्मः । कथमाशु प्रादुर्भवेदिति चेत् तत्रोच्यते—

भक्त्यङ्गादाशु सत्सङ्गाद्भक्ति र्भवति नान्यथा ।
प्रार्थनीयो ह्यतः सर्वैः सत्सङ्गो मुनिदुर्लभ इति ।

अस्य भक्त्यङ्गादित्यादि पद्यस्यार्थो यथा—भक्त्यङ्गादेव सत्सङ्गादाशु भक्ति र्भवति । नान्यथा साधनकोटिभिः । स्वतन्त्रत्वात्तस्याः । अतः सर्वैः सत्सङ्गः प्रार्थनीयो यतो मुनिदुर्लभ इति । पुनश्च—

सत्सेवया भगवतः कूटस्थस्य मधुद्विषः ।
रतिरासो भवेत् तीव्रः पादयोर्व्यसनार्दन इति ।

तदर्थमेव च सतां प्रचारः । तदुक्तं श्रीविदुरेण—

जनस्य कृष्णाद्विमुखस्य दैवादधर्मशीलस्य सुदुःखितस्य ।
अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्दनस्येति ।

सत्सङ्गं विना भक्तिर्नोपलभ्यते इति स्वमुखेनाप्युक्तं श्रीभगवता

प्रायेण भक्तियोगस्य सत्सङ्गेन विनोद्धव ।
नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामहमिति ।

स्वस्य सतां प्रापणत्वे हेतुश्च स्वस्य सतामाश्रयभूतत्वमुक्तम् ।
सतां प्रसङ्गान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः।

इत्थं च साधनपरिपाकेन कृष्णकृपया तद्भक्तकृपया वा भावभक्तिर्भवति । तस्याश्चिन्हानि सामान्यतो नव, यथा—

शान्तिरव्यर्थकालत्वं विरक्तिर्मानशून्यता ।
आशाबन्धः समुत्कण्ठा नामगाने सदारुचिः ।
आसक्ति स्तद्गुणाख्याने प्रीतिस्तद्वसतिस्थले ।
इत्यादयो ऽनुभावाः स्युर्जाताभावाङ्कुरे जनइति

तदाकृष्णसाक्षात्कारे योग्यता भवति ।

---

तज्जोषणादाश्वपवर्ग वर्त्मनि श्रद्धा रतिर्भक्ति रनुक्रमिष्यति ॥ इत्युक्तेः । अतएव सत्सङ्गः प्रार्थ्यते ।

यावत् ते मायया स्पृष्टा भ्रमाम इह कर्मभिः ।
तावद्भवत्प्रपन्नानां सङ्गः स्यान्नो भवे भव इति ।

भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो भूयादनन्त महताममलात्मनां हि । येनाञ्जसोल्बणमुरुव्यसनं भवाब्धिं नेष्ये भवद्गुणकथामृतपानमत्त इति । ध्रुवेण चोक्तम् ।

तस्मादऽमूस्तनुभृतां महमाशिषोऽज्ञ आयुः श्रियं विभवमैन्द्रियमाऽऽविरञ्च्यात् । नेच्छामि ते विलुलितानुरुविक्रमेण कालात्मनोपनय मां निजभृत्यपार्श्वमिति ॥

प्रह्लादेनापि प्रार्थितम् । यतो भगवतसङ्गिसङ्गात् परमानन्दानुभवो भवति तस्मादहमपि आयुः श्रियं च आविरञ्च्यादैन्द्रियवैभवं च नेच्छामि । तर्हि किमिच्छसि । तत्राह—निजभृत्यपार्श्वं मामुपनय । तत्र दुःखाद्यभावान्निर्विक्षेपं ते स्मरणादिकं भविष्यतीति भाव इति ॥

सत्सङ्गाभावे दुःसङ्ग एव प्रायेण रुचि र्जायत इति सत्सङ्गप्रत्यनीकत्वाद्। दुःसङ्गस्तु सर्वथा हेयः यथोक्तं नारदेन—दुःसङ्गस्सर्वथैव त्याज्यः। काम क्रोध-मोह-स्मृतिभ्रंश बुद्धिनाश-सर्वनाशकारणत्वा दिति। अन्यत्राप्युक्तम्—

असत्सङ्गाद् गुणज्ञोऽपि विषयासक्तमानसः।
अकस्माद्विलयं याति गीतरक्तो यथामृग इति।

दुष्टाश्चाभक्ताः। तल्लक्षणं यथा—हरति परधनं निहन्ति जन्तून् वदति तथानृतनिष्ठुराणि यश्च। अशुभजनितदुर्मदस्य पुंसः कलुषमते र्हृदि तस्य नास्त्यनन्तः॥ न सहति परसंपदं विनिन्दां कलुषमतिः कुरुते सतामसाधुः। न यजति न ददाति यश्च मर्त्यो मनसि न तस्य जनार्दनो ऽधमस्य॥ अशुभमतिरसत्प्रवृत्तिसक्तः सततमनार्यविशालसङ्गमत्तः। अनुदिनकृतपापबन्धयुक्तः पुरुषपशु र्न हि वासुदेवभक्तः॥ परम सुहृदि बान्धवे कलत्रे सुततनया पितृ मातृ भृत्यवर्गे। शठमति रुपयाति योऽर्थतृष्णां तमधमचेष्टमवेहि नास्य भक्तमित्यादि निगमजातैर्निगमितम्। लोकानां भगवद्भक्तत्वे तत्पितृपितामहादीनां बाहुल्येन प्रमादादिरेव दोषः। यदि

हि ते हरिभक्ताः स्युस्तदा तत्पुत्रपौत्रादयोऽपि तथा विधाः स्युः । यदि स्वयं पूर्वपुरुषा विषयिणः स्युस्तदा पुत्रपौत्रादीनां का कथा वर्णनीया । अत्र वेन एव दृष्टान्तः। यत एवं तस्माद्धरिभक्तैः स्वकुटुम्बोद्धारार्थं पुत्रपौत्रादिभिः सहैव हरिकथा श्रोतव्या । हरिकथा श्रवणाद् यद्येको ऽपि हि हरिभक्तः स्यात्तदा त्रिःसप्तभिः पितृभिः सहात्मानमुद्धरिष्यति । प्रह्लादवत् । लोकादि वासनाश्च तत्र ज्ञानप्रतिबन्धत्वेन हेयाः । यथोक्तम्—

लोकवासनया जन्तोः शास्त्रवासनयापि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ।
ज्ञानवान् वासनाहीनः शान्तिमाप्नोति शाश्वतीम्
अज्ञानी वासनाधीनः क्लेशौघैः परिभूयत इति ।
अतो दारसुता पुत्राद्यासक्तिं सर्वदुःखदाम् ।
त्यक्त्वा श्रीवल्लभे भक्तिः कर्त्तव्या स्त्रीनरादिभिः इति ।

भगवद्भक्तिसाधका धर्मा भगवद्धर्मा इत्युच्यन्ते । क्वचिच्च गौणभक्ति रपराभक्तिरित्यादि शब्दैर्व्यवह्रियते । तेषु तावत् त्रिंशल्लक्षणो धर्मो नारदेन युधिष्ठिरम्प्रति कथितो यथा—

सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः ।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ।
संतोषः समदृक्सेवा ग्राम्येहोपरमः शनैः ।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ।
अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ।
तेष्वात्मदेवता बुद्धिः सुतरान्नृषु पाण्डव ।
श्रवणं कीर्त्तनं चास्य स्मरणं महतां गतेः ।
सेवेज्यावनतिर्दास्यं सख्यमात्मनिवेदनम् ।
नृणामयं परो धर्मः सर्वेषां समुदाहृतः ।
त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यतीति ।

एषु श्रवणादीनि श्रवणं कीर्त्तनं विष्णोरित्यादीनि नवधा भजनान्युक्तपूर्वाणि ।

सत्यं च सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्या–भगवद्रूपमेवोक्तमतः सत्यं नियतः सेवेत । तच्च त्रयोदशविधं भारते द्रष्टव्यम् । तपः शौचशमादीनि पूर्वं प्रदर्शितानि । त्यागो दानम् । स्वाध्यायो यथोचितजपः । सन्तोषो दैवलब्धेनालं बुद्धिः । समदृक्सेवा समदृशां महतां सेवा । ग्राम्येहोपरमः प्रवृत्तेभ्योऽपि कर्मभ्यो निवृत्तिः । विपर्यये हेक्षा निष्फलक्रियाणामीक्षणम् । मौनं वृथालापनिवृत्तिः । आत्मविमर्शनं देहादि

व्यतिरिक्तात्मदर्शनम् । आत्मेति देवतेति बुद्धिः । इज्या अर्चनमन्यत् स्पष्टम् । एतैस्त्रिंशल्लक्षणै धर्मैः सर्वात्मा भगवान् प्रसन्नो भवति । अतस्तानेव धर्मान् सेवेत ।

तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तय इत्युक्तत्वात् ॥

एवं श्रवणकीर्त्तनादयो नवापि पूर्वोक्तसात्त्विकादि भेदेन प्रत्येकन्नव नव भेदास्तेभ्यो भेदेभ्यः कर्ममिश्रायाः सगुणाया भक्तेरेकाशीति भेदाः तान्येवैकाशीत्यङ्गानि विज्ञेयानि । एवं सात्त्विकादयः पूर्वोक्तभेदैस्त्रिणवकेन सप्तविंशति प्रकाराः । तत्रापि कायिक वाचिक मानसभेदेनैकाशीति प्रकाराणि भक्त्यङ्गानि । तेषां विस्तारस्तु भक्तिचन्द्रिकायां द्रष्टव्यः ।

नवधा भक्तिषु एकाङ्गभक्ति प्रादुर्भूतभक्तेर्भक्तस्य पृथक् पृथगुदाहरणं यथा—श्रीविष्णोः श्रवणे परीक्षिदभवद्वैयासकिः कीर्त्तने प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने । अक्रूरस्त्वभिवन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुनः सर्वस्वात्मनिवेदने बलिरभूत्कृष्णाप्तिरेषां परेति ।

अथान्येन प्रकारेण भक्त्यङ्गानि यथा—

हरिभक्तिविलासे स्याद्भक्तेरङ्गानि लक्षणम् ।
किन्तु तानि प्रसिद्धानि निर्दिश्यन्ते यथामति ।
गुरुपादाश्रयस्तस्मात् कृष्णदीक्षादि शिक्षणम् ।
विस्रम्भेण गुरोः सेवा साधुवर्त्मानुवर्त्तनम् ।
सद्धर्मपृच्छा भोगादि त्यागः कृष्णस्य हेतवे ।
निवासो द्वारकादौ च गङ्गादेरपि सन्निधौ ।

स्वभजननिर्वाहरूपभोजनवस्त्रादि स्वीकारः एकादश्यादि सात्त्विकव्रतम् ।

अश्वत्थतुलसी धात्री गौ र्ग्निसुरवैष्णवाः ।
पूजिताः प्रणता ध्याताः क्षपयन्ति नृणामघम् ।

कृष्णविमुखसङ्गत्यागः ।

शिष्यान्नैवानुबध्नीयाद् ग्रन्थान्नैवाभ्यसेद्बहून् ।
न व्याख्यामुपयुञ्जीत नारम्भा नारभेत् क्वचित् ॥

व्यवहारे कार्पण्यत्यागः ॥

अलब्धे वा विनष्टे वा भक्ष्याच्छादनसाधने ।
अविक्लवमतिर्भूत्वा हरिमेव धिया स्मरेत् ॥

शोकाद्यवशवर्त्तिता । अन्यदेवानवज्ञा । प्राणिमात्रे एवोद्वेगादिकरणत्यागः । वैष्णवचिन्हधारणम् । तन्निर्माल्यधारणम् । इष्टाग्रे नृत्यम् । दण्डवत् प्रणामः । हरिभक्तागमे ऽभ्युत्थानम् । हरिभक्तेष्वनुब्रज्या । श्रीमूर्त्तिस्थाने गमनम् ।

परिक्रमा । पूजा । सेवा । गीतम् । कीर्त्तनम् । जपः । विज्ञप्तिः । स्तवपाठः । महाप्रसादसेवा । चरणामृतपानम् । धूपादि सौरभ्यम् । श्रीमूर्त्तेः स्पर्शः । श्रीमूर्त्तिदर्शनम् । आरार्त्तिकदर्शनम् । गुणश्रवणम् । कृपाभावना । स्मरणम् । ध्यानम् । दास्यम् । सख्यम् । आत्मनिवेदनम् । निजप्रियवस्तु समर्पणम् । कृष्णार्थे सर्वकर्मकरणम् । शरणापत्तिः । विशेषस्तुलसीसेवा । वैष्णवशास्त्रसेवा यथाशक्ति दोलोत्सवादि करणम् । कार्त्तिकव्रतम् मथुरामण्डले वासः । वैष्णवमात्रसेवा । जन्माष्टमी यात्रादर्शनादि । एवमूनषष्टिर्भक्त्यङ्गानि । एतेषु सर्वतः श्रेष्ठानि शेषाणि पञ्चाङ्गानि योजनीयानि । तथा सति सर्वाणि मिलित्वा चतुष्षष्टि भक्त्यङ्गानि सम्पद्यन्ते । तानि पञ्चाङ्गानि यथा-श्रीमूर्त्तिसेवा कौशलम् । श्रीमद्भागवता स्वादः । स्निग्धहरिभक्तसङ्गः । नामकीर्त्तनम् । श्रीवृन्दावनवास इति । कृष्णार्थे सर्वकर्मकरणमित्यस्य भगवत्तोषार्थं भगवद्धर्मांश्चरित्वा भगवते तदर्पणमित्यर्थः सर्वकर्मार्पणमन्त्रो यथा-

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुसृतस्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पये तदिति ।

समर्पणसमये समर्पणध्यानं च यथा-

इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम्।
दारान्गृहान्सुतान् प्राणांस्तत्परस्मैनिवेदनमिति

भगवते सर्वकर्मसमर्पणमेव मुख्यः संन्यासः। ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्परा इत्याद्युक्तेः।

अविक्लवमतित्वपोषणार्थम्। पथिच्युतं तिष्ठति दिष्टरक्षितं गृहे स्थितं तद्विहतं विनश्यति। जीवत्यनाथोऽपि तदीक्षितो वने गृहेऽस्य गुप्तोऽपि हतो न जीवतीति भावयेत्।

प्रणाम मन्त्राश्च-

ब्रह्मा यस्य सुतः साक्षात् पौत्रो यस्य च शङ्करः।
लक्ष्मी यस्य कलत्रं हि तं वन्दे पुरुषोत्तमम्।
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च॥
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः।
कृष्णाय वासुदेवाय हरये परमात्मने।
प्रणतक्लेशनाशाय गोविन्दाय नमो नम इत्यादयः पठनीयाः।

अथ श्रवणाद्यपराभक्तिषु तावच्छ्रवणाङ्गंनिरूप्यते सगुणस्य निर्गुणस्य वा प्रतिपादकशब्दस्य श्रोत्रेण ग्रहणं श्रवणमित्युच्यते। तत्र विधिर्यथा-

या याः कथा भगवतः कथनीयोरुकर्मणः ।
गुणकर्माश्रयाः पुम्भिः संसेव्यास्ता बुभूषुभिरिति

बुभूषुभिर्हरिपार्षददेहधारणमिच्छद्भिः । ननु तद्देहप्रतिबन्धकानामघादीनां सत्त्वे कथं तत्त्वम् । तत्राह—शृण्वतां स्वकथा इत्यादि ।

हृद्गतः स्वगुणान् श्रुत्वा पूर्णः प्लावयते जनान् इति । प्रविष्टः कर्णरन्ध्रेणेत्यादि च । ननु शुद्धि कारणानि तु बहूनि साधनानि सन्ति । तत्किमिति कथा श्रवणेनेति चेत्तदधिकत्वमाह देवानां वाक्येन—शुद्धिर्नृणामित्यादिना । तत्रापि ।

श्रुतः संकीर्त्तितो ध्यातः पूजितश्चादृतोऽपि वा ।
नृणां धुनोति भगवान् हृत्स्थो जन्मायुताऽशुभम् ।
को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः ।
शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ।

इत्याद्युक्ते जन्मायुताशुभनाशस्मरणादधिकत्वम् । किञ्च—

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः । त एव पश्यन्त्यचिरेण तावकं भवप्रवाहो परमं पदाम्बुजमिति ।

वचनादचिराद्भवप्रवाहो परम इति न कालविक्षेपसहनदुःखम् । अचिराद्भवप्रवाहोपरमे हेतुश्च

श्रोतृभि र्भगवतः स्वसात्करणमित्युक्तं ज्ञाने प्रयासमुदपास्येत्यादिना ब्रह्मणा । एवं श्रीकृष्णजिच्छ्रवणमाहात्म्यं ज्ञात्वा भागवतास्ततो ऽन्यत् किमपि न कामयन्त इत्याह—न कामये नाथेत्यादि पृथुवाक्येन । या निर्वृतिस्तनुभृतामित्यादिध्रुववाक्येनापि । तस्मात् सुष्ठूक्तमभियुक्तैः-

नैव दिव्यसुखभोगमर्थये नापवर्गमपि नाथ कामये । यान्तु कर्णविवरे दिने दिने कृष्णकेलि चरितामृतानि म इति ।

श्रवणेनैव परीक्षितो मुक्ति र्दुन्दुभिघोषपूर्वकं श्रीमद्भागवते वर्णिता । तथाहि-

राज्ञा दैववशान्मृतोरगवपुष्यंशेऽर्पिते तत्सुतः सर्पेणैव मृतिं क्रुधाभिहितवाञ्छ्रुत्वाथ राजा वचः । त्यक्त्वा राज्यसुतादिकं सुरनदी तीरं श्रितः श्रीहरिं श्रोतुं सादरमानसो ऽभवदयं ध्यातुं प्रमातुं मुदेति ।

कृष्णाङ्घ्रिसेवा मधिमन्यमान इत्यादि च । द्विजोपसृष्टः कुहकस्तक्षको वा। दशत्वलं गायत विष्णुगाथा इत्यध्येषणा च। श्रवणानन्तरमन्तेसिद्धो ऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना । श्रावितो यच्च मे साक्षादनादि निधनो हरिः ।

नात्यद्भुतमिदं मन्ये महतामच्युतात्मनाम् ।
अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः ।
पुराणसंहितामेता मश्रौष्म भवतो वयम् ।
यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ।
भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ।
प्रविष्टो ब्रह्मनिर्वाणमभयं दर्शितस्त्वया ।
अनुजानीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे ।
मुक्तं कामाशयं चेतः प्रवेश्य विसृजाम्यसून् ।
अज्ञानञ्च निरस्तं मे ज्ञानविज्ञाननिष्ठया ।
भवता दर्शितं क्षेमं परं भागवतं पदम् ।

इत्यभिनन्दनञ्च । भागवतम्पदमित्यत्र पदशब्दस्य चरणारविन्दाभिधायकत्वेनानेन वैयासकिशब्दितेन।भेजेखगेन्द्रध्वजपादमूलमित्येवास्ति।

हरिकथाविमुखास्तु शोच्याः । यथोक्तम्-
तान् शोच्यशोच्यानविदो ऽनुशोचे हरेः कथायां विमुखानघेन । क्षिणोति देवो ऽनिमिषस्तु येषा मायुर्वृथा वादगतिस्मृतीनामिति (२८०) ।

---

(२८०) अहं तु तानसुराधमाननु शोचे वारं वारं शोचे। कथं भूतान् शोच्यशोच्यान् शोच्यै र्नरकगामिभिरपि ये शोच्या स्तान् । पुनः कथंभूतान् अविदः हिताहितज्ञानशून्यान् । यतो ऽघेन प्राचीनेन कर्मणा हरेः कथायां विमुखान् । कान् येषां वृथावादगतिस्मृतीनामनिमिषो देवः कालात्मा सूर्यः आयुः

न केवलं वृथायुः क्षयः किन्तु श्रवणभक्तिहीनो नरकभागित्याह ब्रह्मा-

यन्न व्रजन्त्यघभिदो रचनानुवादाच्छृण्वन्ति येऽन्य विषयाः कुकथा मतिघ्नीः । यास्तु श्रुता-

---

क्षिणोति । वृथा असच्छास्त्रवादा येषां श्रीभगवल्लीला गुणाभावात् । वृथा गति र्येषामनित्यत्वान्मनः क्षोभकत्वात् । तदुक्तं द्वितीये-आयु र्हरति वै पुंसा मित्यादीति ।

अन्यापि श्रवणराहित्यनिन्दा यथा-गां दुग्धदोहा मसतीञ्च भार्यां देहं पराधीनमसत्प्रजां च । वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखीति ।

नूनं दैवेन निहता ये चाच्युतकथा सुधाम् ।

हित्वा शृण्वन्त्यऽसद्गाथां पुरीषमिव विड्भुज इति ।

अस्य नूनं दैवेनेत्यादि पद्यस्यार्थो यथा-दैवेन प्राचीनेनाघकर्मणा नितरां हता वारं वारं जन्ममरणात् । के निहताः । ये भगवतोऽच्युतस्य कथासुधां हित्वा असद्गाथां विषयकथां गरलरूपां शृण्वन्ति । के इव तत्राह-विड्भुजः पुरीषमिव । यथा ग्रामशूकरा अमृतान्नं हित्वा पुरीषन्नरमलमश्नन्ति तथेति

श्वविड् वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ।

न यत्कर्णपथोपेतो जातु नाम गदाग्रज इति ।

अस्य श्वेत्यादि पद्यस्यार्थो यथा-श्वादि तुल्यै स्तत्परिकरैः सम्यक् स्तुतोऽप्यसौ पुरुषः पशुः । तेषामेव मध्ये श्रेष्ठश्चेत्तर्हि महापशुरेवेत्यर्थः ननु जीवनमेव तेषामायुषः फलमस्तु । तत्राह-

तरवः किं न जीवन्ति भस्त्राः किन्न श्वसन्त्युत ।

न खादन्ति न मेहन्ति किं ग्राम पशवोऽपर इति ।

नमेहन्ति न मेहनेन्द्रियकर्म कुर्वन्तीत्यर्थः ।

हतभगैर्नृभिरात्तसारास्तांस्तान् क्षिपन्त्यशरणेषु तमस्सु हन्तेति (२८१)।

श्रवणेषु च लीलाश्रवणं यथा मैत्रेयो विदुरम्प्रति।
साधु वीर त्वया पृष्टमवतारकथां हरेः।
यत्त्वं पृच्छसि मर्त्यानां मृत्युपाश विशातनीम्।
ययोत्तान पदः पुत्रो मुनिना गीतयार्भकः।
मृत्योः कृत्वैव मूर्ध्न्यङ्घ्रिमारुरोह हरेःपदमिति।

तेनैव शरीरेण मृत्युजय इत्याशयः। पार्षदत्वं चोक्तं यथा-

परीत्याभ्यर्च्य धिष्ण्याग्र्यं कृतस्वस्त्ययनो द्विजैः।
इयेष तदधिष्ठातुं बिभ्रद्रूपं हिरण्मयमिति।

धर्मः स्वनुष्ठितः पुंसामित्याद्युक्तेः कथारुचेः सर्वत्रैवानघत्वं श्रेष्ठत्वञ्च ज्ञेयम्। निवृत्ततर्षैरित्यादिपद्यव्याख्यानावसरे श्रीधरस्वामिभिरुक्तम्-

---

(२८१) वैकुण्ठं प्रति ते न व्रजन्ति। ते के? तत्राह ये अघभिदो हरेः रचनानुवादाल्लीलागुणानुवादादन्य विषयाः कामलोभादि संसारविषयाः कुकथाः शृण्वन्ति। कीदृशीः। मतिघ्नीः सुमतिविनाशिनीः। ताः काः। यास्तु हतैश्वर्यैं र्विक्षिप्तै र्नृभिः श्रुताः। न तु सभगैः। यत आत्तसाराः। आत्तो गृहीतः श्रोतॄणां सारः पुण्यं याभिस्ताः। भगवद्गुणा भावात्। ताः कथाः श्रोतॄंस्तमस्सु नरकेषु क्षिपन्ति। कीदृशेषु नरकेषु। अशरणेषु रक्षकाभावेष्विति॥

अत्र लोके त्रिविधा जनाः। मुक्ता मुमुक्षवो विषयिणश्चेति । तेषां मध्ये न कस्याप्यलं प्रत्यय इति (२८२)।

---

( २८२ ) तदुक्तं प्रियादासेन–

अभिन्नस्तद्वपुष्ट्वेनाऽणुत्वेन ब्रह्मणः पृथक्।
भिन्नोऽभिन्नो ह्यतो जीवो मुक्तोबद्धस्तदाश्रित इति ।

मध्यमत्वान् मुमुक्षुश्चेति शेषः ।

अस्याभिन्न इत्यादि पद्यस्यार्थो यथा–ननु नात्यभेद-इत्युक्ते स्वभेदगन्धबोधोऽपि जात इति तत्राह–अभिन्न इति। य आत्मनि तिष्ठतीत्यनया श्रुत्या जीवस्य भगवद् देहत्वेन तस्माद्देहिनो ब्रह्मणो जीवो भिन्नः। स्थूलदृष्ट्या देहदेहिनो रभेदान्वयदर्शनादभिन्न इति व्यपदिश्यते। एषोऽणुरात्मेत्य-नया श्रुत्या तदणुत्वेन ब्रह्मणो विभोः परमेश्वरात् सूक्ष्मदृष्ट्या भिन्नो वस्तुतः। तस्माद् भिन्नाभिन्न एव । यतस्तदाश्रित इति। कथंभूतो जीवः। कश्चिद्बद्धः कश्चिन्मुक्तो मध्यत्वात् कश्चिन् मुमुक्षुश्चेति। तेषु बद्धस्त्रिविधः। नित्यबद्धबद्धविषयि-भेदात्। तेषु नित्यबद्धो यथा–

देहे यस्यात्मबुद्धिश्च देहधी र्यस्य चात्मनि।
स एवागमसिद्धान्ते नित्यबद्ध इति स्मृत इति ॥

स तु नित्यसंसारीति–

स्वात्मात्मानं परं मत्वा परमात्मान मेव च।
आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताज्ञतेति।

श्रीमद्भागवते निन्दितः तस्मादधमाधमां गतिं गच्छतीत्युक्तं भगवता–

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिमिति ।

बद्धो यथा—देहात्मध्यानयोगेन शिश्नोदरपरायणः ।
स बद्धः कथितः सद्भिः सत्सङ्गादास्तिको भवेदिति

विषयी यथा—देवानिष्ट्वेत्यादि पद्यैरुक्तः । इहैव येभ्यो विरक्तोऽयं तेषु देहपातादूर्ध्वमपि स्वर्गादिषु विषयेषु कृतनिश्चयसंकल्पाः कुबुद्धयो विषयिणइति तदाशयः । अथ मुक्त जीव लक्षणम्—

न मनो भगवद्रूपाद्देहादौ कुत्र कर्ह्यपि ।
यस्य याति सवै मुक्तो मुक्तिदः कृष्णवत्सल इति ।

मुमुक्षुजीवाश्चतुर्विधाः । कर्ममिश्रवैराग्यमिश्रज्ञानमिश्रशुद्धभक्त्याश्रयभेदात । तत्सामान्यलक्षणं यथा—

ब्रह्मादिस्तम्बपर्यन्तं ब्रह्माण्डं निरयोपमम् ।
मत्वा कृष्णं भजेत्सोऽयं मुमुक्षुः कथितो बुधैरिति ।

वस्तुतस्तु—मुक्तो वै भगवद्भक्तो बद्धस्तद्विमुखोऽधमः ।
अतो वै कवयो नित्यं भक्तिं कुर्वन्तिमाधव इति

संक्षेपः । तस्माद्धरि भक्त एव मुक्तो भगवत्प्रियत्वात ।

यथा त्वं सह पुत्रैस्तु यथा रुद्रो गणैः सह ।
यथा श्रियाभि युक्तोऽहं तथा भक्तो ममप्रिय इत्युक्तेः ।

न श्रीः श्रीत्वेन प्रिया अपि तु भक्तात्वेनैवेत्युक्तं भवति । तदुक्तम् । न तथा मे प्रियतम इत्यादि । श्रियमनुचरती मित्यादि च । मुक्तोऽपि जीवो ब्रह्मरूपो न भवति किं तु पार्षद रूप एवेति । अस्यानुदास्यमेवास्मत्पितामहो वत्रइति बलयुक्तेः तस्मै आत्मानं च ददामीति श्रुतेरभिप्रायस्तु अपवर्गेश्वरोऽपि भगवांस्तदधीनो भवतीति । अहं भक्तपराधीन इति श्रीभगवदुक्तेः ।

अव्वर्थनामत्वान् मुक्तिदश्च मुकुन्दएव देवो नान्यः। तदुक्तं प्रियादासेन—

स एव मोक्षदो नान्यो देवः कोऽपि जगत त्रये।
इत्युक्तं निर्जरैर्देवैः श्रीमद्भागवते स्फुटमिति।

अस्य स एवेत्यादि पद्यस्यार्थो यथा—मोक्षदस्तु स एव स्वतन्त्रो भगवान्नान्यः कोऽपि देवो जगत् त्रये इति निर्जरैः शास्त्रविद्भिर्देवैरुक्तम्। तद्यथा श्रीमद्भागवते—

वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः।
एक एवेश्वरस्तस्य भगवान् विष्णुरव्यय इति।

मुचुकुन्दम्प्रति देवानां वचनम्।

एवकारान्नान्यः कोऽपीत्यन्ययोगव्यवच्छेदः। अत ईश्वर-कृपालभ्यत्वात सकामानामपि भक्तानां किम्पुनर्निष्कामानां भक्तानां स एव मुकुन्दो भुक्तिमुक्ती उभे ददाति। हरिवंशेऽप्युक्तम्—

अहं कैलासनिलयमासाद्य वृषभध्वजम्।
आराध्य तं महादेव मस्तुवं सततं शिवम्।
ततः प्रसन्नो मामाह वृणीष्वेति वरं हरः।
ततो मुक्तिर्मया तत्र प्रार्थिता देवसन्निधौ।
मुक्तिं प्रार्थयमानं मां पुनराह त्रिलोचनः।
मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः।
तस्माद् गत्वा तु वदरीं तत्राराध्य जनार्द्दनम्।
मुक्तिं प्राप्नुहि गोविन्दान्नर नारायणाश्रम इति घण्टा-कर्णोक्तेः।

ननु अपवर्गदाने त्वसमर्था देवा भुक्तिदाने विभवः श्रूयन्ते। तत्राह—यां भुक्तिं देवा यच्छन्ति तामपि तस्य भगवत आज्ञया ऽतो न स्वतन्त्रास्ते। तदुक्तं भगवता—यो यो यां यामित्यादि

कृष्णेऽमलभक्तिलिप्सु र्नित्यं तत्कथां शृणुयात् तदुक्तम्-

यदुत्तमश्लोक गुणानुवादः संगीयते ऽभीक्ष्णममङ्गलघ्नः। तमेव नित्यं शृणुयादभीक्ष्णं कृष्णे ऽमलां भक्तिमभीप्समान इति।

तत्रापि श्रीमद्भागवतश्रवणं तु परमश्रेष्ठं तस्य तादृश प्रभावमयशब्दात्मकत्वात् परमरसमय-

---

अतः कर्मफलदो भगवानेव। नान्यः कोऽपि देव इति। तदुक्तं मार्कण्डेयेन—अमेणाराधिता इत्यादि॥

स्वपादसेविनां पुंसां लक्ष्मी भर्तुश्चतुर्भुजात्।
धर्मार्थकाममोक्षाणां दाता नान्योऽस्ति कश्चनेति स्कान्दे च-

लक्ष्मीशः सर्वदो नान्यो लक्ष्मीशोऽप्य ऽपवर्गदः।
एक एव हि लक्ष्मीशस्ततो ध्येयो न चापरः॥
भुक्ते र्मुक्ते रिहान्यत्र नान्यो दाता जनार्दनात्।
तस्माच्चतुर्भुजो नित्यं सेवनीयः सुखेप्सुभिः।
विहाय केशवादन्यं ये सेवन्तेऽल्पमेधसः।
संसारचक्रे गहने ते विशन्ति पुनः पुनः।
एक एव हि सर्वेशो हृषीकेशः परात्परः।
तं सेवमानः सततं सेव्यस्त्रिजगतां भवेत्।
एको धर्मप्रदो विष्णु स्त्वेको बह्वर्थदो हरिः।
एकः कामप्रदश्चक्री त्वेको मोक्षप्रदोऽच्युतः।
शार्ङ्गिणं ये परित्यज्य देवमन्यमुपासते।
ते सद्भिश्च बहिष्कार्या वेदहीना यथा द्विजा इति॥

त्वाच्च। इदं श्रवणं महन्मुखरितं चेत् महामाहात्म्यं जातरुचीनां परमसुखदं च। यस्मादुक्तम्-सन्मुखरितां भवदीयवार्त्तामित्यादि। महत्तमान्तर्हृदयान्मुखच्युत इत्यादि। स उत्तमश्लोकमहन्मुखच्युत इत्यादि च। अतो महद्भिः कीर्त्यमानमेव महत्फलं जनयति। भक्त्या च तन्नाम कथारुचेरेव परा काष्ठा।

तदेवं श्रवणं कीर्त्तनात् पूर्वमेव। तद्विना तदज्ञानात्। यदि साक्षादेव महत्कृतस्य कीर्त्तनस्य श्रवणभाग्यं न संपद्येत तदा स्वयमेवापि कीर्त्तनीयम्। तत्प्राधान्यात्।

तत्र प्रथमन्नाम्नः श्रवणमन्तः करणशुद्ध्यर्थमपेक्षितम्। शुद्धे चान्तः करणे रूपश्रवणेन तदुदययोग्यता भवति। सम्यगुदिते च रूपे गुणानां स्फुरणं संपद्यते। ततस्तेषु नामरूपगुणेषु सम्यक् स्फुरितेष्वेव लीलानां स्फुरणं सुष्ठु भवतीत्यभिप्रेत्य साधनक्रम उल्लिखितः।

एवं श्रवणाङ्गं निरूप्य कीर्त्तनाङ्गं निरूप्यते-कीर्त्तनं नाम सगुणस्य निर्गुणस्य वा बोधकशब्दस्योच्चारणम्। बहुभिर्मिलित्वा च कीर्त्तनं संकीर्त्तनमित्युच्यते। तत्तु चमत्कारविशेषात् कीर्त्तनादप्यधिकतरम्। अत एव।

कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः।
यत्र संकीर्त्तनेनैव सर्वः स्वार्थोऽपि लभ्यतइति।

कीर्त्तनं च। नोपांशु किन्तूच्चैरेव प्रशस्तम्। उपांशु तु जप एव प्रशस्तः। स च स्मरणेऽन्तर्भाव्यः। उच्चैः कीर्त्तनाभिप्रायेणैव–गायन्विलज्जो विचरेदिति; विलज्ज उद्गायति नृत्यते चेति; नामान्यनन्तस्य हतत्रपः पठन्नित्यादीनि वचनानि प्रवर्त्तन्ते। मृषा गिरस्ता इत्याद्युपक्रम्य यदुत्तमश्लोक यशोऽनुगीयत इति समाप्तावुक्तन्तेन सुकण्ठता चेद्‌ गानरूपमपि कीर्त्तनं कर्त्तव्यमिति फलति। तदुक्तम्–

गीतानि नामानि तदर्थकानि गायन् विलज्जो विचरेदसङ्ग इति।

अत्र तदर्थकानीति तस्य भगवतो जन्मकर्मएवार्थो येषां तानीत्यक्षरार्थः। तथा च नामकीर्त्तनं गुणकीर्त्तनं लीलाकीर्त्तनं चेति त्रिविधं कीर्त्तनम्फलितम्। तथा संकीर्त्तनमपीति।

एतावतालमघनिर्हरणाय पुंसां संकीर्त्तनं भगवतो गुणकर्मनाम्नामित्यत्र कर्माणि लीला इत्यवगन्तव्यम् यस्यस्मृत्या च नामोक्त्येत्यादिना नामकीर्त्तनम्।

इदं हि पुंसस्तपसः श्रुतस्य स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः । अविच्युतो ऽर्थः कविभि र्निरूपितो यदुत्तमश्लोक गुणानुवर्णन मित्यादिना गुणकीर्त्तनम् ॥

शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम् ।
कालेन नातिदीर्घेण भगवान् विशते हृदीति-
लीला कीर्त्तनञ्च प्रदर्शितम् ।

निजदैन्यनिजाभीष्टविज्ञप्तिः स्तवपाठश्चेत्युभौ कीर्त्तने एवान्तर्भाव्यौ । अत एव यद्यन्यापि भक्तिः कर्त्तव्या तदा कीर्त्तन संयोगेनैवेति निश्चीयते । कीर्त्तनस्य भक्तिषु व्याप्तेः । तस्मादेव हि—यज्ञैः संकीर्त्तनप्रायै र्यजन्ति हि सुमेधस इति तत्र प्रोक्तम् ।

नामसंकीर्त्तनरसपानमत्तायमानमनसां मनस्विनां नामसंकीर्त्तनेनैव मुक्तेः सिद्धत्वादुक्तवर्णाश्रमधर्माणामपि नात्यन्तावश्यकत्व मिति ज्ञेयम् । कृतघ्नतापरिहारनिमित्तमपि नामकीर्त्तनस्यावश्यकता ।

रचिता पालिताश्चापि वयं येनेश्वरेण च ।
तन्नामापि न गृह्णीमः कथं स्यात्सुखसंभवइत्युक्तेः

श्रवणसंवलितं कीर्त्तनं सर्वथैव जीवस्य कृतार्थता हेतुः ।

तस्माद्गोविन्दमाहात्म्यमानन्दरससुन्दरम् ।
शृणुयात्कीर्त्तयेन्नित्यं स कृतार्थो न संशय इति वचनात् ।

जीवानामयं स्वभावो यद्गुणेषु ते रमन्ते। स्वगुणैर्दयादिभी रमयति भक्तानिति राम इति रामपदव्युत्पत्तेः रामो गुणरत्नाकर स्तत स्तत्र जीवा रमेरन् । दयादिभिरित्यत्रादिपदेन कृपानुकम्पानुक्रोशानृशंस्य-वात्सल्यसौशील्यसौलभ्यकारुण्य क्षमागाम्भीर्यौदार्य- धैर्यस्थैर्यचातुर्यकृतज्ञत्व मृदुत्वसौहार्द्द प्रमुखा भगवतोऽन्तः करणधर्मा विशिष्याश्रयणोपयोगिनो ग्राह्याः (२८३) ।

---

( २८३ ) श्रीरामगुणप्रस्तावे—

आरामः कामवृक्षाणां विरामः सकलापदाम् ।
लोकाभिरामः श्रीरामः सदेवो नः सदावत्विति ।

कौशिकवचसि आरामपदस्योपवनमर्थः । उपवनत्वं च चतुर्द्दशभुवनानां साक्षान्मूर्त्तिमद्रूपसौन्दर्यं तस्य निधानतयेति । यद्वा । संसारतापतप्तानामारमणादाराम इत्यर्थः । कामवृक्षाणां विरामो भक्तानां निष्कामत्त्वनिष्पादकः । सकलापदां च विरामः । सकलापद्रूपत्वात् सकलापदो दुष्टास्तेषां विरामो विनाश इति वा योजना । विरामइति देहली दीपकन्यायेन उभयान्वयी । यद्वा—कामवृक्षाणामारामः सर्वकामपूरण इत्यर्थः चरमशरीरत्वाद्भक्तानां पूर्वप्रारब्धभोगात् सकला आपदो येषां ते सकलापदो विरक्तभक्ताः । तेषां विरामो विश्रामस्थानमि-

नामोट्टङ्कित एव पदार्थबोधो जायत इति दार्शनिकानां समयः सर्वानुभवसिद्धः । अत एव पदार्थस्मरणसमकालन्नामस्मरणमपि जायते । तथा च प्रियवस्तुस्मरणे प्रेम्णा तन्नामोदीर्यते प्रेमिभिरिति जनस्वभावसिद्धमेवेति प्रियनामकीर्त्तनं प्रेमप्रवृद्धिसाधनं स्फुरति ।

वासुदेवस्य सर्वमयत्वाल्लोके यावच्छब्दास्ते सर्वेऽपि प्रपञ्चमेवादाय न निराकाङ्क्षाः स्युः किन्तु सर्वरचनाधिष्ठानन्नारायणमादायैव चरितार्था भवन्ति । तत एवोक्तम्-

---

त्यर्थो वा । भक्तप्रारब्धभोगनिर्वर्तकत्वेनैव नारायणस्य जनार्द्दन इति नाम हि प्रसिद्धम् । अनेन किमागतं यावद्रामं न भजन्ति, तावद् दुःखैर्मुहुरर्दिता एव जन्मजन्मसु जायन्ते जीवाः । श्रीरामगुणास्तु श्रुत्वा प्रेमभक्तिद्वारा तन्नामादिकीर्त्तनेन सुखिनो भूत्वा जन्मशून्या भवन्तीति ।

श्रीरामगुणनिरूपणपराण्यन्यान्यपि वाक्यानि यथा-

रामस्य पुरुषो लोके सत्यधर्मयशोगुणैः ।<br>
समो न विद्यते कश्चिद्विशिष्टः कुत एव तु ।<br>
दद्यान्न प्रतिगृह्णीयात् सत्यं वदति नानृतम् ।<br>
एतद् ब्रह्मण्य देवस्य रामस्य व्रतमुत्तमम् ।<br>
द्विः शरं नानुसन्धत्ते द्विः स्थापयति नाश्रितान् ।<br>
द्विर्ददाति न चार्थिभ्यो रामो द्विर्नाऽभिभाषत

इत्यादीनि वाल्मीकीयादौ द्रष्टव्यानि ।

देवतिर्यङ्मनुष्यादौ पुन्नाम्नि भगवान् हरिः ।
स्त्रीनाम्नि लक्ष्मीर्मैत्रेय नानयोर्विद्यते परमिति ।

एतदभिप्रायेण च रामे मित्रे जगन्मित्रं रिपौ रामे जगद्रिपुरित्युच्यते प्राचीनैः ।

रामापेक्षयापि सुलभत्वाज्जगत्तारणत्वे रामाद्रामनाम्नोऽभ्यर्हितत्वमुक्तं यथा–

राम त्वत्तोऽधिकं नाम इति मे निश्चितामतिः ।
त्वयैका तारितायोध्या नाम्ना च भुवनत्रयमिति

तच्च तारणन्नाम्नः कीर्त्तनादिद्वारेणैवेति विदां विदितमेव । अहो रामनाम्नो माधुर्यं सौन्दर्यमार्जवं च । यथा श्रीरामावतारः सरलस्तथा नामापि सरलमनायासेनैवोच्चार्यत्वात् । वर्णव्यत्यासादिनापि उच्चारणेन वाल्मीक्यादीनां कल्याणकरत्वाच्चेति ।

नामनामिनो रभेदाभिप्रायेण तु नाममाहात्म्यं प्रागेव प्रदर्शितम् । भगवन्मन्त्रा अपि नामान्येव । यतः श्रीनारदपञ्चरात्रे ओन्नमो नारायणायेत्यष्टाक्षरमन्त्रमुद्दिश्योक्तम्–

व्यक्तं हि भगवानेष साक्षान्नारायणः स्वयम् ।
अष्टाक्षरस्वरूपेण मुखेषु विपरिवर्त्तत इति ।

अत्र अवतारान्तरवदिति शेषः । परमेश्वरस्यैव वर्णरूपेणावतारो ऽयमित्यस्मिन्नर्थे उपष्टम्भिका

श्रुतिरपि यथा गोपालतापिन्यामष्टादशाक्षर मन्त्रप्रसङ्गे- तेष्वक्षरेषु भविष्यज्जगद्रूपं प्रकाशयमिति। एतया श्रुत्या अवरकालजातशब्दादिमयजगत्कारणत्वेन तद्वैलक्षण्यात् स्वतः सिद्धत्वं तथा भगवत्स्वस्वरूपाभिन्नत्वं तद्वैलक्षण्यं च नाम्नः सुख्यापितम्।

यत एवं तस्मात्-ते सभाग्या मनुष्येषु कृतार्था नृप निश्चितम्। स्मरन्ति स्मारयन्ति ये हरेर्नाम कलौ युग इति।

कृष्णं संकीर्त्तयन्मर्त्यः संसारान्मुच्यते यथा।
तथा नान्यः कलौ पन्था विद्यते पृथवीपते।

इति च साधु सिद्धान्तः स्थापितः। इत्थं सत्यपि भगवद्भक्ति वासनासन्तानवता मेकस्मादप्युदेशात्तत्र विश्वासो जायते। विमुखानां तु बहुभिरपि न कदापीत्येवं संतोष्टव्यम्।

क्वचित्तु प्रसङ्गेनाप्युपदेशे कुशलित्वम्। यथा सांख्यसूत्रे उक्तम्-पिशाचवदन्यार्थोपदेशेऽपीति (२८४)। क्वचित् पुनर्गुरुं विना सुहृदुपदेशादपि

(२८४) कश्चिच्छिष्यो गुरुमधीष्टवान् स उपदेशः क्रियतामिति। गुरुश्च तेन सह वनं गत्वा कस्यचिद् वृक्षस्य तले स्थित्वा तस्मै शिष्यायोपदेशं कृतवान्। तेन तद्वृक्षोपरि स्थितः पिशाचोऽपि तदुपदेशश्रवणेन श्रेयः प्राप्तवानिति।

कुशलता। यथा सांख्यसूत्र एवोक्तम्-पितापुत्र वदुभयोर्दृष्टत्वादिति (२८५)।

कस्कः कांस्कानुपदिशेदित्यत्रापि मास्तु नियमः। अन्योन्यं भावयन्तो मे भक्तामद्भावमेव हि। प्रेमयुक्ताश्च मद्भावं प्राप्नुवन्त्यचिरान्नृपेति भारतोक्तेः।

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परमिति गीतोक्तेश्च।

एकमेव श्रीरामनाम भगवतः सहस्रनामतुल्यमिति राम रामेति रामेति रमे रामे मनोरमे। सहस्रनामतातुल्यं राम नाम वरानने। इति पाद्मे श्रीशिवेनोक्तम्। ब्रह्माण्ड पुराणे-

सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत्फलम्। एकावृत्त्या तु कृष्णस्य नामैकं तत्प्रयच्छतीत्यु-क्तम्। न चायमर्थवाद इति कथनीयम्।

---

अतोऽन्यं प्रति क्रियमाणउपदेशः क्वचिदन्यस्मै अपि फलतीति सिद्धम्॥

(२८५) कश्चिद् ब्राह्मणो दारिद्र्याद् गुर्विणीं भार्यां तत्-पितृगृहे निःक्षिप्य प्रतिग्रहार्थं देशान्तरं गतो बहुना कालेन गृहमागतः पुत्रं दृष्ट्वा न ज्ञातवान्। तन्माता भर्त्तारं पुत्रं च विज्ञापितवती। ततः पितुर्ममायं पुत्र इति पुत्रस्य च ममायं पितेति उभयोरपि ज्ञानमभूदतः सुहृदुपदेशादपि क्वचिच्छ्रेयो-लाभः। सर्वसुहृदश्च प्रायेण ब्राह्मणा इत्यपि न विस्मर्त्तव्यमिति।

अहो हि वाक्ये चतुरक्षरे द्वे पुण्यस्य पापस्य निदानभूते । उच्चारणादेव नृणां मुनीन्द्रा नारायणश्चेति तथार्थवाद इति वचनात् । नाम माहात्म्ये ऽर्थवाद बुद्धिदोषोक्तेः । तस्माद्-

विधेयानि विचार्याणि विचिन्त्यानि पुनः पुनः ।
कृपणस्य धनानीव त्वन्नामानि भवन्तु नः ।
इति प्रार्थनीयं मनीषिभिः ।
प्रतिश्वासं सविश्वासं रामं वद दिने दिने ।
को विश्वासः पुनः श्वास आगमिष्यति वा नवा ।
धन्यस्यैव मुखे वाणी राम नाम समन्विता ।
अन्या कामकथा नृणां जनयत्येव पातकम् ।
सर्वधर्मोज्झिता विष्णोर्नाम मात्रैकजल्पकाः ।
सुखेन यां गतिं यान्ति न तां सर्वेऽपि धार्मिकाः ।
हे जिह्वे रससारज्ञे सर्वदा मधुरप्रिये ।
नारायणाख्यं पीयूषं पिब जिह्वे निरन्तरम् ।
हे जिह्वे कटुकस्नेहे मधुरं किं न भाषसे ।
मधुरं वद कल्याणि सर्वदा मधुरप्रिये ।
सर्वेषा मेव पापानां हरिकीर्त्तिधुनि नृणाम् ।
क्षालयेत् पापिनां पङ्कं नात्र कार्या विचारणेत्यादि

शतशः पुराणवचनानां जागरूकत्वात् स्वहित विद्भिरवश्यमेव विष्णुकीर्त्तनं कर्त्तव्यमिति(२८६)।

---

( २८६ ) श्रीकान्त कृष्ण करुणामय कञ्जनाभ कैवल्यवल्लभ

अथ ध्यानाङ्गन्निरूप्यते । स्मरणलक्षणं च । स एवं विधगुण इत्याकारा स्मृतिः । तच्च भगवता श्रीमद्भागवते उपदिष्टं यथा-

एतावान्योग आदिष्टो मच्छिष्यैस्सनकादिभिः ।
सर्वतो मन आकृष्य मय्यद्धावेश्यते यथेति ।

तं ध्यायेत्तं रसयेत्तं यजेत्तं भजेदिति । याज्ञवल्क्य श्रुत्या च विहितं स्मरणम् । श्रीकृष्ण स्मरणादेव निःसंदेहं कृतार्थत्वं मनसस्तदाकार-रूपत्वात् । तस्य च परमपुरुषार्थत्वात् ।

रागानुगायां स्मरणस्य मुख्यत्वम् । तच्च स्मरणं निजभावोचित--लीलावेशभावस्य श्रीकृष्णस्य तत्प्रियजनस्य च स्मरणं भक्तिसाधनम् । अनया दिशा श्रवणं कीर्त्तनमपि तथेति बोद्धव्यम् ।

तत्र भगवन्नामस्मरणं शुद्धान्तःकरणतामपेक्षत इति सापेक्षत्वात् । तद्भगवत् कीर्त्तनाच्चोत्त-रत्र सामान्येन स्मरणं पठितम् ।

भगवच्चरणस्मरणफलमाह—अविस्मृतिः कृष्ण-पदारविन्दयोः क्षिणोत्यभद्राणि च शं तनोति । सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं सविज्ञान-विरागयुक्तमिति ॥

---

मुकुन्द मुरान्तकेति । नामावलिं विमलमौक्तिकहार-लक्ष्मीं लावण्यवञ्चनकरीं करवाणि कण्ठ इति ॥

स्मरतः पादकमलमात्मानमपि यच्छतीति च आत्मान मपि यच्छतीत्यात्मानं स्मर्तुं वशीकरोतीत्यर्थः ॥

तदिदं स्मरणं पञ्चविधम्। यत्किंचिदनुसन्धानं स्मरणम्। सर्वतश्चित्तमाकृष्य सामान्याकारेण मनोधारणं धारणा। विशेषतः रूपादिचिन्तनं ध्यानम्। अमृतधारावदनवच्छिन्ना तद्ध्रुवानुस्मृतिः। ध्येयमात्रस्फुरणं समाधिरिति ॥

रामं स्मरन्नैव दुःखं याति वेदा वदन्त्यदः।
सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम्।
पुनस्तपस्वी भवति पङ्क्ति-पावन-पावनः इत्येताद्दृशं स्मरणमाहात्म्यं मनसि कृत्वैव सर्वेभक्तास्तदेव प्रार्थयन्ते। तथा हि दुःखमोचनार्थं नृपाणां जरासन्धकारागाररुद्धानां भगवत्स्मरणप्रार्थनामाह—

तन्नः समादिशोपायं येन ते चरणाब्जयोः।
स्मृति र्यथा न विरमेदपि संसरता मिहेति।

यथा स्मरणमाहात्म्यमुक्तं तथा नवाङ्गानामपि। ईश्वरतुष्टे रेकोऽपि बलीति शाण्डिल्यसूत्रोक्तेः।

रुचौ शक्तौ च सत्यां स्मरणापरित्यागेन पादसेवा कर्त्तव्येति पादसेवनाङ्गं विध्रियते। पादसेवनन्नाम विष्णु-प्रतिमापादपरिचर्या। पादेत्युप-

लक्षणम् । भगवद्गृहलेपनादिक-श्रीमूर्त्ति-दर्शन-स्पर्शनपरिक्रमानुव्रजन भगवन्मन्दिर-गङ्गा-पुरुषोत्तम-द्वारका-मथुरा-तदीय तीर्थस्थानगमनादयो ऽप्यत्रैवान्तर्भाव्याः । तत्परिकरप्रायत्वात् । यावज्जीवं तन्मन्दिरादि निवासस्तु शरणापत्तावऽन्तर्भवति । अत एव च शालग्रामशिलादौ यन्त्रात्मकादिषु च पूजाधिष्ठानेषु पादाख्याऽवयवादर्शनेऽपि तत्सेवनं संघटते । तदेव च दिक् प्रदर्शनेन प्रदर्शितं शाण्डिल्येन । यथा–पादोदकं तु पाद्यमव्याप्तेरिति (२८७) ।

अन्यान्यपि सेवाङ्गानि भक्तिसाधनप्रसङ्गे लिखितानि । तानि तत्रैव द्रष्टव्यानि ।

अशेषसंक्लेश शमस्य परमोपायश्च श्रीकृष्णचरणपरिचरणमेव । यत उक्तम्–

अशेष संक्लेशशमं विधत्ते गुणानुवादस्मरणं मुरारेः । कुतः पुनस्तच्चरणारविन्दपरागसेवारतिरात्मलब्धेति ।

---

( २८७ ) ननु पादोदकमुदरे मस्तके यस्य सोऽच्युत इत्युक्तं तद्यन्त्रात्मकादि पूजायान्तु न लभ्यते । तत्र तच्चरणाभावादिति न वाच्यम् । पाद्याख्य एव पूजनोपचारः पादोदकमिति ज्ञेयं न तु पादाख्याङ्गसंयुक्तं जलमेव पाद्यम् । तथा सति शालग्रामादावुत्सृष्टजले ह्यव्याप्ति रिति ॥

जन्मसाफल्यं च सेवयैवेत्युक्तं यथा-

तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः ।
नृणां येनेह भूतात्मा सेव्यते हरिरीश्वर इति ॥

अत्र सेव्यत इति सेवा च पादसेवोपलक्षिता देशकालाद्युचिता प्रतिमादौ परिचर्यादि पर्याया सर्वाऽपि अरुणोदयमारभ्यशयनपर्यन्तावेदितव्या। द्वात्रिंशत् सेवापराधाः पूर्वं टिप्पण्यां प्रदर्शिताः। मत्सेवया प्रतीतं चेत्याद्युक्तेर्निष्कामत्वोपलम्भनाद्भगवत्पादसेवायाः फलमशक्यवर्णनम्। तस्माद्विवेकिनस्तु सेवामेव प्रार्थयन्ते इत्याह ब्रह्मवाक्येन-

तदस्तु मे नाथ स भूरिभागो भवेऽत्र वाऽन्यत्र तु वा तिरश्चाम् । येनाहमेकोऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवमिति ।

अथार्चनाङ्गं निरूप्यते-अर्चनं नाम प्रतिमादौ गन्धपुष्पाद्युपचारार्पणम् । तच्चागमोक्तावाहनादिक्रमकम् । शुद्धिन्यासादि पूर्वाङ्गकर्मनिर्वाहपूर्वकम् । अर्चनं तूपचाराणां स्यान्मन्त्रेणोपपादनमित्युक्तेः । तन्मार्गे श्रद्धाचेदाश्रितमन्त्रगुरुस्तं तद्विधानं पृच्छेत् । लब्धानुग्रह आचार्यात् तेन सन्दर्शितागमइत्याद्युक्तेः । यद्यपि श्रीमद्भागवतमते पञ्चरात्राद्युक्तप्रकारेण भगवदर्चनमार्गस्याव-

श्यकत्वं नास्ति तद्विनापि शरणापत्त्यादीनामेकतमेनापि पुरुषार्थ सिद्धिरभिहितत्वात् तथापि ये तु संपत्तिमन्तो गृहस्थास्तेषान्त्वर्चनमार्ग एव मुख्यः । यथोक्तं वसुदेवं प्रति मुनिभिः ।

अयं स्वस्त्ययनः पन्था द्विजाते गृहमेधिनः ।
यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुष इति ।

अत्र इज्येतेति इज्या भगवद्विग्रहार्चा ज्ञेया । न तु मखादयः । तथा च—तद्याजिः पूजायामितरेषां नैव मिति शाण्डिल्यसूत्रम् (२८८) ।

तदकृत्वा हि निष्किञ्चनवत् केवलस्मरणादि निष्ठत्वे वित्तशाठ्य प्रतिपत्तिः स्यात् । ततश्च योऽमायया संततयानुवृत्त्या भजेत तत्पादसरोज गन्धमित्याद्युपदेशाद् भ्रश्येत् । तथा गृहस्थानां परिचर्यामार्गस्य द्रव्यसाध्यतयात्यन्तविधिपद्धति सापेक्षत्वाच्चार्चनमार्गस्य तदविशेषत्वाद्यथा कथं चनोपचारै र्निर्वाह्यत्वादप्यर्चन-मार्गस्यैव प्राधान्यम् ।

---

(२८८) यान्ति मद्याजिनोऽपि मामित्यत्र यजिः किं प्रसिद्धज्योतिष्टोमादि विषयः किं वा पूजावचन इति संशये अयं यजिः पूजायामेव प्रयुक्तः । कुतो ज्ञायते । विष्णुं पूजयेदित्यादिना नित्यकाम्यपूजा तादर्थ्ये विहिता । तस्याः परभक्त्यङ्गत्वमात्रमत्र विधीयते । तेन तादर्थ्यम् । इतरयागानां तु नैवं तादर्थ्यं श्रुतमिति ॥

केशवार्चा गृहे यस्य न तिष्ठति महीपते ।
तस्यान्नं नैव भोक्तव्यमभक्ष्येण समं मतमिति ॥

स्कान्दे प्रह्लादवाक्यादर्चनस्य नित्यविहितत्वात्तदकरणे प्रत्यवायः । वैष्णवदीक्षया दीक्षितानां तु सर्वेषां तदकरणे नरकपातः श्रूयते । यथा विष्णु धर्मोत्तरे-

एक कालं द्विकालं वा त्रिकालं पूजयेद्धरिम् ।
अपूज्य भोजनं कुर्वन्नरकानि व्रजेन्नर इति ।
अपूज्य पूजामकृत्वा । नञ् समासेऽपि ल्यबार्षः।
मुहूर्त्तं वा मुहूर्त्तार्द्धं यस्तिष्ठेद्धरिमन्दिरे ।
स याति परमं स्थानं किमु शुश्रूषणे रता इत्यत्र शुश्रूषणमर्चनमेव ।
श्रीविष्णोरर्चनं ये तु प्रकुर्वन्ति नरा भुवि ।
ते यान्ति शाश्वतं विष्णोरानन्दं परमं पदम् ॥
इत्यनेनैकवाक्यत्वात् ।

अथ द्वात्रिंशत् पूजापराधा लिख्यन्ते ।

द्वात्रिंशदपराधास्तु पूजा वैगुण्यकारकाः ।
तान् वक्ष्यामि यथा पूर्वं शृणुध्वमवधानतः ॥
अङ्गुष्ठमर्दनं देवे ह्यधः पुष्पसमर्पणम् ।
अङ्गुल्यग्रैर्जलक्षेपो मौनं व्यग्रमनस्कता ।
अप्रक्षालितपादेन प्रवेशो देवमन्दिरे ।

एरण्डकपलाशस्थैः कुसुमैः पूजनं तथा ।
पूजनं चासुरे काले ऽभक्त्यान्नादिनिवेदनम् ।
वातमूत्रादिसंरोधं कृत्वाऽनाचम्य पूजनम् ।
निरासनेन या पूजा तथा प्रावृत्य कम्बलम् ।
मार्त्तिके भाजने यत्र धूपदीपनिवेदनम् ।
भूताष्टम्योरनक्तं च भोजनं हरिवासरे ।
स्यूतार्द्रवाससा पूजा स्पृश्या ऽस्पृश्येन पूजनम् ।
दक्षिणास्येन या पूजा विना तीर्थग्रहं भुजिः ।
अपहृनीलवस्त्रेण त्वरया च प्रपूजनम् ।
मन्त्रतन्त्रक्रियालुप्तमजीर्णान्नेन पूजनम् ।
उत्थायोत्थाय या पूजा व्यापारान्तरसंसृता ।
स्पृष्ट्वा दीपमनाचम्य पूजनं चानृतेन यत् ।
याचितैः साधनैः पूजा चैकवस्त्रेण पूजनम् ।
एतैर्विरहिता पूजा सापूजा भगवत्प्रियेति ।

भगवन्मन्दिरनिर्माणादिकमप्यर्चन एवान्तर्भवति । तत्फलं यथा विष्णुधर्मे—

कुलानां शतमागामि समतीतं तथा शतम् ।
कारयन् भगवद्धाम नयत्यच्युतलोकतामित्युक्तम्।

अर्चनमाहात्म्यञ्चासाधारणम् । यत उच्यते—

तुलसीदलमात्रेण जलस्य चुलुकेन च ।
विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सलइति

अत एवार्चनमपरभक्तिमतो विशेषेण विधीयते। यथा—

भक्तियोगे ऽपरे वापि जाते सर्वार्थविन्मुनिः।
कर्मज्ञानविरागादींस्त्यक्त्वा कृष्णं भजेद् बुधः।
विश्वरूपं हरिं ध्यायन् कुर्वन् हिंसाविवर्जिताम्।
क्रियां तेनैव धर्मेण कृष्णमर्चेत धर्मविदिति।
पूजां समुद्यतं कर्त्तुं यो वारयति मूढधीः।
तस्य माता पिता बन्धुः सर्वे नरकभागिन इति चात्र स्मर्त्तव्यम्।

अथ वन्दनाङ्गन्निरूप्यते—पूजाकालबहिर्भूतनमस्कारो गुरुशालग्रामशिलाप्रतिमा भगवद्भक्तानां वन्दनम्। तेनाऽमङ्गलनाशः। ममाद्याऽमङ्गलं नष्ट मित्याद्यक्रूरोक्तेः। तत्ते ऽनुकम्पामित्यादि ब्रह्मोक्तेः। एकोऽपि कृष्णस्य कृतः प्रणाम इत्याद्युक्तेश्च मुक्तिध्रौव्यम्। पतितः स्खलितो वेत्याद्युक्तेः सर्वपापमोक्षश्च।

अथ दास्याङ्गन्निरूप्यते—परमेश्वरस्य दासभावेन प्रीतिजनकं दास्यम्। दासानान्न किञ्चिद् दुर्लभम्। यन्नामश्रुतिमात्रेणेत्यादि दुर्वाससउक्तेः। तथापि—

न धर्मं काममर्थं वा मोक्षं वा वरदेश्वर।
प्रार्थये तव पादाब्जदास्यमेवाभिकामये॥

इत्यादि वचोभि र्दास्यमेव प्रार्थ्यते। दास्यभजने श्रीपतावेव निर्बाधं स्वामित्वं पर्यवसन्नम्। तदुक्तं ब्रह्मवैवर्त्ते—

रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः।
ब्रह्मा मामाश्रितो राजन्नाहं कंचिदुपाश्रितः।
ममाश्रयो न कश्चित्तु सर्वेषामाश्रयो ह्यहमिति॥

यस्माज्जीवमात्रस्य भगवद्दास्यं धर्म स्तस्मात् नास्तिक्यादिना तदनभ्युपगमो ऽश्रेयस्करः। अत एवोक्तं स्वर्गापवर्गदुःखानां कोऽपीशो ऽभ्युपगम्यतामिति (क)।

---

(क) महेशानुगृहीतो ऽल्पो ऽप्यनल्पान्यपि भूरिशः।
सदा करोति कार्याणि नान्यः कोऽपि भवादृशः।
महेशप्रेरितैरेव नरैरप्यसरै रपि।
क्रियते खलु कार्याणि नाना रूपाणि सादरम्।
भवादृशा महेशेन यदि न प्रेरितास्तदा।
शक्तास्तृणाग्रमप्यल्पं नैव चालयितुं सुराः।
परतन्त्रैर्भवद्भिस्तु महेशप्रेरणं विना।
क्रियन्ते यदि कार्याणि तदानीशं जगद्भवेत्।
जगद्यदि भवेद्देवाः सर्वमेतदनीश्वरम्।
तदा क्षित्यादिके कार्ये को वा कर्त्ता भविष्यति।
कार्याणि तदनीशानि ह्यद्भवेन्न तु वस्तुतः।
कर्त्तारमनपेक्ष्यैव कार्यं क्वापि न जायते।
भवादृशानामज्ञानां जगत् कर्त्तृत्वकल्पने।

जीवानां भगवद्दास्य समर्थनपराण्यपराण्यपि वाक्यानि यथा—

दासभूताः स्वतः सर्वे ह्यात्मनः परमात्मनइति ।
स्याज्जीवितेच्छा यदि ते स्वसत्तायां स्पृहा यदि।
आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मरेति।
दासभूतमिदं सर्वं जगत् स्थावर जङ्गमम् ।
श्रीमान्नारायणः स्वामी जगतां प्रभुरीश्वरः इतिच।

अतो महान्तस्तु भगवद्दास्यमेव स्पृहयन्ति। न तु स्वातन्त्र्यम् । श्रीकृष्णदास्यं विना निर्भयपद-लाभासंभवश्च । पश्ये न वीतभयमित्यादिना-तदुक्तेः ।

श्रीकृष्णदासा दुर्जयामपि मायां तरन्तीत्युक्त-मुद्धवेन—त्वयोपभुक्तस्रगित्यादिना ।

दास्ये द्वैतभावस्य परमावश्यकतेति तत्र ।

दासोऽहं परमेशस्य स मे नाथः सतां पतिः ।
इत्येवं मुक्तिदे द्वैते त्वहन्ता ममते वरे—

---

बाह्योऽतिस्फुट एवातो जगत्कर्त्ता महेश्वरः ।
शिवः चित्याद्युपादान ज्ञानवानत एव सः ।
जगदीश इति ख्यातः स विश्वेश इति श्रुत इत्यादि वचनान्यत्रानुसन्धेयानि ।

इत्युक्ते अहन्ताममते उचिते एव (२८९)। यत एव चैवं तस्मात्।

श्रीमते विष्णवे तुभ्यं दास्यं सर्वं करोम्यहम्।
देशकालाद्यवस्थासु सर्वासु कमलापत इत्येव वक्तव्यम्।

अथ सख्याङ्गन्निरूप्यते-समानः ख्यायत इति सखा। सखिलक्षणं च समप्राणम्। यथोक्तम्-

अत्यागसहनो बन्धुः सदैवानुमतः सुहृत्।
एकक्रियं भवेन् मित्रं समप्राणः सखा मत इति।

सख्युर्भावः कर्म वा सख्यम् विश्वासपूर्विका मित्रवृत्तिः सख्यम्। हरिसख्यं परमैश्वर्यसख्यप्रद मिति सुदामविप्रचरितेन प्रख्यापितम्।

अहो भाग्यमहोभाग्यं नन्दगोपव्रजौकसाम्।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनमिति

ब्रह्मणापि हरिसख्यमभिनन्दितम्। येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्ट मित्यादिना तस्यैव मे सौहृदसख्यमैत्री दास्यं पुन र्जन्मनि जन्मनि स्यादित्यादिना च सख्यभावेन भजनस्य परमोत्कृष्टत्वं वर्णितम्। मयि निर्बद्ध-

(२८९) उक्त प्रकारेणाहं परमेशस्य दासः। स सतां पति र्मे नाथ इत्येवं ये अहन्ता ममते ते द्वे तु मुक्तिदे तस्माद्दूरे उपादेये न तु परिहार्ये इति॥

हृदया इत्यादिपद्यै सत्स्त्रीदृष्टान्तेन सतां सख्यात्मिका भक्तिर्लक्ष्यते । सुग्रीवं प्रति त्वयि किञ्चित्समापन्न इत्यादि विभीषणविषये मित्रभावेन संप्राप्तमित्यादि रामवचश्च परमेश्वरस्य सख्य भजनानुकूल्यं प्रकटयति ।

अथात्मनिवेदनाङ्गं निरूप्यते–तच्च देहादिशुद्धात्मपर्यन्तस्य सर्वतो भावेन तस्मिन्नेवार्पणम् आत्मार्पणे च तदंशोऽहं तदाज्ञयैव सर्वं करोमीति दृढा बुद्धिर्जायते । इदमात्मार्पणं गोविक्रयवज्ज्ञेयम् । यथा गवि विक्रीतायां तदीययोगक्षेमचिन्तायामभिनिवेशो न भवति विक्रेतुः । एवमात्मार्पणोत्तरमभिमानत्यागात् न किमपि कर्त्तव्यमवशिष्यते आत्मानमर्पयितुः । कृतकृत्यत्वात् । यथोक्तं भक्तिविवेके–

चिन्तां न कुर्याद्रक्षायै विक्रीतस्य यथा पशोः ।
तथार्पयन् हरौ देहं विरमेदस्य रक्षणादिति ।
एतादृशं भक्तं लक्ष्यीकृत्यैव गीतायामुक्तम् ।
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यन्न विद्यत इति ।

ज्ञानामृतेन तृप्तस्येत्यादि तु परम्परया भक्त्यैव समर्थनीयम् ॥

इति नवधा साधनभक्तिर्निरूपिता। अहो निःश्रेयसैकनिःश्रेणी श्रीभगवद्भक्तिः संस्कारहीनजातीनपि कांस्कान्न संतारयति। गोगोपगोपीदेवदानवनिषादगृध्रशाखामृगऋक्षराक्षसा घण्टाकर्णादयः पिशाचाश्च भक्त्या यथा सुखं संसारसागरमुत्तेरुः। तस्मात् सर्वथैव भगवति तत्परैर्भवितव्यम्। यतः संसृतिविध्वंसिनी भक्तिरेव। स्वधीतमपि वेदवेदाङ्गं यस्य भगवति रतिरूपं ज्ञानं नोत्पादयेत्तर्हि तस्योदरदरीपूरकशिल्पचातुरीमात्रं तन्न पुनः पुरुषार्थपर्यवसायि योग्यताचमत्कारजनकमिति वेदवेदान्तसिद्धान्तः।

ननु-बुद्धिरुत्पद्यते तादृग्व्यवसायोऽपि तादृशः। सहाया स्तादृशा एव यादृशी भवितव्यतेत्युक्ते र्भवितव्यतया भक्ति र्भाविनी चेद्भविष्यत्येव। किं तवपिष्ट पेषणरूपाभिर्वाग्भिरिति चेदुच्यते-

शास्ताभिगोप्ता नृपतिः प्रजानां यः किङ्करो वै न पिनष्टि पिष्टम्। स्वधर्ममाराधनमच्युतस्य तदीहमानो विजहात्यघौघमिति।

श्री जड़भरतोक्ति मनुसृत्यास्माकमपि तद्वाचामीश्वराराधनरूपत्वात् न मोघतेति।

ननु सर्वेषां भक्तत्वे तेन मुक्तत्वे च प्रतिकल्प-

मुक्तेषु जीवेषु जगदुच्छिन्नसृष्टिकं स्यात्। तथा च सति सम्बन्धिनोरनुयोगिप्रतियोगित्वात् जगतः सान्तत्वादीश्वरत्वमपि [सान्तं] भवेदीश्वरमपीश्वरत्वात् स्खलयेदिति चेन्न। ब्रह्माण्डेष्वनन्तकोटिषु जीवानामनन्तत्वात्। प्रकृतावप्यनन्तायां क्वचित् क्वचित्कल्पे सुप्तोत्थितानां जीवानामप्यनन्तत्वादिति भावः। यथोक्तं श्रीविष्णुधर्मोत्तरे प्रश्नोत्तराभ्याम्। तत्र श्रीवज्रप्रश्नः॥

एकैकस्मिन्नरे मुक्तिं कल्पे कल्पे गते द्विज ॥
अभविष्यज्जगच्छून्यं कालस्यादेरभावतः॥

तदुत्तरं श्रीमार्कण्डेयेन दत्तम्। मार्कण्डेय उवाच

जीवस्यान्यस्य सर्गेण नरे मुक्तिमुपागते।
अचिन्त्यशक्तिर्भगवान् जगत् पूरयते सदा।
ब्रह्मणा सह मुच्यन्ते ब्रह्मलोकमुपागताः।
सृज्यन्ते च महाकल्पे तद्विधाश्चापरे जना इति।

सृष्ट्यादि प्रयोजनं च व्यासमते लीले त्यक्त्वा प्रत्याख्यातम्। शाण्डिल्यमते च कारुण्यमिति परिनिष्ठापित मिति प्रागेव प्रदर्शितम्।

अथ प्रयोजन (मुक्ति) स्वरूपनिरूपणम्।

तत्र केचित्तु मन्दा नरकगामिनः पञ्चमकारसेवनमेव मुक्तिमाहुः।

अन्ये शिश्नोदरपरायणा देह एवात्मा । तन्नाश एव मुक्तिः । यथेष्टाचरणमेव धर्मः । लोकान्तराभावेन पापपुण्याभावाद्येन केन प्रकारेण विषयसौख्यसंपादनमेव पुरुषार्थ इति । तस्मादृणं कृत्वा घृतं पिबेत् प्रत्यक्षमेकमेव प्रमाणमिति च सिद्धान्तयन्ति ।

तेष्वपि यत्किञ्चिच्छास्त्रैकदेशज्ञास्तु दुष्कृतनिवृत्तिमेव मुक्तिमाहुः । तदुपायं च-

नापः पुनन्ति पापानि न शैला नापि चाश्रमाः ।
आत्मा पुनाति पापानि यदि पापान्निवर्त्तत इति

साधीयस्कल्पं स्वीकुर्वते ।

अन्ये तु यश एव तामाहुः । तेषु च श्रेष्ठा एकविंशतिदुःखप्रध्वंसमेवापवर्गं भाषन्ते । एकविंशतिदुःखानि च यथा-सुखदुःखरागद्वेषभयाभिमानप्रमादोन्माद शोकमोहलोभमात्सर्येर्ष्यावमानक्षुत्पिपासाधि व्याधिजन्मजरामरणादीनीति।

अन्ये तु दुःखनिवृत्त्या सुखाप्तिमेव ताम्प्रचक्षते । केचित्लिङ्गदेहापगमेन परमात्मनि जीवात्मनो लय एव मुक्तिरिति वेदयन्ते ।

अपरे तु पण्डिता निरतिशयानन्दाऽऽविर्भावरूपामविद्यानिवृत्तिमेव मुक्तिं संगिरन्ते । एवं

वाचस्पति रुद्रजैमिनि गौतमकणादकपिलपतञ्ज-
लि व्यासादिभिर्विरचितेषु चार्वाकतन्त्रागममी-
मांसान्यायवैशेषिकसांख्यपातञ्जलवेदान्तेषु स्थूल
दृष्ट्यानेकान्तां मुक्तिमवोचंस्ते ते प्रास्थानिकाः
ग्रन्थविस्तरभिया नेह तत्तत्खण्डन मण्डनानि
पृथक् प्रतन्यन्ते । परमेकमात्रेण श्रीकृष्णचन्द्र
वचनेन सर्वविवादभञ्जनं क्रियते-

मन्माया मोहितधियः पुरुषाः पुरुषर्षभ ।
श्रेयो वदन्त्यनेकार्थं यथाकर्म यथारुचीति ।
सिद्धान्तस्तु यथाह श्रीप्रियादासाचार्यः ।
स्वाभाविकी पराभक्तिः सैव मुक्तिरनुत्तमा ।
इत्याह श्रुतिसारज्ञो मुनीशो व्यासनन्दनः ॥

तदुपायश्च-

वैकुण्ठपदसंप्राप्ति र्भक्त्या केवलया हरौ ।
न ज्ञानेन न योगेन भवेज्जन्मशतै रपीति ।

भगवद्भक्तिरेव निर्णीतः । ऋषभदेवेनाप्युक्तम्-

एवं मनः कर्मवशं प्रयुङ्क्ते अविद्ययात्मन्युप-
धीयमाने । प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते
देहयोगेन तावदिति । तस्माद्-

एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः ।

एकान्तभक्तिर्गोविन्दे यत् सर्वत्र तदीक्षणम् ।

इति वेदान्तराद्धान्तः ।

अतोऽकामेन मनसा रसाख्यं तमहं भजे ।

योऽसुरैर्नादृतो ऽसद्भिरादृतो देवसत्तमैरिति (२९०)

तोष्टव्यम् ॥

## अथाधिकारि निर्णयः ।

ग्रन्थादेर्मुक्तिप्रयोजनादिभिः सह प्रतिपाद्यप्रतिपादकभावादिः सम्बन्धः सर्वविद्वज्जनविदित इति न स लिख्यते । अधिकारी तु निर्णीयप्रदर्श्यते ।

तत्रात्मज्ञानाधिकारी तु शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येदिति श्रुत्या दर्शितः । भक्त्यधिकारी च-

यः केनाप्यतिभाग्येन जातश्रद्धोऽस्य सेवनात् ।

नातिसक्तो न वैराग्यभाग ऽस्यामधिकार्यसौ ।

यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।

---

(२९०) कामेनेत्युपलक्षणम् । कामक्रोधादिरहितेनेत्यर्थः । रसाख्यम् । रसो वै स इति श्रुतेः रसात्मकम् । असुरैर्नादृतः । शास्त्रज्ञानाभावाद्दुर्बुद्धेरपि । अतो भगवदनादरपरा एवासुरास्ते देवासुरमनुष्यादयो ये के वा स्युः । तद्भक्ता एव च देवोत्तमाः । तेऽपि ये केचन स्युरिति ॥

न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः।
सर्वेऽधिकारिणो ह्यत्र हरिभक्तौ यथानृपेत्यादि
वचनैः प्रदर्शितः ।

ननु भक्ति वैदिकी पौराणिकी वा । आद्ये
तस्यास्तर्हि द्विजाधिकारत्वमेव स्यान्न स्त्रीशूद्रा-
धिकारत्वम् । द्विजस्यैव हि वैदिकेष्वर्थेष्वधि-
कारात् । द्वितीये तु स्त्रीशूद्राधिकारत्वमेव स्यात्।
विशेषतः स्त्रीशूद्राद्यर्थमेव हि पुराणनिर्माणात् ।
स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरेति वच-
नादित्याशङ्क्य वेदेतिहासपुराणैः (२९१) भक्तेः
प्रतिपादनात् तदुभयार्थरूपायां भक्तौ सर्वेषा-
मेवाधिकारो न वेदाध्ययनादाविव त्रैवर्णिका
नामेव । संसारजिहासारूपाधिकारस्य सर्वेषां
समत्वात् । एतदेवाभिप्रेत्य शाण्डिल्येनोक्तम्-
आनिन्द्ययोन्यधिक्रियते पारम्पर्यात् सामा-
न्यादिति ।

सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः ।

---

(२९१) इतिहासपुराणैरित्युक्तिस्तु कर्माथंक मन्वादि
स्मृतिभ्योऽपि भारत श्रीमद्भागवतादीनामाधिक्यख्यापनायेति
बोध्यम् ॥

सर्वे भद्राणि पश्यन्तु मा कश्चिद्द दुःखभाग्भवे
दित्युक्तलक्षणाप्राणि दुःखध्वंसनतत्परा
दयैव भक्तिमार्ग प्रदर्शने मूलकारणम् ।

तथा चाखिललोकवत्सलेन भगवता बादरायणेन

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ।
वेदस्याध्ययनं हीदं तच्च कार्यं परं स्मृतमिति

भारते ब्राह्मणद्वारा साङ्गश्रुतिस्मृतीतिहास पुराणादि श्रवणादिना चतुर्णामपि वर्णानामभ्युदय निःश्रेयससंपादनमुपदिष्टम् ।

सर्वसत्व दयालुत्वं सर्वेषां च हिते रतिः
भगवतः परममाराधनम् । तथैवोक्तम् ।

तप्यन्ते लोकतापेन साधवः प्रायशो जनाः ।
परमाराधनं तद्धि पुरुषस्याखिलात्मनः ॥

तथा च ।

नातिप्रसीदति तथोपचितोपचारै
राराधितः सुरगणै र्हृदि बद्धकामैः ।
यत् सर्वभूतदयया सदलभ्ययैको
नाना जनेष्ववहितः सुहृदन्तरात्मा ॥

अतो हि प्रार्थ्यते ।

यन्नः स्वधीतं गुरवः प्रसादिता
विप्राश्च वृद्धाश्च सदानुवृत्त्या ।
आर्या नता सुहृदो भ्रातरश्च
सर्वाणि भूतान्यनसूययैव ॥
यन्नः सुतप्तं तप एतदीश
निरन्धसां कालमदभ्रमप्सु ।
सर्वं तदेतत् पुरुषस्य भूम्नो
वृणीमहे ते परितोषणाय ॥

भो भगवन् अखण्डब्रह्माण्ड मण्डलाखण्डल श्रीमन्महाराजाधिराज द्वारकाधीश परमहंसपथाधिगम्यचरणकमल कमलजशितिकण्ठाभरणीभूतगुणगण गणनातीतलोकोत्तरप्रभाव भो वरद आश्रितवर्गवर्द्धन गोवर्धनधारिन् भक्तवत्सल दीनबन्धो दयासिन्धो स्वयं त्वमेव भक्तानां भवदनुस्मृतिविधिविरोधिनी विषयवासनावल्लरीः समंतादपनीय परमसुखास्पदनिजपादारविन्दैकनिष्ठामेव निष्कपटं स्रष्टुमर्हसीति वारं वारं विज्ञप्तिः ॥ भो भगवन् चकोरचंचलविलोचन मधुमधुरवचन कुटिलकचविलसद्वदन वदनाविधूतमदन सुरदन बहुललितविहार हारविलसद्

हृद्भवन विविधप्रेमभाजनसुहृज्जन श्रुतिकदम्ब-प्रतिपाद्यमानोत्तमोत्तम सुखरूपिका सर्व सिद्धि-भ्यो ऽपि गरीयसी भवदीया भक्तिः । भव-त्प्रसादैकसमधिगम्या मम यथा संपद्येत तथैव भवता विधेयम् । हे नाथ नाथय मे मनोरथं यथा भवदीयचरणारविन्दे एव रतिमुद्वहन् प्रारब्धकर्मफलमुपभुञ्जानः समयं यापये ॥ जय जय जगज्जनक जगत्पालक जगदाधार सत्यसंकल्प देवदेव सर्वान्तर्यामिन् परममङ्गल महाप्रभो परमानन्दविधायक शुभदायक मुनि-मनोरंजन भवभयभंजन भक्तानन्दविवर्धन कलि मलमर्दन प्रियजनपरितोषक विश्वपरिपोषक मय्यधमे कृपां कुरु त्वां सुधापारावारमनाहृत्य विषयगरलपल्वलोदके मग्नं क्लेशभागिनं दीनं मामुद्धर भो अशरणशरण रक्ष मां संसार-सागरात् ।

त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव
त्वमेव सर्वं मम देव देव ॥

अजातपक्षा इव मातरं खगा
स्तन्यं यथा वत्सतरा क्षुधार्ताः ।
प्रियं प्रियेव व्युषितं विषण्णा
मनो ऽरविन्दाक्ष दिदृक्षते त्वाम् ॥

श्रीकृष्णार्पणमस्तु ॥

इति श्री श्रीकृष्णचरणानुध्यानसेवन भाविता-
न्तःकरण मालवीय चतुर्वेद प्रेमधरात्मज-
व्रजनाथशर्म संगृहीतः सिद्धान्तदर्पणः
सम्पूर्णः ॥

श्रीगणेशाय नमः ॥

आसीद्विष्णुप्रसादश्श्रुतिमननमनास्तीर्थराजे महीयान् श्रीमान्सन् मालवीयः सुरगुरुरिव यः शिश्रिये सर्वदाग्निम् । दातारो भूरिभूपा अपि करकमलं पस्पृशुर्नो यदीयं विख्यातः कीर्त्तिमालः सुरललिततनुः स्वीयशालासु नित्यम् ।

तज्जो मालवविप्रवंशतिलको बाल्येऽपि श्रीकृष्णहृद् यं श्रीप्रेमधरं जुगुर्नरगणाः पूज्यं प्रयागे मुनिम् । शास्त्रोक्तैः शुभकर्मभिः सुकृतिनः कर्तव्यतां कर्मणः कृत्स्नं बोधयतीव यो ऽकृतशुभं भक्त्या कृतार्थो हरेः ॥

धर्मादीनिव संख्यया हि चतुरः पुत्रान् तपःश्रीजुषः संप्राप्याधिक प्रेमभृन्मधुरिपौ लोकाद्विरक्तः सुधीः ॥ भक्तिं संजनयन् सतां हृदि सदा स्वीयैः सुधासूक्तिभिः यो गोलोकमगात् जनेश्चतुरशीतयब्दे हरिं संस्मरन् ॥

पुत्रस्तस्य विचिन्त्य विष्णुचरणांभोजप्रदां सद्विदां दुर्वादैरभिखण्डितां कलियुगे भक्तिं जनानां हृदि ॥ विज्ञः श्रीब्रजनाथ इष्टदयया भक्तिप्रदं पश्यतां चातुर्वैद्यवरो ऽकरोदिममतिग्रन्थं सतां प्रीतये ॥

साङ्केन्दुपञ्चबाणाब्दे नभः शुक्ले रसे तिथौ ।
वारे रवे रयं पूर्तिं गतः सिद्धान्तदर्पणः ॥

---